# प्रकाशकस्य निवेदनम् ।

ॐ श्रीगुरवे नमः ।

"यं शैवाः समुपासते शिव इति ब्रह्मेति वेदान्तिनो
बौद्धा बुद्ध इति प्रमाणपटवः कर्तेति नैयायिकाः ।
अर्हन्नित्यथ जैनशासनरताः कर्मेति मीमांसकाः
सोऽयं वो विदधातु वाञ्छित-फलं त्रैलोक्य-नाथो हरिः ॥"

हृषीकेशस्थ-शिवानन्दयाश्रमनिवासिना भगवता आचार्येण श्रीमता स्वामिना पूर्णानन्देन साधकानां हितार्थाय काले काले विभिन्न-स्थानतः प्रेषितानां धर्मोपदेश-पूर्णानां लेखानां संग्रहेण 'वेद-वाणी'-समाख्याता स्त्रयो ग्रन्था बङ्गभाषायां संमुद्र्य प्रकाशिताः सन्ति । तत्-कृतः 'Yoga and Perfection' इत्यभिधान आङ्गल-भाषामयोऽपरोऽपि ग्रन्थः प्रकाशितोऽस्ति । साम्प्रतं तेनैव महात्मना प्रायेण द्विसहस्रसंख्यै रनुष्टुप्श्लोकै ग्रंथितः "पूर्णज्योति" र्नाम "महाग्रन्थः" सुखबोध्य-संस्कृत-भाषया निरमायि । अयं तु विधातु र्विश्व-रूपस्य इच्छा-प्रभावत स्तस्मात् ज्योतिर्मयाद् देवात् ज्योतो-रूपेण निर्गतः—इत्युक्तं ग्रन्थ-गर्भे ग्रन्थ-परिचय-प्रदान-प्रसङ्गेन । वर्ण-धर्माश्रम-निर्विशेषेण सर्वेषां नर-नारीणां गन्तव्य-मार्गान् स्वकीय-रश्मिभि रुद्भाषयन्, धर्म-राज्यस्य निगूढ़-रह-

स्यानि परिप्रकाशयन्, साध्य-साधन-तत्त्वानि सुस्पष्टं विनिर्दिशन्, स्वीय-पूर्णज्योतिः-प्रभावेण साधकानां मोहान्धतामसं दूरीकुर्वन् विश्व-मङ्गलैक-प्रयोजनः सार्थक-नामाऽयं शास्त्र-ग्रन्थो—विश्वमूर्त्ति-पूजनोपचार-दीपरूपः—तल्लीन इव विराजते। "ॐ सुप्रकाशो महादीपः सर्वत स्तिमिरापहः। स बाह्याभ्यन्तर-ज्योतिः···॥" "चतुर्वर्ग-प्रदो दीपः।"—अन्येऽस्मिन् चतुर्वर्ग-प्राप्त्युपायाः—सम्प्रदाय-निर्विशेषेण सर्वेषामेव यावतीय-कृत्यानि निबद्धानि। सर्वोपदेश-पालनाशक्तानामपि केवलं पठनेनैव भूयान् उपकारो भविष्यति।

गम्भीरार्थ-समलङ्कृते शास्त्रेऽस्मिन् अंश-चतुष्टय मस्ति—पूर्वाह्न-मध्याह्न-अपराह्न-सायाह्ना इति। पूर्वाह्ने ब्रह्मचर्य-जीवनं, मध्याह्ने गार्हस्थ्य-जीवनम्, अपराह्ने योगि-जीवनं सायाह्ने च भिक्षु-जीवनं प्राधान्येन वर्णित मस्ति। प्रथम-जीवनं तथा यापनीयं, यथा उत्तर-जीवनं साधनोपयोगि भवेत्। गृही तथा जीवनं नयेत्, यथा काले स योगमार्गे उन्नीयते। योग-मार्गे स्थितोऽसौ तथा चलति, यथा परिणामे स सन्न्यास मवलम्ब्य पूर्ण-ज्योतिः सम्पद्यते।

पूर्वाह्ने—अनुबन्ध-चतुष्टयं संक्षेपेण सूचित मस्ति। सदा-चार-प्रयोजनं, विद्याभ्यासः, ईश्वर-परिचयः, दीक्षा-माहात्म्यं, शक्तिपात-पूर्वक-दीक्षा-लक्षण मित्यादीन्यपि वर्णितानि।

मध्याह्ने—नित्य-नैमित्तिक-कर्तव्यानि, न्यायानुसारेण अर्थो-

पार्जनं, पोष्य-प्रतिपालनं, विश्व-सेवा, इष्ट-देवार्चनं, देव-दर्शनं, पञ्चयज्ञानुष्ठान-समन्वित-दिनचर्या, तीर्थ-सज्जन-सेवा, अधिकारानुसारतो योगाभ्यास इत्यादीनि कथ्यन्ते ।

अपराह्णे—चक्राणां वर्णनं, कुण्डली-बोधनं, चक्रे चक्रे अनुभूतयः, बहुविधाः साधन-सङ्केताश्च वर्ण्यन्ते ।

सायाह्ने—भिक्षु-जीवनं तथा भिक्षु-कर्तव्यानि लिख्यन्ते । योगेन स्थिर-चित्तो, लब्ध-ब्रह्मानुभूतिर्मुमुक्षुः श्रीगुरोः चरणं शरणं कृत्वा विरजां दीक्षां लभते । ततश्च शिव-जीवैक्यरूपा सम्विदुत्पद्यते । ज्ञान-योगाभ्यासतोऽविच्छिन्न-तपश्चरणात् स काले 'परमेण समाधिना' ब्रह्म-प्रकृति-जीवानां याथार्थ्य-ज्ञानं लभते । अभ्यासेन वशीकृत-समाधिः स मायातीतः परात्पर एव भवति । एषाऽवस्था स्वाभाविकी भवति । स च यत्न-हीनं 'सदा-भानं' लब्ध्वा 'ब्रह्मैव भवति' । एतत् सर्वमपि सायाह्ने सविस्तरं वर्णितम् ।

ग्रन्थेऽस्मिन् 'कृष्णः' 'रामः' 'शिवः' 'दुर्गा' 'ब्रह्म' इत्यादीनि बहून्येव नामानि उक्तानि । तानि सर्वाण्येव अद्वितीय-परमेश्वरस्य वाचकानि, न तु देवता-विशेषाणाम् ।

ग्रन्थस्य भाषा सरला, सुमधुरा, सुबोधा च । तथापि अपेक्षाकृत-दुर्बोधांशे टीकाऽपि संयोजितास्ति । इयं समधिक-जिज्ञासूनां महते उपकाराय भविष्यति । तथापि बहु-भाव-मयानां श्लोकानां समस्ताशयाः क्षुद्र-टीका-मुखेन न व्यक्तीभवन्ति । भावुकानां तथा लब्धानु-

भूतीनां टीकातिरिक्तान्यपि बहूनि ज्ञातव्यानि ग्रन्थे विद्यन्ते ।

परिशेषे प्रार्थयामः—अस्य ग्रन्थस्य सेवका स्तदन्त-र्निहित-शक्त्यनुभावेन…शिवं ज्ञात्वा…शिवं व्रजन्तु ; प्रार्थयामः—

"सर्वेषाञ्च शिवं भूयात्, पूर्णानन्दः सदाऽमलः ।
शिवस्यैव प्रसादेन शक्तिपातानुभावतः ॥"

ओम् ।

---

# सूची-पत्रम् ॥

( संख्या श्लोकाङ्क-सूचिका । )

## पूर्वाह्णः ॥

### प्रथमोल्लासः ।



### द्वितीयोल्लासः



### तृतीयोल्लासः ।



### चतुर्थोल्लासः ।

पूर्ण-ज्योतिः ।

पञ्चमोल्लासः ।



षष्ठोल्लासः ।



सप्तमोल्लासः ।



अष्टमोल्लासः ।



## मध्याङ्कः ।

प्रथमोल्लासः ।

## द्वितीयोल्लासः।



## तृतीयोल्लासः।



## चतुर्थोल्लासः।

पञ्चमोल्लासः ।



षष्ठोल्लासः ।



सप्तमोल्लासः ।

अष्टमोल्लासः।



नवमोल्लासः।



दशमोल्लासः।



एकादशोल्लासः।



द्वादशोल्लासः।

त्रयोदशोल्लासः ।



चतुर्दशोल्लासः ।



## अपराह्णः ।

प्रथमोल्लासः ।



द्वितीयोल्लासः ।

सप्तमोल्लासः।



अष्टमोल्लासः।



नवमोल्लासः।



दशमोल्लासः।

पूर्ण-ज्योतिः।

१४ बन्ध-मोक्षौ—पूर्णज्ञानेनैव मल-विनाशः, सर्व-भेद-निराशश्च··· १५-२२।

षष्ठोल्लासः।

जगतः भ्रान्तिमयत्वम्—सर्वेषां ब्रह्मरूपत्वम्···१-२३ आत्म-चिन्तनम्···२४-२८।

सप्तमोल्लासः।

जगन्मिथ्यात्व-निश्चयः···१-१४ ज्ञानादेव मुक्तिः—ज्ञानहेतुः १५-१८ ब्रह्मध्यानम्—"ध्यानं निर्विषयं मनः"···१९-२४ ध्यान-फलम्···२५।

अष्टमोल्लासः।

जगति सत्यबुद्धि-त्यागादेशनम्—ब्रह्मभावनया विषयस्य विषयत्व-परिहारोपदेशः···१-६ सत्-चित्-आनन्द-नाम-रूपम्—रूपान्नाम्नः चित्त-समुद्धरणोपदेशः···७-१६ आत्म-ध्यानम्···१७-२३।

नवमोल्लासः।

सर्वेषां ब्रह्मत्व-निश्चयः···१-१३ ध्यान-योगोपदेशः···१४-२५ पराद्वय-दर्शन-फलम्—मोक्षः···२६-२८।

दशमोल्लासः।

जीवत्वस्य इन्द्रजालवत् मिथ्यामयत्वम्···१-४ देहबुद्ध्या जीवत्वम्—देहमुक्त्या शिवत्वम्···५-११ चित्तस्य चिज्जड़त्वम्···

---

# पूर्ण-ज्योतिः ॥

## पूर्वाह्णः ।

### प्रथमोल्लासः ।

श्रीगुरुं परमाद्वैतं स्वतन्त्रं परमं-शिवम् ।
अखण्डं सच्चिदानन्दं परात्मानं परेश्वरम् ॥ १ ॥
सर्वगं सर्व-कर्तारं सर्वं सर्वावभासकम् ।
सर्वावलम्बनं शान्तं ब्रह्म पूर्णं नमाम्यहम् ॥ २ ॥

श्रीः—[शोभा । विभूतिः । इति मेदिनी ॥ अधिकारः । प्रभा । कीर्तिः । इति धरणिः ॥ सिद्धिः । इति शब्द-रत्नावली ॥] "देवं गुरुं गुरु-स्थानं क्षेत्रं क्षेत्राधिदेवताम् । सिद्धं सिद्धाधिकारांश्च 'श्री'-पूर्वं समुदीरयेत् ॥"

गुरुः—[गॄ + कु] गिरति अज्ञानं यः सः ।

स्वतन्त्रः—स्वाधीनः । स्वच्छन्दः । निरर्गलः । अनन्यापेक्षः ॥ "अस्वतन्त्राः प्रजाः सर्वाः स्वतन्त्रः पृथिवी-पतिः ।" इति नारदः ॥ "अन्य-निरपेक्षता एव परमार्थत आनन्दः, ऐश्वर्यं

स्वातन्त्र्यं, चैतन्यञ्च ।" "स्वातन्त्र्यमेव च अनन्य-मुख-प्रेक्षित्व-लक्षणम् आत्मनः स्वरूपम् ।" इति ईश्वरप्रत्यभिज्ञा-विमर्शिन्याम् ॥

आत्मा—[आ + अत् (नियत-गमने, निरन्तर-गमने प्रापणे च) + मन् ( कर्तरि )] [यः सर्व-व्यापी, स्वं विजानाति च । "नाना-भावैः स्वमात्मानं जानन्नास्ते स्वयं शिवः ।"] चैतन्यम् । स्वभावः । सर्वावभासकं नित्य-शुद्ध-बुद्ध-मुक्त-सत्य-स्वभावं चैतन्यम् । "चैतन्यमात्मा ।" इति शिव-सूत्रे ॥ "चैतन्य मात्मनो रूपं सिद्धं ज्ञान-क्रियात्मकम् । तस्यानावृतरूपत्वात् शिवत्वं केन वार्यते ॥" इति शिवसूत्र-वार्तिके ॥ "इह अचेतितस्य (अप्रकाशितस्य) कस्यापि सत्ताभावात्, चिति-क्रिया सर्व-सामान्य-रूपा (सर्वत्र अस्ति इत्यर्थः) इति ; चेतयते इति चेतनः सर्व-ज्ञान-क्रिया-स्वतन्त्रः, तस्य भावः चैतन्यं सर्व-ज्ञान-क्रिया-सम्बन्धमयं परिपूर्णं स्वातन्त्र्यम् उच्यते। तदेतत् चैतन्यम् (स्वातन्त्र्यम्) एव आत्मा स्वभावः ; विशेषाचोदनात् (अस्यैव आत्मा इति विशेषो न चोदितः, अतः विश्वस्य इति कथ्यते ।) भावाभाव-रूपस्य विश्वस्य जगतः । न हि अचेत्यमानः (अप्रकाश्यमानः) कोऽपि कस्यापि कदाचिदपि स्वभावो भवति ॥" इति शिवसूत्र-विमर्शिन्याम् ॥

परात्मा—परमात्मा । "ब्रह्मेति परमात्मेति भगवानिति शब्द्यते ।" इति श्रीभागवतम् ॥

सर्वगः—सर्व-व्यापी ॥ आत्मा । इति शब्दमाला ॥

सर्व-कर्ता—सर्व-स्रष्टा ॥ सर्वेषां प्रभुः ॥ सर्वः—विश्व-रूपः ।

सर्वावभासकः—सर्व-प्रकाशकः । "तमेव भान्त मनुभाति सर्वं, तस्य भासा सर्वमिदं विभाति ।" इति काठके ॥

अवलम्बनम्—आश्रयः ।

ब्रह्म—[बृन्ह (वृद्धौ, दीप्तौ) + मन्] "यल्लाभा न्नापरो लाभो यत्-सुखा न्नापरं सुखम् । यज्-ज्ञानान्नापरं ज्ञानं तद् ब्रह्मेत्य-वधारयेत् ॥ यद् दृष्ट्वा नापरं दृश्यं यद् भूत्वा न पुनर्भवः । यज् ज्ञात्वा नापरं ज्ञेयं तद् ब्रह्मेत्यवधारयेत् ॥" इति आत्म-बोधः ॥ "सत्यम्, आनन्दम्, अद्वयम्, अमृतम्, एकरूपं, वाङ्मनसोऽगोचरं, सर्वगं, सर्वातीतं, चिदेकरसं, देशकाला-परिच्छिन्नम्, अपादमपि शीघ्रगम्, अपाणि च सर्व-ग्रहम्, अचक्षुरपि सर्व-द्रष्टृ, अश्रोत्रमपि सर्व-श्रोतृ, अचिन्त्यमपि सर्वज्ञं, सर्व-नियन्तृ, सर्व-शक्ति, सर्वेषां सृष्टि-स्थिति-लय-कर्तृ किमपि वस्तु ब्रह्म—इति वेदा वदन्ति ॥"

पूर्णः—[पूर् + क्त] सर्व-परिच्छेदातीतः । सम्यक्-तृप्तः ।

विधातु र्विश्व-रूपस्य तस्येच्छायाः प्रभावतः ।<br>
तस्मा ज्ज्योतिर्मयाद् देवा ज्ज्योती-रूपेण निर्गतः ॥३॥<br>
'पूर्ण-ज्योति'र्महाग्रन्थ स्तन्नाम-शुद्धतां गतः ।<br>
तद्-विश्वमूर्ति-पूजायाम् अस्तु दीपः शिवान्वितः ॥४॥

विधाता—[ वि+धा ( धारणे )+तृ ] विश्वानां धाता। विश्वानां विधान-कर्ता। जगत्-प्रभुः। "सर्वेषां कारणं विधिः।" "धातु र्गति र्विचित्रा च दुर्ज्ञेया भुवन-त्रये।" इति ब्रह्मवैवर्त्ते॥ विश्व-रूपः—"सर्वमेव हरे रूपम्।"

तस्येच्छायाः प्रभावतः—"हरि रात्मा हि भूतानां तस्य यत् प्रतिभासते। तत् तथैव भवत्याशु सर्वं मात्मैव कारणम्॥" इति योग-वाशिष्ठे॥

ज्योतिर्मयः—स्वयंज्योतिः। अखण्ड-चैतन्य-ज्योतिः॥ "ज्योतिषामपि तज्ज्योति स्तमसः पर मुच्यते।" इति गीतायाम्॥

देवः—[दिव् (द्युतौ। क्रीडायाम्।)+अन्] देवता।

ग्रन्थः—[ग्रन्थ्+अ] पुस्तकम्। ग्रन्थना। शास्त्रम्। द्वात्रिंशद्-वर्ण-निर्मितिः। अनुष्टप्छन्दः-श्लोकः। इति हेमचन्द्रः॥

महाग्रन्थः—महान् ग्रन्थः। सच्छास्त्रम्। पवित्रं शास्त्रम्।

तन्नाम-शुद्धतां गतः—परमेश्वरस्य नाम्ना शुद्धतां प्राप्तः।

दीपः—[दीप् (दीप्तौ)+अ] "ॐ सुप्रकाशो महादीपः सर्वत स्तिमिरापहः। स बाह्याभ्यन्तरज्योति र्दीपोऽयं प्रतिगृह्यताम्॥" "ॐ अग्नि-ज्योती रवि-ज्योति श्चन्द्र-ज्योति स्तथैव च। ज्योतिषा मुत्तमो दुर्गे दीपोऽयं प्रतिगृह्यताम्॥" "दीपेन लोकान् जयति दीप स्तेजोमयः स्मृतः। चतुर्वर्ग-प्रदो दीप स्तस्माद् दीपं यजेत् श्रिये॥"

सर्वेषाञ्च शिवं भूयात् पूर्णानन्दः सदाऽमलः ।
शिवस्यैव प्रसादेन शक्ति-पातानुभावतः ॥५॥

पूर्णानन्दः—परिपूर्ण-ब्रह्मानन्दः । [ तैत्तिरीयोपनिषद्-ब्रह्मानन्द-वल्ली द्रष्टव्या । ]

शिवस्यैव प्रसादेन—सृष्टि-स्थिति-संहार-पिधान-अनुग्रह-लक्षणानि परमेश्वरस्य पञ्च कृत्यानि । [तत्र पिधानं नाम संस्कारमात्रतया स्थितस्यापि विलीनीकरणम्, अनुग्रहः स्वात्म-तादात्म्यतयावस्थापनमिति । ] इति ईश्वरप्रत्यभिज्ञा-विमर्शिनी-टीका ॥ "एष च अनुग्रह-लक्षणोऽन्त्यः पञ्चमः पारमेश्वरः कृत्य-विशेषः पर-पुरुषार्थ-प्रापकः, तन्निबन्धनत्वात् परमार्थ-मोक्षस्य ।" इति ईश्वरप्रत्यभिज्ञा-विमर्शिन्याम् ॥ "Till is showered Grace on thee, Can't thou cross the Maya's sea." *Yoga and Perfection*.

शक्ति-पातः—शिव-रश्मि-स्पर्शः । ( यस्य आपतने यथार्क-रश्मिस्पृष्टः सूर्यकान्तः स्वकाम् अभिज्वलन-लक्षणां क्रियां समाविशेत्, तथा अणुरपि शिव-शक्तिपात-पूतः स्वके पूर्णे ज्ञान-क्रिये, समभिव्यक्त-स्वसम्विद्-विभवो भवेत् । ) [ 'पूर्वाह्न'स्य षष्ठोल्लासो द्रष्टव्यः । ] अनुभावतः—प्रभावतः ।

शक्ति-पातो बलं राति राति मोक्ष मनामयम् ।
भक्ति-हीना लभन्ते नो शक्ति-लेशं कृपामयम् ॥६॥

बलम्—सामर्थ्यम् ॥ आत्म-श्रद्धायाम् अस्य आरम्भः, चेष्टायां वृद्धिः, आत्म-शक्ते र्विकाशे स्थितिः ॥ "नायमात्मा बल-हीनेन लभ्यः ।" इति मुण्डके ॥ राति—ददाति ।

मोक्षः—मुक्तिः । अपवर्गः । अमृतम् । निःश्रेयसम् । निर्वाणम् । कैवल्यम् ॥ आत्यन्तिक-दुःख-निवृत्तिः । इति नैयायिकाः ॥ नित्य-सुखावाप्तिः । इति वैदान्तिकाः ॥ शरीरेन्द्रियाभ्याम् आत्मनो मुक्तत्वं मुक्तिः । इति भरतः ॥ [ 'मायाङ्क'स्य अष्टादशोल्लासो द्रष्टव्यः । ]

भक्ति-हीनाः—"भक्तैवाराध्यते विष्णु र्नान्यत् तत्तोष-कारणम् ॥ न दानै र्विविधै र्दत्तै र्न पुष्पै र्नानुलेपनैः । तोषमेति महात्मासौ यथा भक्त्या जनार्दनः ॥" इति गारुडे ॥

लेशः—कणा ॥ कृपा—अनुग्रहेच्छा । प्रत्युपकारानपेक्षया पर-दुःख-प्रहरणेच्छा ।

भक्तैक-सम्बला ये च शङ्करैक-निकेतनाः ।
भुञ्जते ते महाभागा भव-भङ्ग-करीं कृपाम् ॥७॥

भवः—[ भू+अ ] जन्म । संसारः । जगत् । The course of worldly life. Mundane existence. Succession of births. [ 'भव-लीला ।' 'भव-बन्धनम ।' 'भव-समुद्रः ।' 'भवारण्यम् ।' 'भव-सिन्धुः ।' 'भव-तारिणी ।']

सैव भक्ति र्महेशि या चानन्या ममता शुभा ।
कुतो भक्ति रवैरागीर तृष्णा-दुर्भावना-मये ॥८॥

अनन्या—अन्यैः सह सम्पर्क-रहिता। अभिन्ना। भेद-विरहिता।

तृष्णा—लिप्सा। "ॐ तत् तु विषय-त्यागात् सङ्ग-त्यागाच्च।" इति नारद-भक्ति-सूत्रे॥

विश्वं मायामयं ज्ञात्वा येन सर्वं विना-कृतम्।
त्यक्त-सङ्गः स वैरागी लभते भक्तिमुत्तमाम्॥९॥

विश्वम्—[विश् (प्रविशि)+य (अधि, कर्तरि वा)] जगत्। सकलम्॥ माया—'मायाङ्क'स्य सप्तदशोल्लासो द्रष्टव्यः।

विना-कृतम्—त्यक्तम्॥ वैरागी—विषयेच्छा-रहितः। वैराग्य-युक्तः।

तत्त्व-ज्ञाने समुत्पन्ने वैराग्यं जायते नृणाम्।
'ब्रह्म सर्वम्'-इति ज्ञानं तत्त्व-ज्ञानं सुनिश्चितम्॥१०॥

तत्त्व-ज्ञानम्—चतुर्विंशति-तत्त्वानां तथा जीवात्म-परमात्मनोः स्वरूप-ज्ञानम्—याथार्थ्य-ज्ञानम्। तदेव 'ब्रह्म सर्वम्'-इति ज्ञानम्॥ "न विना परमात्मानं किञ्चिज्जगति विद्यते। विश्व-रूपं तमेवेह इति ज्ञात्वा न मुह्यति॥" इति गारुडे॥ "वासुदेवः सर्वमिति।" इति गीतायाम्॥

वैराग्यम्—विषय-तुच्छ-धीः।

ज्ञानं प्रजायते नित्यं शुद्ध-चेतः-सरोवरे।
पुण्य-पूर्णे सुगम्भीरे प्रशान्ते निर्मले स्थिरे॥११॥

चित्त-शुद्धि र्भवेत् सत्यं निष्कामेन स्व-कर्मणा ।
संयमेन सदाचार श्चित्त-शुद्धि-करः परः ॥१२॥

सुकृतेन स्व-धर्मेण प्रार्च्य देवं महेश्वरम् ।
याति ब्रह्म-पदं नित्यम् अव्ययं बुद्धिमान् पुमान् ॥१३॥

सुकृतेन—सुविहितेन ॥ स्वधर्मः—निज-धर्मः । स्वस्य कर्तव्यं कर्म । One's own duty.

अन्ये जडत्व मापन्ना मुग्ध-चित्ता नरोऽलसाः ।
निमज्जन्ति भवे घोरे दुःख-नक्र-समाकुले ॥१४॥

नरः—मानवाः ॥ घोरः—दारुणः । भयङ्करः । सङ्कटमयः ॥ नक्रः—कुम्भीरः ।

अतो वै विधिव न्नित्यं कार्यं कर्म समाचरेत् ।
अवैधानि निषिद्धानि त्यक्त्वा कर्माण्यशेषतः ॥१५॥

आदौ संशोधयेद् देहान् संयमामल-वह्निना ।
शुभेच्छेन्धन-योगेन ज्वलितेन च जीवता ॥१६॥

देहः—[स्थूल-सूक्ष्म-कारण-भेदात् त्रिविधः ।] शरीरम् ।
संयमः—[सं+यम् (निवृत्तौ+अ] नियमः । बन्धनम् । व्रत-पालनम् । इन्द्रिय-दमनम् । इन्द्रिय-निग्रहः । ('मध्याह्न'स्य तृतीयोल्लासो द्रष्टव्यः ।)

संयमोपाय-शिक्षार्थं शुभेच्छा-वर्धनाय च।
सज्जनं शिवदं-शास्त्रं सेवेत श्रद्धयान्वितः ॥१७॥

श्रद्धा—श्रद्धायाः (१) बाल्यं=विश्वासः; (२) यौवनं=प्रीतिः, अनुरागः; (३) प्रौढत्वं=निर्भरता; (४) वृद्धत्वं=ज्ञानम् ॥

---

## द्वितीयोल्लासः।

सतां-सङ्गः शुभं-शास्त्रं—नीरोगं नयन-द्वयम्।
तद्द्वयेन विहीनो यः स एवान्धः सुनिश्चितम् ॥१॥
ध्वान्ताच्छन्ने भवारण्ये भवत्येव विमार्गगः।
काम-कर्म-लता-बद्धः काल-व्यालेन हिंसितः ॥२॥

ध्वान्तम्—अन्धकारः ॥
व्यालः—सर्पः। श्वापदः। व्याघ्रः। दुष्ट-गजः ॥

कोऽयमत्र न यो लोके महामाया-विमोहितः।
कोऽयमत्रास्ति मोहेन यस्य नापहृतं मनः ॥३॥

मोदकेन यथा बाला भवन्त्येव प्रवञ्चिताः।
तथा कामेन सर्वे च भवन्त्येव प्रतारिताः ॥४॥

राहु-ग्रस्तस्य चन्द्रस्य कौमुदी प्रतिभाति नो ।
तथा मोहाभिभूतस्य शुभा बुद्धि विंभाति नो ॥५॥
कौमुदी—ज्योत्स्ना ॥ नो—न ।

मोहेनान्धस्य पान्यस्य दुर्वलस्य भवाटवी ।
सतां-सङ्गः शुभं-शास्त्रं यद्यवलम्बनं शुभम् ॥६॥
पान्थः—पथिकः । सर्वदा-भ्रमणकारी । पथ-पर्यटन-कारी ॥
अटविः—वनम् ।

विना ब्रह्म द्वितीयं यः कदाचिन्नैव पश्यति ।
सज्जनं तं निषेवेत महामोह-निवारणम् ॥७॥
निषेवेत—सङ्ग' कुर्यात् । Attend, keep company of.

विष्णु-प्रेमाप्लुतो यो हि तपो-वैराग्य-मण्डितः ।
सज्जनं तं निषेवेत चित्त-संयम-हेतवे ॥८॥
आप्लुतः—स्नातः । कृत-स्नानः ॥ अभिषिक्तः ॥

सर्व-भूत-दया-पूर्णः सर्व-भूतार्जव-व्रतः ।
धर्म-लब्धान्न-भोक्ता यः सदा सत्य-परायणः ॥९॥
स्व-धर्मे निरतो भक्तो निःस्वार्थी निर्मलाशयः ।
सज्जनं तं निषेवेत शुभेच्छा-वर्धनाय च ॥१०॥

आर्जवम्—ऋजोर्भावः। सरलता। पर-प्रतारणा-राहित्यम्। अकापट्यम्।

व्रतम्—नियमः। संयमः॥ "स्व-कर्तव्य-विषयो नियतः संकल्पो व्रतम्।" "दीर्घकालानुपालनीय-संकल्पो व्रतम्।"

शासनात् कृपया नित्यं सर्वाश्रम-निवासिनाम्।
तारणात् सर्व-पापेभ्यः शास्त्रमित्यभिधीयते ॥११॥

आश्रमः—[आ + श्रम् (तपसि, श्रमे) + अ (अधि)] आश्राम्यन्ति (स्वं स्वं तपश्चरन्ति) अत्र। यत्र मनुष्यः परिश्रम-प्रभावेण—तपः-प्रभावेण उन्नतिं लभते॥ जीवन-यात्राया अवस्था-विशेषः। स चतुर्विधः—(१) ब्रह्मचर्यं, (२) गार्हस्थ्यं, (३) वाणप्रस्थ्यं, (४) सन्यासः।

पापम्—पाति (रक्षति) आत्मानमस्मात्। नरकहेतु-दुरदृष्टं तत्-साधनम्।

स सङ्गो हि सदाऽऽसेव्यो येन धर्मो विवर्धते।
शास्त्रन्तत् सर्वदा पाठ्यं येन धर्मो विवर्धते ॥१२॥

आसेव्यः—उपभोग्यः। To be enjoyed.

पाठ्यम्—पठनीयम्।

धर्मः स यो नयत्येव मानवं शिव-सन्निधिम्।
अधर्मो यो नयत्येव दूरं दूरतरं शिवात् ॥१३॥

धर्मः—[ध्रियते लोकोऽनेन, धरति लोकं वा।] शुभादृष्टम्। पुण्यम्। श्रेयः॥ "विहित-क्रियया साध्यो धर्मः पुंसां गुणो मतः। प्रतिषिद्ध-क्रिया-साध्यः स गुणोऽधर्म उच्यते॥" इति धर्म-दीपिका॥ धर्मः—(१) सत्याज्जायते; (२) दयया, दानेन च वर्धते; (३) क्षमायां तिष्ठति; (४) क्रोधान्नश्यति॥ Comp. "यतोऽभ्युदय-निःश्रेयस-सिद्धिः स धर्मः।" इति कणाद-सूत्रम्॥ "चोदना-लक्षणार्थो धर्मः।" इति जैमिनि-सूत्रम्॥ "अद्रोहश्चाप्य लोभश्च दमो भूत-दया तपः। ब्रह्मचर्यं ततः सत्य मनुक्रोशः क्षमा धृतिः॥ सनातनस्य धर्मस्य मूलमेतद् दुरासदम्॥" इति मत्स्य-पुराणम्॥ "पात्रे दानं मतिः कृष्णे माता-पित्रोश्च पूजनम्। श्रद्धा बलि गवां ग्रासः षड्विधं धर्म-लक्षणम्॥" इति पाद्मोत्तरखण्डम्॥ "ब्रह्मचर्येण सत्येन तपसा च प्रवर्तते। दानेन नियमेनापि क्षमा शौचेन वल्लभ॥ अहिंसया सुशान्त्या च अस्तेयेनापि वर्तते। एते र्दशभिरङ्गैस्तु धर्ममेव प्रसूचयेत्॥" इति पाद्मे भूमिखण्डम्॥ "अहिंसा-लक्षणो धर्मो हिंसा चाधर्म-लक्षणा।" इति महाभारतम्॥ "वेद-प्रणिहितो धर्मो ह्यधर्म स्तद्-विपर्ययः।" इति भागवतम्॥ "धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रिय-निग्रहः। धी र्विद्या सत्यमक्रोधो दशकं धर्म-लक्षणम्॥" इति मनु-संहिता॥ सदाचारः॥

अधर्मः—धर्म-विरोधी। पापम्॥ श्रुति-स्मृति-विरुद्धाचारः॥

ग्राह्यं तद् यन्नयत्येव मानवं ब्रह्मणोऽन्तिकम् ।
त्याज्यं तद् यन्नयत्येव मानवं नरकार्णवम् ॥ १४ ॥

तदेव सर्वदा कार्यं येन नैर्मल्य मेधते ।
तदेव सर्वदा त्याज्यं येनान्ते दुःख मेधते ॥ १५ ॥

नैर्मल्यम्—"विषयेष्वतिसंरागो मानसो मल उच्यते। तेष्वेव हि विरागस्तु नैर्मल्यं समुदाहृतम् ॥" इति प्रायश्चित्त-तत्त्वम् ॥ एधते—वर्धते ।

जड-बुद्धि र्नरो हन्त प्राप्यापि दुःख-सागरम् ।
पश्यन्नपि न जानाति शृण्वन्नपि न बुध्यते ॥ १६ ॥

बुद्धिः—( बुध्+क्ति )। निश्चयात्मिकान्तःकरणवृत्तिः । इति वेदान्तसारः ॥ "बुद्धिर्विवेचनारूपा सा ज्ञान-जननी श्रुतौ ।" इति ब्रह्मवैवर्ते ॥ [बुद्धिक्षयकरा यथा। "शोकः क्रोधश्च लोभश्च कामो मोहः पराश्रुता ( अस्थिरता )। ईर्ष्या मानो विचिकित्सा कृपाऽसूया जुगुप्सता ॥ द्वादशैते बुद्धिनाशहेतवो मानसा मलाः ।" इति कालिका-पुराणम् ॥ अपिच। "बुद्धि-क्षयकरा एते माषकासवमृत्तिकाः ॥"] हन्त !—( विषादे ) हा ! Alas !

तमात्म-घातिनं दुःस्थम् उद्धर्तुं शोक-वारिधेः ।
सतां-सङ्गं शुभं-शास्त्रं विना नास्त्यवलम्बनम् ॥१७॥

आत्म-घाती—आत्म-हनन-कर्त्ता। Comp. "नृदेह माद्यं सुलभं सुदुर्लभं, प्लवं सुकल्पं गुरु-कर्णधारम्। मयानुकूलेन नभस्वतेरितं पुमान् भवाब्धिं न तरेत् स आत्महा ॥" इति भागवतम् ॥ दुःस्थः—( दुर् + स्था + ड ) दुःखेन तिष्ठति यः । दुर्गतः । मूर्खः । इति मेदिनी ॥

सज्जनं क्षेमदं शास्त्रं सेवेत यत्न-पूर्वकम् ।
भव-पाश-निवृत्त्यर्थं धर्मस्य वर्धनाय च ॥१८॥

क्षेमदम्—कल्याणदम्। मुक्तिदम् ।
पाशः—[ पश् (बन्धे) + धञ् ] पश्यते बध्यतेऽनेन। बन्धनम् । आणवादिमलबन्धः । अविद्याऽस्मितादयश्च ।

---

## तृतीयोल्लासः ।

सामर्थ्यं जीवनं स्वास्थ्यं शुभेच्छा—चञ्चलानि वै ।
अधुनैव प्रयत्नेन कर्तव्यो धर्म-संग्रहः ॥१॥

अधुनैव भवेत् शुद्धो निर्दोषो गत-किल्बिषः ।
पापेभ्य श्चित्त माक्षिप्य कल्याणे विनिवेशयन् ॥२॥

किल्बिषम्—पापम् । अपराधः ॥
आक्षिप्य—आकृष्य । Withdrawing.

दुर्जनैः सह संसर्गाद् दोषः सांसर्गिको भवेत् ।
सङ्ग-दोषो गुणान् हन्ति ; तमादौ परिवर्जयेत् ॥३॥

दोषः—"तस्य (दुष्टस्य) समभिव्याहारतो दोषः ।" इति कणाद-सूत्रम् । "ॐ दुःसङ्गः सर्वथैव त्याज्यः,—काम-क्रोध-मोह-स्मृतिभ्रंश-बुद्धिनाश-सर्वनाश-कारणत्वात् ॥" नाः सूः ॥

सामीप्याद् भाषणाच्चैव स्पर्शनात् सह-भोजनात् ।
आसनाद् वसना न्नित्यं पापं संक्रमते नृणाम् ॥४॥

कु-सङ्गं वर्जयेत् तूर्णं कु-चिन्ताञ्च कु-पुस्तकम् ।
कु-श्रव्याणि कु-दृश्यानि कु-कर्माणि कु-सौहृदम् ॥५॥

सौहृदम्—सख्यम् । सौहार्दम् ।

असमञ्जस-शीलानां-सङ्गो यथा भयावहः ।
तथा सद्वृत्त-संसर्गो भव-दुःखस्य भेषजम् ॥६॥

असमञ्जसम्—असङ्गतम् । अनुपयुक्तम् ॥
सद्वृत्तः—सच्चरित्र-सम्पन्नः ।

सतां सङ्गेऽवतिष्टेत सद्-ग्रन्थ मवलम्बयेत् ।
सच्चिन्तया सुकृत्या च सर्वदा शुद्धतां भजेत् ॥७॥

सुकृतिः—सत् कर्म ।

कायेन मनसा वाचा पुण्य-कर्म-परो भवेत् ।
क्लान्तिं नानुभवे ज्जातु कर्तव्ये धर्म-कर्मणि ॥८॥

जातु—कदाचित्।

श्रमेण लभ्यते सर्वं, किञ्चनापि न तं विना।
धैर्योद्यम-समापन्न आलस्यं परिशातयेत् ॥९॥

तं विना—श्रमं विना॥ शातयेत्—हन्यात्। छेदयेत्।

अलसत्वं रुणद्ध्येव कल्याण मुन्नतिं सदा।
अलसत्वे तमाच्छन्ने सर्वे दोषाः प्रतिष्ठिताः ॥१०॥

तमाच्छन्ने—तमसाच्छन्ने। [तमः (पुं) = तमोगुणः। इत्यमर-टीकायां रायमुकुटः॥]

अलसत्वात् परस्यापि निश्चितं भवति क्षतिः।
अवसादाद् अनुत्साहाद् भवेत् पुंसा मधोगतिः ॥११॥

अवसादः—अवसन्नता। विषादः। जडता। स्फूर्ति-हीनता।

आत्म-निर्भर-शीलानां विश्वनाथः सहायकः।
अतो नित्यं निरातङ्कः पौरुषे यत्न माचरेत् ॥१२॥

पौरुषम्—पुरुषत्वम्। तेजः। साहसम्। उद्यमः।
Manliness, heroism, prowess, valour.

समयस्य जल-स्रोतः प्रतीक्षेत न जन्मिनम्।
अतश् शीघ्र मधर्माणां बीजान्युत्पाटयेत् पुमान् ॥१३॥

समयः—[सम् + इ (गमने) + अ]

स्रोतः—स्रुतः (स्वयम्) अम्बूनां सरणम् (वेगेन गमनम्)।

समयश्च……न जन्मिनम्—"Time and tide wait for no man".

कामं क्रोधं मदं मोहं लोभं दम्भं विनाशयेत्।
मिथ्याचार मनाचारं मात्सर्यञ्च परित्यजेत् ॥१४॥

मदः—गर्वः। मत्तता। इति हेमचन्द्रः॥ "अहं महात्मा धनवान् मत्तुल्यः कोऽस्ति भूतले। इति यज्जायते चित्ते मदः प्रोक्तः स कोविदैः॥" इति पाद्मे क्रियायोगसारे॥

मोहः—अविद्या। देहादिषु आत्म-बुद्धिः॥ "मम पिता मम माता ममेयं गृहिणी गृहम्। एवम्विधं ममत्वं यत् स मोह इति कीर्तितः॥" इति पाद्मे॥

मिथ्याचारः—कपटाचारः॥ अनाचारो द्विविधः—(१) विहितस्य अनुष्ठानाभावः, (२) निषिद्धस्य आचरणञ्च॥

मात्सर्यम्—पर-शुभ-द्वेषः।

अश्लील-भाषणं नर्म पारुष्यं व्यर्थ-भाषणम्।
आत्म-प्रशंसनं मिथ्या पैशुन्यं पर-निन्दनम् ॥१५॥
स्तैन्यं विश्वास-घातञ्च परस्यानिष्ट-चिन्तनम्।
समूलं वर्जयेत् सर्वं चित्त माक्रम्य चेतसा ॥१६॥

अश्लीलम्—[न + श्री + ल (अस्त्यर्थे)] कुत्सितम्। शिष्ट-समाज-विरुद्धम्। लज्जाप्रदम्॥ नर्म—परीहासः॥

पैशुन्यम्—[ पिश् ( चूर्णने, विनाशे ) + उन् (कर्तरि) = पिशुनः = खलः, पर-सुख-नाशकः ] खलता ।

स्तैन्यम्—चौर्यम् ।

कुत्सितात् कर्मणो नित्यं चित्तेन्द्रियाणि वारयेत् ।
सर्वेषाञ्च गुण-ग्राही दोष-त्यागी सदा भवेत् ॥१९॥

कुत्सितात्—निन्दितात् ।

भजेत् सत्यं निराबाधं सारल्यं मधुरा गिरः ।
अनसूयां क्षमां शौचं सन्तोषञ्च तितिक्षणम् ॥१८॥

निराबाधम्—निर्गता आबाधा यस्य । आबाधा-शून्यम् । व्यथा-शून्यम् ॥ बाधा-शून्यम् । प्रतिबन्धक-शून्यम् ॥

असूया—परगुणे दोषारोपणम्, परगुणे दोषाविष्करणम् । वृथा निन्दा, द्वेषः ।

अनसूया—"न गुणान् गुणिनो हन्ति, स्तौति चान्य-गुणानपि । न हसेच्चान्य-दोषांश्च साऽनसूया प्रकीर्तिता ॥" इति अत्रि-संहिता ॥

क्षमा—"बाह्ये चाध्यात्मिके चैव दुःखे चोत्पादिते क्वचित् । न कुप्यति न वा हन्ति सा क्षमा परिकीर्तिता ॥"

शौचम्—शुद्धिः । "बाह्ये चाभ्यन्तरे चापि शुद्धिः शौचं विधीयते ।" इति सौर-पुराणे ॥

तितिक्षणम्—सहिष्णुता । शीतोष्णादि-द्वन्द्व-सहिष्णुता ।

श्रद्धां भक्तिं भजेत् स्थैर्यं ब्रह्मचर्यं मह्रिंसनम्।
कुर्यात् सर्व-प्रयत्नेन सर्व-भोग-विसर्जनम् ॥१९॥

प्रेमान्वितः सदा कुर्यात् सर्वेषां क्षेम-चिन्तनम्।
अनुक्रोश-परः प्राज्ञः सेवेत विश्व-चेतनान् ॥२०॥

क्षेमः—[क्षि (क्षये)+म] यत् दुःख-क्षयं करोति। कुशलम्। कल्याणम् ॥ मोक्षः ॥

अनुक्रोशः—करुणा, दया। पर-दुःख-प्रहरणेच्छा-रूप-दयया हि पर-क्रोशं (रोदनं) दृष्ट्वा तदनु रोदनं क्रियते इति तस्यास्तथात्वम् ॥ विश्व-चेतनान्—सर्वान् प्राणिनः।

शिष्टाचार ममानित्वं नम्रता मनुपालयेत्।
विद्या-विनय-सम्पन्नः कामयेत सदाऽस्तकम् ॥२१॥

शिष्टाचारः—शिष्टानामाचारः। सद्-व्यवहारः। साधु-व्यवहारः ॥

अमानित्वम्—[मानः=चित्त-समुन्नतिः। इत्यमरः ॥ मत्-समो नास्ति इति मननं मानः। इति तट्टीकायां भरतः ॥ आत्मनि पूज्यता-बुद्धिः। इति नीलकण्ठः ॥ "मोहो धर्म-विमूढत्वं, मानस्त्वात्माभिमानिता।" इति भविष्य-पुराणम् ॥]

अस्तकः—मोक्षः। निर्वाणम्

---

## चतुर्थोल्लासः ।

अभ्यसेत् परमोत्साहो विद्यां सर्वार्थ-साधिकाम् ।
विद्या-नेत्र-विहीनानाम् अन्धकारमयं जगत् ॥१॥

नेत्रम्—[नी (नयने, प्रापणे)+त्र] येन वस्तु-ज्ञानं प्राप्यते । अन्धकारः—तेजःसामान्याभावः । अस्य गुणाः—भय-दृष्टि-तेजोऽवरोध-कारित्वम् । सर्वव्याधिकरत्वञ्च । इति राजवल्लभः ॥

धन-वृद्धा वयो-वृद्धा वीर्य-वृद्धा स्तथाऽपराः ।
सर्वेषामेव वृद्धानां विद्या-वृद्धा अनुत्तराः ॥२॥

वृद्धः—श्रेष्ठः ॥ अनुत्तरः—अत्यन्त-श्रेष्ठः ।

विद्यया ज्ञायते तत्त्वं ज्ञायते च शुभाशुभम् ।
विद्यया ज्ञायते सर्वं विद्यया विधृतं जगत् ॥३॥

तत्त्वम्—स्वरूपम् । परमात्मा । चतुर्विंशति तत्त्वानि । The truth. The real nature of the human soul and the material world as being identical with the Supreme Spirit, pervading the universe. चतुर्विंशति तत्त्वानि । यथा । (१) क्षितिः, (२) आपः, (३) तेजः, (४) मरुत्, (५) व्योम, (६) गन्धः, (७) रसः, (८) रूपं, (९) स्पर्शः, (१०) शब्दः, (११) नासिका, (१२) जिह्वा, (१३) नेत्रं, (१४) त्वक्, (१५) कर्णः, (१६) पायुः, (१७) लिङ्गं, (१८)

पादः, (१८) हस्तः, (२०) मुखं, (२१) प्रकृतिः, (२२) मनः, (२३) बुद्धिः, (२४) अहङ्कारः।] [एतानि चतुर्विंशति-तत्त्वानि जीवात्म-परमात्मानौ च ज्ञातव्यानि।]

नो च विद्या-समा शक्ति र्नो च विद्या-समं शिवम्।
नो च विद्या-समा शुद्धि र्नो च विद्या-समं फलम् ॥४॥

शक्तिः—"परमोत्तम-पुरुषार्थ-साधनीभूता विद्या ब्रह्म-ज्ञान-रूपा॥" फलम्—विद्या सर्व-फलदा, स्वयमेव फलरूपा च।

नो च विद्या-समो बन्धु र्गुरूणां गुरुरेव सा।
तामादौ श्रद्धया विद्यां लभेत यत्न-पूर्वकम् ॥५॥

सम्प्राप्ते पञ्चमे वर्षे बालाया बालकस्य च।
दिने पुण्ये, शुभे काले विद्यारम्भः सुसङ्गतः ॥६॥

जातु नातिवहत्येव शिक्षायाः समयो नृणाम्।
अतोऽभ्यसेत् सदा विद्यां चतुर्वर्ग-प्रदायिकाम् ॥७॥

चतुर्वर्गः—धर्मार्थ-काम-मोक्षम्। इत्यमरः॥

विद्यारम्भे गिरां-देवीं प्रार्चयेदम्बिकां शुभाम्।
भारतीं वागधिष्ठात्रीं कोटि-चन्द्र-सम-प्रभाम् ॥८॥

शुद्ध-सत्त्व-स्वरूपाञ्च विशुद्ध-पङ्कजासनाम्।
सर्व-ज्ञानात्मिकां वाणीं हंसारूढां सरस्वतीम् ॥९॥

वेदादि-सर्व-शास्त्राणां जननीं परमेश्वरीम्।
कवीनां विदुषाञ्चैव परमा मिष्ट-देवताम् ॥१०॥

सर्वविश्व-सदास्तुत्य-पूज्य-वन्द्य-पदाम्बुजाम् ।
शुभदां मोक्षदां शुभ्रां शङ्ख-कुन्देन्दु-सन्निभाम् ॥११॥
श्वेताम्बर-धरां नितरां श्वेत-गन्धानुलेपनाम् ।
वर्णमाला-धरां सौम्यां दीर्घाङ्गीं वर्ण-मातृकाम् ॥१२॥
नृत्य-सङ्गीत-वादित्र-स्वर-ताल-प्रकाशिनीम् ।
प्राणानां वचसा मीशां वीणा-पुस्तक-धारिणीम् ॥१३॥
बुद्धि-विद्या-स्वरूपाञ्च सर्व-सन्देह-भञ्जिनीम् ।
वराभीति-करां दुर्गां तपसां फल-दायिनीम् ॥१४॥
विद्या-स्तनीं जगद्धात्रीं चिन्मयीं विश्व-मातरम् ।
ईषद्धास्यां प्रसन्नास्यां करुणाऽमृत-सागरम् ॥१५॥
त्रिकालज्ञां विशालाक्षीं विज्ञान-विग्रहां शिवाम् ।
सर्वावभासिकां देवीं वह्न्यर्केन्दु-विलोचनाम् ॥१६॥
योगेश्वरीं महामायां चन्द्रार्धाङ्कित-मस्तकाम् ।
धृति-मेधा-मति-प्रज्ञा-स्मृत्यादिभिः सदा-स्तुताम् ॥१७॥
शुद्धज्योतिः-स्वरूपाञ्च सर्वपातक-हारिणीम् ।
सृष्टि-स्थित्युपसंहार-हेतुभूतां सनातनीम् ॥१८॥

गिरां देवी—सरस्वती ॥

वेदः—टीका-परिशिष्टौ द्रष्टव्यः ॥ अम्बरम्—वस्त्रम् । माला—श्रेणी । राजिः । पङ्क्तिः । [ Cf. दीप-माला । नक्षत्र-माला । पर्वत-माला ।···] स्रक् । ( 'माल्य' मालास्रजौ' इत्यमरः ॥) [Cf. मुण्ड-माला । जप-माला । रुद्राक्ष-माला ।···]

सौम्या—[सोम + ष्यञ्] मनोज्ञा । सुदृश्या । "सौम्या सौम्यतराशेषसौम्येभ्यस्त्वतिसुन्दरी ।" इति देवी-माहात्म्यम् ॥

मातृका—[मातृ + क + आप्] माता ॥ धात्री ॥ ज्ञानाधार-भूता शक्तिः । विश्व-जननी परावाक्शक्तिः । "ज्ञानाधिष्ठानं मातृका ।" इति शिव-सूत्रे ॥ वर्ण-मातृका—सरस्वती ।

नृत्यम्—ताल-मान-रसाश्रय-सविलासाङ्गविक्षेपः । तत् त्रिविधम् । यथा । (१) ताण्डवम् = उद्धतं नृत्यम् । (२) लास्यम् = सुकुमार-नृत्यम् । (३) नृत्तम् = भावाश्रयं नृत्यम् ॥ "गेयादुत्तिष्ठते वाद्यं वाद्यादुत्तिष्ठते लयः । लय-ताल-समारब्धं ततो नृत्यं प्रवर्त्तते ॥" इति सङ्गीत-दामोदरे ॥ ["यो नृत्यति प्रहृष्टात्मा भावैर्बहु सुभक्तितः । स निर्दहति पापानि जन्मान्तर-शतैष्वपि ॥" इति श्रीभागवते ॥ "नृत्यतां श्रीपतेरग्रे तालिका-वादनैर्भृशम् । उड्डीयन्ते शरीरस्थाः सर्वे पातक-पक्षिणः ॥" इति हरि-भक्ति-विलासे ॥]

सङ्गीतम्—गानम् । "गीतञ्च द्विविधं प्रोक्तं यन्त्र-गात्र-विभागतः । यन्त्रं स्याद् वेणु-वीणादि गात्रन्तु मुखजं मतम् ॥" ["ताल-वाद्यानुगं गीतं नटीभिर्यत्र गीयते । नृत्यस्यानुगतं रङ्गे तत् सङ्गीतक मुच्यते ॥"] सङ्गीतं—सोमेश्वर-भरत-हनुमत्-कल्लनाथ-मत-भेदात् चतुर्विधम् । [भक्ति-पूर्वकं नृत्य-गीत-वाद्यैर्भगवदाराधनं कृत्वा मानवो महत् फल माप्नोति ॥ "गानात् परतरं न हि ।" "गीतज्ञो यदि गीतेन नाप्नोति परमं पदम् ।

रुद्रस्यानुचरो भूत्वा तेनैव सह मोदते।।" इति सङ्गीत-दामोदरे।। "यथाविधि कृतं गानं जगन्मोहयतेऽचिरात्।" "गानन्तु परमं ब्रह्म।" इति बृहद्धर्मपुराणे।। ईश्वराराधनं विना यत् नृत्य-गीत-वाद्यादिकं तद् व्यसनं—कामजं कामदञ्च।।] [गानशास्त्रीय-राग-विवरणं 'राग' शब्दे टीकापरिशिष्टे द्रष्टव्यम्।]

वादित्रम्—वाद्यम्। [वादयन्ति ध्वनयन्ति यत्] "तालेन राजते गीतं तालो वादित्र-सम्भवः। गरीय स्तेन वादित्रं तच्चतुर्विध मुच्यते।। ततं शुषिर मानद्धं घन मित्थं चतुर्विधम्।।" (१) ततं=तन्त्रीगतं वाद्यं — वीणादिकम्। (२) शुषिरं=वंश्यादिकम्। (३) आनद्धं=चर्मबद्धमुख-वाद्यं —मृदङ्गादिकम्। (४) घनं=कांस्यतालादिकम्॥

स्वरः—स्वरन्ति शब्दायन्ते स्वराः। इति भरतः।। तन्त्री-कण्ठोत्थित-सप्तध्वनिः। "षड्ज-ऋषभ-गान्धारा मध्यमः पञ्चम स्तथा। धैवतश्च निषादश्च स्वराः सप्त प्रकीर्तिताः।।" [ टीका-परिशिष्टो द्रष्टव्यः। ]

तालः—[ तल् ( प्रतिष्ठितौ )+अ ] [ यस्मिन् नृत्य-गीत-वाद्यानि प्रतिष्ठितानि भवन्ति सः। ] गीत-काल-क्रिया-मानम्। "अयं स्वर इयत्कालं गेयः, इयत्कालं विलम्बितम्, इयत्कालं द्रुतम्, इयत्कालं मध्यममिति बोधयितुम् इष्टशै र्हस्तै रङ्गुल्याकुञ्चन-प्रसारणादि-क्रियाभि र्नर्तितव्यं गातव्यञ्चेति काल-क्रिययोः प्रमाणं तालः।" इति सङ्गीत-शास्त्रम्॥

वीणा — स्वनामख्यात-वाद्यम्। सा तु सप्ततन्त्री-युक्ता। तद्-भेदो यथा। (१) शिवस्य वीणा लम्बी, (२) सरस्वत्याः कच्छपी, (३) नारदस्य महती (४) गणानां प्रभावती, (५) विश्वावसोः बृहती, (६) तुम्बुरोः कलावती, (७) चाण्डालानां कण्डोल-वीणा चाण्डालिका च।

वराभीति-कराम् — "अधःस्थितो दक्ष-हस्तः प्रसृतो वर-मुद्रिका। ऊर्ध्वीकृतो वाम-हस्तः प्रसृतोऽभय-मुद्रिका॥"

दुर्गा—"दुर्गो दैत्ये महाविघ्ने भव-बन्धे कु-कर्मणि। शोके दुःखे च नरके यम-दण्डे च जन्मनि॥ महाभयेऽतिरोगे चाप्याशब्दो हन्तृ-वाचकः॥ एतान् हन्त्येव या देवी सा दुर्गा परिकीर्तिता॥" त्रिकालज्ञा—सर्वज्ञा।

अर्कः—सूर्यः॥ इन्दुः—चन्द्रः॥ विलोचनम्—चक्षुः।

चन्द्रार्धम्—अर्धचन्द्राकृति-वर्णः। नादः॥ नादः=अर्धेन्दुः, अर्धमात्रा, अनुच्चार्या, तुरीया, विश्वमातृकला, परा। इति बीजवर्णाभिधानम्॥ "नादरूपा महेशानी चिद्रूपा परमा कला।" इति कुब्जिका-तन्त्रम्॥

धृतिः—[धृ (धारणे)+ति] धारणा॥ धैर्यम्। स्थैर्यम्। उत्साहः॥ इच्छा॥ Firmness, steadiness, energy, resolution.

मेधा—धारणावती बुद्धिः। Retentive faculty, retentiveness (of memory). मेधाकरगणो यथा। (१) सतता-

ध्ययनम्, (२) तत्त्व-ज्ञान-कथा, (३) आचार्य-सज्जन-सच्छास्त्र-सेवा, (४) संयमः ॥ मतिः—बुद्धिः । Intellect, understanding, judgment. प्रज्ञा—प्रकर्षेण जानाति या ; धीः, तीक्ष्ण-बुद्धिः । Keen intelligence, wisdom, discrimination. स्मृतिः—स्मरणम् । अनुभूत-विषय-ज्ञानम् । Remembrance, memory.

पातकम्—पातयति अधोगमयति यत् तत् । नरक-साधनमिति यावत् । अशुभं, दुष्कृतं, कलुषम् ॥ तत् त्रिविधम्—(१) कायिकं, (२) वाङ्मयं, (३) मानसम् ॥

अर्चयेत् प्रणमेद् भक्त्या प्रार्थयेत कृताञ्जलिः ।—
"कृपां कुरु जगन्मात विद्या-हीनं जडञ्च माम् ॥१९॥
ज्ञानं देहि स्मृतिं देहि योगं देहि वरानने ।
प्रतिभां निर्मलां देहि नमस्ते ज्ञान-लोचने ॥२०॥
यया विना जगत् सर्वं जडोन्मत्त-पिशाचवत् ।
भ्रमान्धकार-नाशिन्यै तुभ्यं नित्यं नमो नमः ॥२१॥
संसार-सागरोत्तार-पोत-रूपे नमोऽस्तु ते ।
नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमो नमः ॥"२२॥

वरानना—लावण्ययुक्तवदनविशिष्टा । A lovely-faced lady. प्रतिभा—असामान्य-बुद्धिः । प्रत्युत्पन्न-मतित्वम् । नवनवोन्मेषशालिनी प्रज्ञा ।

पिशाचः—[पिशित (आम-मांसम्) + आश (अशनकारी, भोजी)] प्रेत-योनि-विशेषः । देव-योनि-विशेषः ।

भ्रमः—मिथ्या ज्ञानम् । भ्रान्तिः । भ्रमो द्विविधः—(१) विपर्यासः, (२) संशयश्च । आद्यो यथा । देहे आत्म बुद्धिः । शङ्खादौ पीतता-मतिः । सा निश्चय-रूपा ॥ द्वितीयो यथा । 'किंस्वित् नरो वा स्थाणु र्वा'-इत्यादि-बुद्धिः । तस्य कारणम्—पित्त-दूरत्व-मोह-भयादि-नानाविध-दोषाः ॥ (सायाह्नस्य षोडशोल्लासो द्रष्टव्यः ।

एवं कृत्वा सरस्वत्यै वागीश्वर्यै नतिं नरः ।
श्रद्धया परयोपेतः शिक्षकं दण्डवन्नमेत् ॥२३॥

नाना-वाक्यै रुपायैश्च शिक्षयेद् बोधयेत् सदा ।
स्नेहवान् गुण-सम्पन्नो योग्यं छात्रं स शिक्षकः ॥२४॥

शिक्षकस्य गुण-ग्राही महोत्साहः सुतीक्ष्ण-धीः ।
छत्रवच्छादक स्तस्य दोषाणां,—छात्र उच्यते ॥२५॥

विद्यानामेव शिक्षार्थं शिक्षकेण प्रयोजनम् ।
योग्य-शिक्षा-गुरुं लब्ध्वा तदधीनो भवेन्मुदा ॥२६॥

मुदा—हर्षेण ।

शिक्षा-गुरुं प्रणम्याथ प्रणमेत् शङ्करं हरिम् ।
शुद्धासने समासीनो विद्या-ग्रहण-तत्परः ॥२७॥
सर्वान् वर्णान् पठित्वाऽऽदौ लिखेत् ततो यथा-क्रमम् ।
सुसम्पूर्णान् समान् सर्वान् प्रणिधानेन सुन्दरम् ॥२८॥

प्रणिधानेन—प्रयत्नेन । मनोयोगेन ।

एवमारभ्य विद्यायै प्रयतेत कृत-श्रमः।
सर्वावश्यक-विद्यासु शिक्षणीया यथोचितम् ॥२९॥

कृतश्रमः—महोत्साहः।

वेदाङ्गानि सुसाहित्यम् इतिहासं पुराणकम्।
काव्यं पदार्थ-विज्ञानं गणितं तर्क-शास्त्रकम् ॥३०॥
वैद्यकं धर्म-शास्त्रञ्च नीतिं वेद-चतुष्टयम्।
योग-विद्याञ्च सद्ग्रन्थान् भक्ति-ज्ञान-विवर्धनान् ॥३१॥
सिद्धान्त-मोक्ष-शास्त्राणि शिल्प-शास्त्रं फल-प्रदम्।
पठेत् सर्वाः शुभा विद्या धैर्योद्यम-समन्वितः ॥३२॥

वेदाङ्गम्—श्रुत्यवयव-षट्प्रकार-शास्त्रम्। तद् यथा। (१) शिक्षा (उच्चारण-शिक्षा-विषयकं शास्त्रम्), (२) कल्पः (यागक्रियाणामुपदेश-विषयकं शास्त्रम्। सूत्र-ग्रन्थः।—वेदस्य ब्राह्मणभागात् सारतत्त्वं सूत्राकारेण ग्रथितम्।), (३) व्याकरणम् (व्याक्रियन्ते व्युत्पाद्यन्ते साधु-शब्दा अस्मिन् अनेनेति वा। साधु-शब्दान्वाख्यानविषयकं शास्त्रम्। तत्र साध्य-साधन-कर्तृ-कर्म-क्रिया-समासादि-निरूपणम्।), (४) निरुक्तम् ("निरुक्तं पद-भञ्जनम्।" वर्णागमो वर्णविपर्ययश्च इत्यादिना नियमेनोक्तं निरुक्तम्। वेद-व्याख्या-शास्त्रम्। वैदिकाभिधानम्।), (५) ज्योतिषम् (ग्रहणादि-गणनशास्त्रम्।), (६) छन्दः (श्रुति-छन्दसां प्रत्यायकं शास्त्रम्।)

साहित्यम्—अलङ्कार-व्याकरण-छन्दादिभिः सह यत् पाठ्यम्। (रघु-कुमारसम्भव-मेघदूत-भट्टि-नैषधीय-प्रभृतयः—संस्कृतभाषायाम्, एवम् अन्यत्र च।)

इतिहासः—पुरावृत्तम्। History.

पुराणम्—व्यासादिप्रणीत - वेदार्थवर्णित - पञ्चलक्षणान्वित-शास्त्रम्। (पञ्चलक्षणानि यथा। (१) सर्गः, (२) प्रतिसर्गः, (३) वंशः, (४) मन्वन्तरं, (५) वंशानुचरितं च।) अष्टादश-महा-पुराणानि—"निस्ताराय तु लोकानां स्वयं नारायणः प्रभुः। व्यास-रूपेण कृतवान् पुराणानि महीतले॥ पठनात् श्रवनाद् येषां नृणां पापक्षयो भवेत्। धर्माधर्म-परिज्ञानं सदाचार-प्रवर्तनम्॥ गतिश्च परमा तद्वद् भक्ति र्भगवति प्रभौ। तानि ते कथयिष्यामि सप्रमाणानि भूतले॥" "आख्यानैश्चाप्युपाख्यानै र्गाथाभिः कल्पशुद्धिभिः। पुराण-संहितां चक्रे पुराणार्थ-विशारदः (व्यासः)॥ प्रख्यातो व्यास-शिष्योऽभूत् सूतो वै लोमहर्षणः। पुराण-संहितां तस्मै ददौ व्यासो महामुनिः॥" उपपुराणानि बहूनि। अष्टादशोपपुराणानि प्रसिद्धानि॥

काव्यम्—"वाक्यं रसात्मकं काव्यं दोषास्तस्यापकर्षकाः। उत्कर्षहेतवः प्रोक्ता गुणालङ्काररीतयः॥" [रसः—विषयाणां दर्शन-स्पर्शन-श्रवण-पठन-चिन्तनादिभिः भावुक-जन-हृदये सुख-दुःख-उत्साह-क्रोध-अनुराग-भय-विस्मय-वैराग्यादयो ये अनिर्वचनीया भावा जायन्ते, ते स्थायित्वं प्राप्य यदा अन्तः-

करणम् आर्द्रीकुर्वन्ति तदा ते भावा 'रस'-शब्द-वाच्या भवन्ति॥ रसा यथा। (१) शृङ्गार-रसः (काम-स्पृहा-जनितो रसः)। (२) वीर-रसः (दान-धर्म-युद्धेषु जीवानपेक्षोत्साहकारी रसः)। (३) करुण-रसः (इष्टनाश-क्लेश-उपतापादि - जनित-शोक-भावः)। (४) अद्भुत-रसः (असम्भावित-मर्त्यान्तरीक्ष-गमनादि-रूप-स्थायि-भावः)। (५) हास्य-रसः (कौतुकोद्भवो रसः)। (६) भयानक-रसः (राक्षसादि-भय-जन्यः स्थायि-भावः)। (७) वीभत्स-रसः ( घृणाकर-पूय-रक्तादिजो भावः ) (८) रौद्र-रसः (क्रोधोत्पादको रसः)। (९) शान्त-रसः (आत्म-दर्शन-जनिता वैराग्य-जनिता वा या शान्तिस्तदुत्पादकः स्थायि-भावः )। (१०) वत्सल-रसः (पुत्रादि स्नेहोत्पादकः स्थायि-भावः) ॥

पदार्थ-विज्ञानम्—पदार्थ-सम्बन्धीय-शास्त्रम्। All kinds of science.

गणितम् — अङ्क-शास्त्रम् ॥ तर्कशास्त्रम् — न्याय-विद्या। आन्वीक्षिकी। तर्कविद्या ॥ वैद्यकम्—चिकित्सा-शास्त्रम् ॥

धर्म-शास्त्रम्—मन्वादि-प्रणीत-शास्त्रम्। स्मृतिः। धर्म-संहिता ॥ "मन्वत्रि - विष्णु-हारीत - याज्ञवल्क्योशनोऽङ्गिराः। यमापस्तम्बसंवर्ताः कात्यायन-बृहस्पती ॥ पराशर-व्यास-शङ्ख-लिखिता दक्ष-गौतमौ। शातातपो वशिष्ठश्च धर्म-शास्त्रप्रयोजकाः ॥" एते प्रधानानि, अन्येऽपि सन्ति ॥

नीतिः—नीयन्ते उन्नीयन्तेऽर्था अनयानया वा। नीति-शास्त्रम्। नयः॥ सिद्धान्तः — पूर्व-पक्षं निरस्य सिद्ध-पक्ष-स्थापनम्।

पठेत्—[पाठः = विधिना शास्त्रस्याभ्यसनम्।] श्रीभगवन्तं प्रणम्य पाठमारभेत। शुद्धेनानन्यचित्तेन पठितव्यम्। शौचा-चार-समन्वितः सन् गुर्वाज्ञां लब्ध्वा गुर्वधीनो भूत्वा अध्ययनं कुर्यात्।

पठेच्च चिन्तयेद् धीरो युक्तिभिश्च स्मरेत् ततः।
शास्त्रार्थं सम्परिज्ञाय वारंवारं समभ्यसेत् ॥२३॥

नीति-धर्म-सदाचार-विरुद्धञ्च कु-पुस्तकम्।
अवद्यं मोहनं सर्वं सर्वदा परिवर्जयेत् ॥२४॥

नीतिः—morality. अवद्यम्—कुत्सितम्। निन्दितम्। निकृष्टम्॥ मोहनम्—मोह-कारणम्।

विद्यते सागरस्यान्तो, विद्यानान्तु न विद्यते।
ग्रहणीया हि ता विद्या, याभि र्धर्मो विवर्धते ॥२५॥

ग्रन्थोक्त मनुकूलं यद् यथायोग्यं समाचरेत्।
नार्पणीयं पदं सद्भि र्वाटे शास्त्र-विरोधिते ॥२६॥

वाटः—मार्गः। "पठकाः पाठकाश्चैव ये चान्ये शास्त्र-चिन्तकाः। सर्वे व्यसनिनो मूर्खा यः क्रियावान् स पण्डितः॥" इति महाभारते॥

या विद्या पर-हिंसायै स्वात्मावनतये तथा ।
विवादाय च गर्वाय—ह्यविद्या सा, धिगस्तु ताम् ॥३७॥

अविद्यायाः फलं दर्पो, विद्याया विनयः फलम् ।
विद्यां लब्ध्वा त्यजेत् तूर्णम् अहङ्कारादिकानरीन् ॥३८॥
तूर्णं—शीघ्रम् ।

---

## पञ्चमोल्लासः ।

अहङ्कारं महाशत्रुं पापमूलममङ्गलम् ।
तापदं सत्वरं हन्यात् सर्व-संसार-कारणम् ॥१॥

अहङ्कारः—[अहम् + कृ + घञ्] स्वीयकर्तृत्वादि-ख्यापनम् । स्वीय-श्रेष्ठत्व-ख्यापनम् । गर्वः । अभिमानः । शरीरादौ अहमित्यवमर्शः । 'देहोऽहम्'-इति निश्चयः । वेदान्तमते अभिमानात्मिका अन्तःकरण-वृत्तिः ॥ "ॐ अभिमान-दम्भादिकं त्याज्यम् ।" नाः सूः ॥ "अहमित्यङ्कुरोत्पत्तौ ममेति स्कन्धवान् महान् । गृहक्षेत्रोपशाखाश्च पुत्रदारादिपल्लवः ॥ धनधान्य-महापत्रोऽनेककालैर्हि वर्धितः । पुण्यापुण्य सपुष्पश्च सुख-दुःख-महाफलः ॥ विधिवत् सुखमाप्त्यर्थं जातोऽज्ञान-महातरुः ॥ संसाराध्व- परिश्रान्ता येऽत्रच्छायां समाश्रिताः । भ्रान्ति-ज्ञान-सुखासीना स्तेषामात्यन्तिकं कुतः ॥ यैस्तु सत्-सङ्ग-पाषाण-निशितेन

महातरुः । छिन्नो विद्या-कुठारेण ते गता लयमीश्वरे ॥" "यत् किञ्चिदिदमायाति सुख-दुःख-मलं भवे । तदहङ्कार-चक्रस्य प्रविकारो विजृम्भते ॥" इति योग-वाशिष्ठे ॥

अहङ्कारे लयं प्राप्ते ताप-त्रयं प्रणश्यति ।
अहङ्कारे लयं प्राप्ते शान्तिश्चित्ते नितिष्ठति ॥२॥

तापत्रयम् — आध्यात्मिक-आधिभौतिक-आधिदैविक-ताप-त्रयम् । नितिष्ठति—is established. "अहङ्कारानुसन्धान-वर्जनादेव राघव । पौरुषेण प्रयत्नाच्च तीर्यते भव-सागरः ॥" इति योग-वाशिष्ठे ॥

"कर्ता भोक्ता सदैवाहं ज्ञाता द्रष्टा महानहम् ।
अहमेतन्ममेदञ्च मयैवेदं स्वनुष्ठितम् ॥३॥
महात्माऽहं महाज्ञानी सर्व-शास्त्रार्थ-कोविदः ।
सर्व-सौन्दर्य-सम्पन्नो महातेजा महाबलः ॥४॥
गरिष्ठोऽहमहं श्रेष्ठः सर्व-पूज्यः सुनिश्चितम् ।"—
सर्वमित्यादिकं ज्ञेयं मोहजं बन्ध-कारणम् ॥५॥

गरिष्ठः—गुरुतमः । Most venerable. श्रेष्ठः—best.

यावन्न जायते गर्वो, यावत्तिष्ठति नम्रता ।
तावदेवोन्नतिः पुंस स्तावन्निर्वाण-सम्भवः ॥६॥

सर्वदैव जगन्नाथः करुणा-वरुणालयः ।
वितरत्यविशेषेण सर्वेभ्यो महतीं कृपाम् ॥७॥

सा कृपा तु न भोगाय दम्भिना मभिमानिनाम्।
मत्वेशं सर्व-कर्तारं, दम्भं दर्पं मतस्त्यजेत् ॥८॥
दम्भः—vanity. दर्पः—pride.

'ईश्वरेण कृतं सर्वं, किञ्चनापि न वै मया।'—
इत्येव कथितं ज्ञानं भव-बन्ध-विमोचनम् ॥९॥

ईशाधीनं जगत् सर्वं, तत्-कृपैव बलं नृणाम्।
तत्-कृपैका भवत्येव संसारामय-भेषजम् ॥१०॥

विश्व-राजं महादेवं सर्वेन्द्रियैः सदाऽर्चयन्।
लभेत करुणां तस्य पूर्णस्य परमात्मनः ॥११॥
विश्वराजः—(१) विश्वेषु राजते यः सः। (२) विश्वेषां राजा।

नान्यत्तस्माद्दृते किञ्चित्, स वै सर्वं चराचरम्।
दाता भोक्ता स विश्वेशः कर्ता पाता भवाश्रयः ॥१२॥
चराचरम्—स्थावर-जङ्गम-रूपं जगत्।

तस्मिन् नित्ये स्थितं सर्वं, स एकः सर्व-कारणम्।
तस्मिन् प्रलीयते सर्वं नित्य-पूर्णे परात्परे ॥१३॥

सगुणः स स्वयंज्योति र्मायातीतस्य निर्गुणः।
स हि भक्तानुकम्पायै गृहीत-दिव्य-विग्रहः ॥१४॥
निर्गुणः—सत्त्व-रजस्तमोगुणातीतः।

तस्य नाम-विहीनस्य भक्ता स्तद्-गत-मानसाः।
कुर्वते बहु-नामानि नाना-भाव-समाश्रिताः ॥१५॥

केचिदाहुः 'परं ब्रह्म', केचिदाहुः 'परात्परः'।
केचिदाहुः 'परा सम्वित्', केचिद् वा 'परमः-शिवः' ॥१६॥
परमात्मा महाविष्णु र्भगवान् परमेश्वरः।
कृष्णो रामः शिवा दुर्गा नारायणो हरो हरिः ॥१७॥
इत्यादीनि ह्यसंख्यानि नामान्युक्तानि भावुकैः।—
प्रत्येकं निश्चितं नाम तस्यैकस्यैव वाचकम् ॥१८॥

परात्परः—श्रेष्ठादपि श्रेष्ठः। "देव्यः कालस्य कालोऽहं विधातु र्विधिरेव च। संहार-कर्तुः संहर्ता पातुः पाता परात्परः ॥" इति ब्रह्म-वैवर्ते ॥ सम्वित्—ज्ञानम्। चैतन्यम् ॥

शिवः—शिवं कल्याणं विद्यते अस्य। श्यति अशुभमिति वा। शेरते अवतिष्ठन्ते अणिमादयः अष्टौ गुणा अस्मिन् इति वा।

परमात्मा—"चैतन्यमात्मा।" "चैतन्यमेक एवात्मा।" "चिद्धर्मा आत्मा।"

विष्णुः—(विश्+नुक्) वेवेष्टि व्याप्नोति विश्वं यः। वेषति सिञ्चति आप्यायते विश्वमिति वा। विष्णाति वियुनक्ति भक्तान् मायापसारणेन संसारादिति वा। विशति सर्वभूतानि विशन्ति सर्वभूतानि अत्र इति वा।

भगवान्—(भग+वतु) "यत्तदव्यक्तमजरमचिन्त्यमजमव्ययम्। अनिर्देश्यमरूपञ्च पाणिपादाद्यसंयुतम् ॥ विभुं सर्वगतं नित्यं भूतयोनिमकारणम्। व्याप्याव्याप्यं यतः सर्वं तं वै पश्यन्ति सूरयः ॥ तद् ब्रह्म तत् परं धाम तद् ध्येयं मोक्ष-

काङ्क्षिणाम्। श्रुतिवाक्योदितं सूक्ष्मं तद् विष्णोः परमं पदम्॥ तदेव भगवद्-वाच्यं स्वरूपं परमात्मनः। वाचको भगवच्छब्द-स्तस्याद्यस्याक्षयात्मनः॥ अशब्द-गोचरस्यापि तस्य वै ब्रह्मणो द्विज। पूजायां भगवच्छब्दः क्रियते ह्यौपचारिकः॥ शुद्धे महाविभूत्याख्ये परब्रह्मणि वर्तते। मैत्रेय भगवच्छब्दः सर्व-कारण-कारणे॥ सम्भर्तेति तथा भर्ता भकारोऽर्थद्वयान्वितः। नेता गमयिता स्रष्टा गकारार्थस्तथा मुने॥ ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः। ज्ञान-वैराग्ययोश्चैव षण्णां भग इतीङ्गना॥ वसन्ति यत्र भूतानि भूतात्मन्यखिलात्मनि। स च भूतेष्वशेषेषु वकारार्थ स्ततोऽव्ययः॥ ... उत्पत्तिं प्रलयञ्चैव भूतानामगतिं गतिम्। वेत्ति विद्यामविद्याञ्च स वाच्यो भगवानिति॥ ज्ञानशक्ति-बलैश्वर्य-वीर्य-तेजांस्यशेषतः। भगवच्छब्दवाच्यानि विना हेयै गुंणादिभिः॥" इति विष्णुपुराणम्॥

कृष्णः—( कृष्+णक् ) यः सर्वान् आकर्षति। सर्वेषां हृदयं कर्षति। "कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः। तयो रैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते॥"

रामः—[रम् (क्रीडायाम्) + अ] मनोज्ञः। भक्तैः सह, प्रकृत्या सह, ब्रह्माण्डेन सह वा रमते यः सः। प्रकृतेः जीवानां वा रमण-स्थानम्। "रा-शब्दो विश्ववचनो मश्चापीश्वरवाचकः। विश्वानामीश्वरो यो हि तेन रामः प्रकीर्तितः॥"

शिवा—( शिव+आप् ) "शिव-राशि मूर्तिमती शिवा

तेन प्रकीर्तिता।" "शिवो हि मोक्षवचन श्चाकारो दातृ-वाचकः। स्वयं निर्वाण-दात्री या सा शिवा परिकीर्तिता॥"

नारायणः—(नार + अयन)। "सारूप्यमुक्तिवचनो नारेति च विदु र्बुधाः। यो देवोऽप्ययनं तस्य स च नारायणः स्मृतः॥" "आपो नारा इति प्रोक्ता आपो वै नर-सूनवः। अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः॥"

हरः—हृ + अन्॥ हरिः—हृ + इ।

तं परेशं हृषीकेशं सच्चिदानन्द मव्ययम्।
शुचिरास्तिक्य-पूतात्मा सर्वदैव प्रपूजयेत्॥१८॥

हृषीकेशः—हृषीकाणामिन्द्रियाणा मीशो नियन्ता हृषीकेशः। परमात्मत्वात्।

आस्तिक्यम्—वेदे, धर्मे, ईश्वरे च श्रद्धा।

तत्-कृपाया भवेन्मुक्ति र्भक्तिः करतले स्थिता।
भक्तानुग्राहकं देवं पूजयेत् तमनन्यधीः॥२०॥

अनुग्रहः—दुःख-दूर-करणेच्छा। अनिष्ट वारण-पूर्वके ष्ट-साधनम्।

कृपाऽवलोकनं तस्य युनक्ति निर्गुणं गुणैः।
स हि धन्यः स हि श्लाघ्यो येन लब्धः कृपा-कणः॥२१॥

युनक्ति...गुणैः—"मूकं करोति वाचालं, पङ्गुं लङ्घयते गिरिम्॥" धन्यः—पुण्यवान्। सुकृती।

शिवार्चन-विहीनञ्च तत्-कथाऽमृत-वर्जितम् ।
यद्दिनं तद् ध्रुवं मोघं दुर्दिनं तत् सुनिश्चितम् ॥२२॥
मोघम्—निरर्थकम् । निष्फलम् ।

यन्मुहूर्तो व्यतिक्रान्तो भगवच्छरणं विना ।
तदर्थं रोदनं कार्यम् अनुताप-पुरःसरम् ॥२३॥

संसार-सर्प-दष्टानाम् एकमेव सुभेषजम् ।
सर्वावस्थासु सर्वत्र सर्वदा हरि-चिन्तनम् ॥२४॥

वदेन्नान्यद् भजेन्नान्यद् नान्यत् कदापि चिन्तयेत् ।
नान्यच्च शृणुयाद् विद्वान् सदा राम-मयो भवेत् ॥२५॥

मुकुन्दं चिन्तयेन्नित्यं पूर्ण-प्रेम-स्वरूपकम् ।
सर्वाधारं निराधारं शङ्करं हृदयालयम् ॥२६॥
मुकुन्दः—"मुकुं भक्तिरसप्रेमवचनं वेद-सम्मतम् । यस्तद् ददाति विप्रेभ्यो मुकुन्द स्तेन कीर्तितः ॥" इति ब्रह्मवैवर्ते ॥

ध्यात्वैवं परमात्मानं भगवन्तं भवेश्वरम् ।
विन्देत ममतां तस्मिन् तत्-कारुण्य-प्रभावतः ॥२७॥

निष्काम-ममता-युक्तो विष्णु-चिन्तन-तत्परः ।
इन्द्रियाणि समस्तानि कुर्यादन्तर्मुखाण्यरम् ॥२८॥
अरम्—शीघ्रम् ।

अनन्य-विषयं कृत्वा मनो बुद्धिं लभेत च ।
अनन्यां ममतां शम्भौ परम-प्रेम-संप्लुताम् ॥२९॥

अनन्या—अन्यैः सह सम्पर्क-रहिता ।
शम्भुः—[शं (कल्याणं)+भू+उ (अपादाने) ]॥
संप्लुता—स्नाता । अभिषिक्ता ।

अनन्या ममता शम्भौ जायते बहु-भाग्यतः ।
सैवावलम्बनं नृणां सैवावलम्बनं परम् ॥३०॥

विशोकं पदमालम्ब्य चानन्य-प्रेम-योगतः ।
होमयेत् सर्वदाऽऽत्मानं शुद्धे बुद्धेऽव्यये पदे ॥३१॥
विशोकः—शोक-रहितः ॥ अनन्यम्—अन्यैः सह सम्पर्क-रहितम् । भेद-विरहितम् ॥ पदे—स्थाने । वस्तुनि ।

परमो निर्मलो भूत्वा क्षेत्रज्ञं ब्रह्मणि न्यसेत् ।
वृत्ति-हीनं मनः कृत्वा शिवे जीवं विलापयेत् ॥३२॥
क्षेत्रज्ञः—[क्षेत्रं शरीरं जानाति, क्षेत्रे शरीरे वा जानाति (ज्ञानवान् भवति)] जीवात्मा ।
विलापयेत्—विलीनं कुर्यात् ।

ज्ञानी योगी भवेदित्थं मुनिश्चैव जितेन्द्रियः ।
संसिद्धिं परमामित्थं शान्तिं विन्देत शाश्वतीम् ॥३३॥
संसिद्धिः—परमा सिद्धिः । मोक्षः ।

तोयं विना यथा तृष्णा निश्चितं न प्रणश्यति ।
ब्रह्म-प्राप्तिं विना जीवो दुःखान्तं नैव गच्छति ॥३४॥

मन्थजं लीयते सम्यक् प्राप्य पावक-सन्निधिम् ।
शोका दोषा विलीयन्ते तथा प्राप्येश-सन्निधिम् ॥२५॥

मन्थजम्—मन्थात् दधि-मन्थनात् जायते यत् तत् । नवनीतम् ।

शुष्कं काष्ठं यथा शीघ्रं दह्यते दीप्त-वह्निना ।
शोका दोषा विदह्यन्ते ब्रह्म-दर्शन-वह्निना ॥२६॥

जगच्चिन्तां परित्यज्य नित्यं ब्रह्म विचिन्तयन् ।
गोष्पदीकुरुते विद्वान् संसारं शोक-सागरम् ॥२७॥

अतएव न कर्तव्यः प्रमादो ब्रह्म-चिन्तने ।
सदा ध्यानादिकं कुर्यात् स्थाने बाधा-विवर्जिते ॥२८॥

प्रमादः—अनवधानता । भ्रान्तिः । विस्मृतिः ॥ "चित्तस्यास्थिरता भ्रान्ति दौर्मनस्यं प्रमादता । योगिनां कथिता दोषा योग-विघ्न-प्रवर्तकाः ॥"

अतुलैक-रसानन्दं ध्यात्वा ब्रह्म भवायनम् ।
सर्वदैव भवेन्मग्नः परमामृत-सागरे ॥२९॥

भवायनम्—भवाश्रयम् ॥ मग्नः—अन्तः-प्रविष्टः ।

---

## षष्ठोल्लासः।

मज्जनं पावने नित्ये महानन्द-महोदधौ।
दुष्करं निश्चितं पुंसा सद्-गुरोः करुणां विना ॥१॥

महानन्दः—परमानन्दः॥ मोक्षः।

गुरुः—(गॄ+कु) गिरति अज्ञानं, गृणाति (उपदिशति) धर्मं यः सः॥ "चिरन्तन-तमो-जुष्टं जन्तोरन्तर मेव हि। को ह्यन्यः श्रीगुरोः पादान्निर्मलं कुरुतेऽर्चिषः॥"

संसार-पाश-बद्धानाम् आत्यन्तिक-विमुक्तये।
गुरुरेव गतिर्नान्यो गुरुरेवावलम्बनम् ॥२॥

संसारः—मिथ्याज्ञान-जन्य-वासना। इति नैयायिकाः॥ स्वादृष्टोपनिबद्धशरीरपरिग्रहः। इति कलाप-टीकायां गोपीनाथः॥ संसरणम्। इति शब्द-रत्नावली॥ संसरन्त्यत्र संसारः॥ जगत्॥ Worldly illusion. The course of worldly life. Mundane existence. Transmigration. Succession of births. The world. [Cf. असारः संसारः। परिवर्तिनि संसारे। संसार-त्यागी। संसार-धर्मः। संसार-बन्धनम्। संसार-लीला। संसार-वासना। संसार-समुद्रः। संसार-स्रोतः। संसाराश्रमः। संसारासक्तः। सारी॥]

आत्यन्तिकः—(१) अतिशयितः। ऐकान्तिकः॥ (२) अविच्छिन्नः।

गतिः—उपायः। "गुरुरुपायः।" इति शिव-सूत्रम्॥

विधातु र्या कृपा-शक्ति र्महामोक्ष-प्रदायिनी।
पशु-पाश-विमोक्षाय गुरु-रूपेण संस्थिता॥३॥

पशुः—[पश् (बन्धने) + उ] संसारिणाम् आत्मा। अविद्याऽस्मितादिभिः पाशितो जीवः॥ मायाबद्धो जीवः॥ अमुक्तो मानवः॥ पशु-धर्मी नरः॥

अज्ञान-तिमिराक्रान्तं कृपाऽञ्जन-शलाकया।
करोत्यनामयं शिष्यं स एव प्रोच्यते गुरुः॥४॥

अज्ञानम्—विरुद्ध-ज्ञानम्। अविद्या। अहम्मतिः॥ अज्ञानं पञ्चप्रकारम्—(१) तमः (आवरकं, मोह-हेतुः), (२) मोहः (देहादिषु आत्म-बुद्धिः), (३) महामोहः (संसार-मूल-कारण-राग-रूपो मोहः), (४) तामिस्रम् (भोगेच्छा-प्रतिघाते क्रोधः), (५) अन्ध-तामिस्रम् (देह-नाशे 'अहमेव मृतोऽस्मि' इति बुद्धिः)॥ वेदान्त-मते सदसद्भ्यामनिर्वचनीयं त्रिगुणात्मकं भाव-रूपं ज्ञान-विरोधि यत् किञ्चित्॥ "अज्ञानाद् बध्यते लोक स्ततः सृष्टिश्च संहृतिः।" इति श्रीमालिनी-विजये॥

तिमिरम्—नेत्र-रोग-विशेषः। "तिमिराख्यः स वै दोष श्चतुर्थं पटलं गतः। रुणद्धि सर्वतो दृष्टिं लिङ्गनाशमतःपरम्॥" इति माधवकरः॥

अञ्जनम्—[अन्ज (दीप्तौ) + अन् (करणे)] नेत्र-दीप्ति-वर्धक-कज्जलम् । अस्य गुणौ—तारा-नैर्मल्य-कारित्वम् । निर्मल-चन्द्रतुल्य-निराकुल-दृष्टिकारित्वञ्च । इति राज-वल्लभः ॥

अनामयः—नीरोगः । सुस्थः ।

सन्देह-तमसाच्छन्नम् अज्ञात-धर्म-तत्त्वकम् ।
मुक्ति-मार्गं नयत्येव सदा स ज्ञान-वर्तिभिः ॥५॥

नयति—परिचालयति ॥ वर्तिः—[वृत् (दीप्तौ) + इ] दीपः ।

शरीरं मानसं वित्तं गुरवे विनिवेद्य यः ।
शिक्षते श्रीगुरो र्योगं शिष्य इत्यभिधीयते ॥६॥

शिष्यः—[शास् (शासने) + क्यप्] शासन-योग्यः । उपदेश्यः ।

श्रद्धैव कारणं मुख्यं शिष्यत्वाधिकृतिं प्रति ।
गुणाः सर्वे भवन्त्यत्र श्रद्धायां सुप्रतिष्ठिताः ॥७॥

मुख्यम्—[मुख + य] आद्यम् । श्रेष्ठम् ।

बीज-मध्ये यथा वृक्षः सूक्ष्म-रूपेण तिष्ठति ।
श्रद्धा-मध्ये गुणाः सर्वे तथा तिष्ठन्ति निश्चितम् ॥८॥

लब्धव्या निर्मला श्रद्धा सर्व-दोष-प्रमोचनी ।
अविश्वासो महाविघ्नो वर्जनीयः प्रयत्नतः ॥९॥

मुमुक्षुश्च महाबुद्धि र्महोद्यमः सदा-शुचिः ।
स्थैर्य-धैर्य-समापन्नो विश्वासी विनयान्वितः ॥१०॥

सत्यवादी तितिक्षुश्च गुरु-सेवा-परायणः ।
लभते परमानन्दं सत्वं गुर्वनुग्रहात् ॥११॥

असाध्यं साधयेत् शिष्यः श्रीगुरोः करुणावशात् ।
तस्मादेव विमोचाय श्रीगुरोः पादमाश्रयेत् १२॥

नास्ति वेद-समं शास्त्रं, नास्ति ज्ञान-समः सुहृत् ।
न भारत-समं क्षेत्रं, न प्रभु र्गुरु-सन्निभः ॥१३॥

भारतम्—भारत-वर्षम् । "तत्रापि भारतं श्रेष्ठं जम्बु-द्वीपे महामुने । यतो हि कर्मभूरेषा ततोऽन्या भोगभूमयः ॥ अत्र जन्म सहस्राणां सहस्रैरपि सत्तम । कदाचिल्लभते जन्तु र्मानुष्यं पुण्य-सञ्चयात् ॥" इति विष्णुपुराणे ॥ "भारतेऽस्मिन् महावर्षे नित्यं सन्निहितो हरिः ।" इति पाद्मोत्तर-खण्डे ॥

क्षेत्रम्—भूमिः । सिद्ध-भूमिः । तीर्थ-स्थानम् ।

स्वार्थ-शून्यः सदा-त्यागी सत्यवादी जितेन्द्रियः ।
शुद्धाचारः शुचि र्दक्षो ब्रह्मज्ञो ब्रह्म-निष्ठितः ॥१४॥
दम्भ-हीनो दया-रूपो जीवाना मभयङ्करः ।
शास्त्रज्ञो बुद्धिमान् विद्वान् गुरुः स उत्तमो मतः ॥१५॥

दक्षः—पटुः । चतुरः । कार्यक्षमः । निपुणः । निरालस्यः ।
ब्रह्मज्ञः—ब्रह्म-ज्ञानी । ब्रह्म-वेत्ता । "ब्रह्म-विद् ब्रह्मैव भवति ॥"

एवम्विधं गुरुं प्राप्य श्रद्धा-पात्रं कृपामयम् ।
दीक्षार्थं तं समुद्गच्छेद् उपायन-समन्वितः ॥१६॥

उपायनम्—[उप (समीपे) + इ (गमने) + अन् (कर्मणि)] उपढौकन-द्रव्यम् । "रिक्त-हस्तो न पश्येच्च राजानं देवतां गुरुम् ॥" "तद्-विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्-पाणिः श्रोत्रियं ब्रह्म-निष्ठम् ॥" इति मुण्डके ॥

भक्त्या विनय-सम्पन्नः प्रणमेद् दण्डवत् क्षितौ ।
अर्चित्वा तं गुरुं सम्यक् प्रेम-पुष्पैस्ततः स्तुयात् ॥१७॥—
अर्चित्वा—अर्चित्वा ।

"नमामि श्रीगुरुं नित्यं विद्वत्-कुल-विभूषणम् ।
योगैश्वर्य-सुसम्पन्नं योगानन्द-प्रदायिनम् ॥१८॥
नमामि त्वां महीयांसं पूर्ण-विज्ञान-विग्रहम् ।
परमानन्द-पाथोधिं दुःख-ताप-निवारणम् ॥१९॥
नमामि त्वां दया-सिन्धुं नमामि विश्व-पावनम् ।
त्वमेव परमं ब्रह्म संसारार्णव-शोषणम् ॥२०॥
त्राहि मां त्राहि मां देव मोह-सागर-मध्यतः ।
ताप-त्रय-परिम्लानं त्राहि मामार्त-वत्सल ॥२१॥
अज्ञान-तिमिराच्छन्नं कृपा-दीपेन भास्वता ।
नाथ मे योग-पन्थानं मोक्ष-मार्गं प्रदर्शय ॥२२॥

रक्ष मां पाप-कर्मभ्यो, रक्ष मां नरकाद् विभो ।
त्वमेव बान्धवो नित्यं त्वमेक-बान्धवो मम ॥२३॥
जानासि त्वं मम क्षेमं, न जानामि कदाचन ।
तस्मात् त्वं योग्य-मार्गेषु सर्वदा मां नियोजय ॥२४॥
जानामि देव-पादानां सेवकै र्न प्रयोजनम् ।
तथापि तव सेवार्थं सदा व्यग्रं मनो मम ॥२५॥
अथवा किं वदाम्यन्यद्, यथेच्छसि तथा कुरु ॥
निवेदयामि चात्मानं, त्वामहं शरणं गतः ॥"२६॥

विद्वान्—आत्म-वित् ॥ पण्डितः । प्राज्ञः ।

ऐश्वर्यम्—ईश्वरत्वम् । प्रभुत्वम् ॥ विभूतिः ॥ अष्टै-श्वर्यं यथा । (१) अणिमा, (२) लघिमा, (३) व्याप्तिः, (४) प्राकाम्यं, (५) महिमा, (६) ईशित्वं, (७) वशित्वं, (८) कामावसायित्वञ्च ।

महीयांसम्—अतिशयेन महान्तम् ।

पाथोधिः—समुद्रः ॥ सिन्धुः—समुद्रः ॥

त्वामेव परमं ब्रह्म—"गुरुरेव परं ब्रह्म ।" "यो गुरुः स शिवः प्रोक्तो यः शिवः स गुरुः स्मृतः । उभयोरन्तरं नास्ति गुरोरपि शिवस्य च' ' इति शिव-पुराणे ॥ मनुष्य-चर्मणाबद्धः साक्षात् पर-शिवः स्वयम् । सच्छिष्यानुग्रहार्थाय गूढं पर्यटति क्षितौ ॥ सद्भक्त-रक्षणायैव निराकारोऽपि साकृतिः । शिवः कृपानिधि र्लोके संसारीव हि चेष्टते ॥ गुरुः सदाशिवः साक्षात् सत्यमेव न संशयः । शिव एव गुरु र्नोचेद् भुक्तिं मुक्तिं

ददाति कः ॥" इति कुलार्णव-तन्त्रे ॥ "गुरुं तन्त्रं देवताञ्च भेदयन् नरकं व्रजेत् ।" इति बृहद्धर्म-पुराणे ॥

मोहः — "मोह-जयाद् अनन्ताभोगात् ( आभोगः = विस्तारः ) सहज-विद्या-जयः ॥" इति शिवसूत्रम् ॥ "यदा क्षोभः (देहादिषु अहं-प्रत्यय-रूपः) प्रलीयेत तदा स्यात् परमं पदम् ॥" इति श्रीस्पन्द-कारिकायाम् ॥

तिमिरम्—अन्धकारः । ( स भयजनकः, मोह-दायकः, दिग्-भ्रम-जनकः, काम-वर्धकः, क्लान्ति-जनकश्च ।]

रक्ष—पालय ॥ नरकः—कष्ट-जनक-स्थानम् । दुःख-भोग-स्थानम् । निरयः ॥ दुःख-प्राप्तिः । दुर्गतिः ।

एवं स्तुत्वा गुरोरग्रे तिष्ठेत् कृताञ्जलिः पुमान् ।
गृह्णाति तं गुणोपेतं शिष्यत्वे श्रीगुरूत्तमः ॥२७॥

"तस्मै स विद्वान् उपसन्नाय सम्यक् प्रशान्त-चित्ताय शमान्विताय । येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तं तत्त्वतो ब्रह्म-विद्याम् ॥" इति मुण्डके ॥

तत स्तं गुण-सम्पन्नं शिष्यं भावे स्थितो गुरुः ।
दीक्षते च यथाकालं शक्ति-पातादि-कर्मणा ॥२८॥

दीक्षते — दीक्षां ददाति ॥ दीक्षा = मोक्षमार्ग-प्रवेशाधिकारः ॥ शक्ति-पातः—अनुग्राहक-शक्ति-संपातः (यदनुविद्ध-हृदयो जनो विवेकोन्मुखतामेति) ।

दिव्यं ज्ञानं ददात्येव कुरुते पाप-संक्षयम् ।
तस्माद् दीक्षेति सा प्रोक्ता मोक्ष-मङ्गल-दायिका ॥२९॥

"दीक्षा-मूलं जपं सर्वं दीक्षा-मूलं परं तपः । दीक्षा-माश्रित्य निवसेद् यत्र कुत्राश्रमे वसन् ॥" "रसमन्त्रे यथा विद्धम् अयः सौवर्णतां व्रजेत् । दीक्षा-विद्ध स्तथा ह्यात्मा शिवत्वं लभते ध्रुवम् ॥" इति कुलार्णवे ॥

गुरोः शक्तिः पतत्येव शिष्ये दीक्षा-प्रभावतः ।
शिष्याधिकार-भेदेन दीक्षायां भिन्नता भवेत् ॥३०॥

स्पर्शनाद् भाषनात् किंवा दर्शना च्चिन्तनाद् गुरुः ।
शिष्ये सञ्चारयेत् शक्तिं कृपया प्रेम-पूर्णया ॥३१॥
योगेन गुण-सम्पन्न-शिष्य-देहं प्रविश्य वा ।
तस्यात्मानं गुरु र्योगी योजयेत् स्वात्मना सह ॥३२॥
भवेद् वा शिष्य-संक्रान्तो धृत्वा मन्त्रमयीं तनुम् ।
येन केन प्रकारेण शक्ति-पातो विमोक्षदः ॥३३॥

स्पर्शनाद्...... चिन्तनात् = स्थूलः,—सूक्ष्मः,—सूक्ष्मतरः,—सूक्ष्मतमः ।

योजयेत्—"आत्मनो ग्रहणं कुर्याद् दीक्षा-काले गुरुर्धिया ।"
संक्रान्तः—व्याप्तः । सञ्चारितः । प्रतिबिम्बितः । Reflected.
मन्त्रम्—"तमः-परिवृते गेहे घटो दीपेन दृश्यते । एवं मायावृतो ह्यात्मा मनुना गोचरीकृतः ॥"

शक्ति-पातो भवेन्नित्यम् अज्ञानेन्धन-दाहकः ।
शक्ति-पातो भवेन्नित्यं भक्तानामार्ति-नाशकः ॥३४॥
शक्ति-पातो भवेन्नित्यं प्रेम-भक्ति-विवर्धकः ।
सत्येवं मङ्गला दीक्षा लभनीया प्रयत्नतः ॥३५॥

आर्तिः—पीडा । मनोव्यथा । दुःखम् ।

प्रेम-भक्तिः—प्रेम्णा भक्तिः । स्नेहयुक्त-भगवत्सेवा । परमेश्वरे ऐकान्तिक-ममता । उत्तमा भक्ति स्त्रिधा । यथा । "सा भक्तिः—साधनं, भावः, प्रेमा चेति त्रिधोदिता ।" (१) साधन-भक्ति यथा । कृतिसाध्या भवेत् साध्यभावा सा साधनाभिधा । नित्य-सिद्धस्य भावस्य प्राकट्यं हृदि साध्यता ॥ (२) भाव-भक्ति यथा । शुद्ध-सत्त्व-विशेषात्मा प्रेम-सूर्यांशु-साम्यभाक् । रुचिभिश्चित्त मासृण्यकृदसौ भाव उच्यते ॥ (३) प्रेम-भक्ति यथा । सम्यङ्मसृणितस्वान्तो ममत्वातिशयाङ्कितः । भावः स एव सान्द्रात्मा बुधैः प्रेमा निगद्यते ॥ इति भक्तिरसामृतसिन्धौ पूर्व-विभागः ॥ मङ्गला—मङ्गलमयी ।

यद्यप्येषा शुभा दीक्षा महाशक्ति-प्रदायिका ।
फलदा सा भवेन्नैव सुयोग्यं पौरुषं विना ॥३६॥

दीक्षां लब्ध्वा सदा शिष्यः प्रयतेत महोद्यमः ।
कुर्वीत सततं योगम् अन्यथाऽरण्य-रोदनम् ॥३७॥

अरण्य-रोदनम्—शान्त्युपायकारक-श्रोतृशून्यं निष्फलं रोद-

नम्। तत्तुल्यं निष्फलं कर्म-मात्रम्। लोके हि रोदने तद्रोदन-शान्त्युपायो दयालुभिः क्रियते। अरण्ये रोदने तु न कश्चित् तस्य शमयिता इति तस्य निष्फलत्वम्।

भवेन्नैव समुन्नद्धो, गुर्वाज्ञां न विचारयेत्।
प्राणानेव परित्यज्य गुर्वादेशं समाचरेत् ॥३८॥

समुन्नद्धः—पण्डितम्मन्यः। गर्वितः।

अवलम्ब्य गुरुं नित्यम् अन्याश्रयं परित्यजेत्।
भर्त्सित स्ताडित स्तेन प्रसाद इति चिन्तयेत् ॥३९॥

शास्ति नित्यं गुरुः शिष्यं शिष्य-मङ्गल-हेतवे।
नयत्युन्नति-पन्थानं यथा-कालं यथा-क्रमम् ॥४०॥

यो गुरोः शासनाधीनः सदा तद्-वश्यतां गतः।
शासने स्थिर-वृत्तिश्च स शिष्यो मुक्ति-भाजनम् ॥४१॥

यस्तु दम्भी स्वयन्धीरो गुर्वाज्ञा मवमन्यते।
स्वातन्त्र्य मीप्सितं येन स शिष्यो नैव मुक्ति-भाक् ॥४२॥

स्वयन्धीरः—"अविद्यायामन्तरे वर्तमानाः स्वयन्धीराः पण्डितम्मन्यमानाः। जङ्घन्यमानाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः ॥" इति मुण्डके ॥

अतः सत्वर मात्मानं गुरु-पादाम्बुजेऽर्पयेत्।
अधिकारी भवेदित्थं पवित्रे योग-कर्मणि ॥४३॥

---

## सप्तमोल्लासः।

एकीकृत्य महाविष्णौ चेतश्चं सुसमाधिन ।।
ब्रह्म-भावे ह्यवस्थानं योगं प्राहु र्मनीषिण: ॥१॥

समाधिः — 'अपराह्न'स्य दशमोल्लासे ३-१४ श्लोकौ द्रष्टव्यौ। तथा च। ''धेय्ये मनः समाविश्य तिष्ठेदपि च सुस्थिरम्। निर्वाणानलवद् योगी समाधिस्थ: प्रगीयते।। न शृणोति न चाघ्राति न रस्यति न पश्यति। न च स्पर्शं विजानाति न संकल्पय ं मनः।। न चाभिमन्यते किञ्चि न्न च बुध्यति काष्ठवत्। एवं शिवे विलीनात्मा समाधिस्थ इहो-च्यते।।" इति शिव-पुराणे।।

लीनतां ध्यातरि प्राप्ते ध्येयेऽद्वैते परात्परे।
धेय्यस्य दर्शनं सम्यग् योगं प्राहु र्मुनीश्वरा: ॥२॥

जीवस्य ब्रह्मणा सार्धम् ऐक्यस्य ज्ञान मुत्तमम्।
शुद्ध-समाधि-गम्यञ्च योग माहु र्महर्षय: ॥३॥

शुद्धः—पूर्णरूपेण चित्त-चाञ्चल्य-विरहितः।

असीमं परमाद्वैतं समाधि-ज्ञान-नेत्रत:।
द्वैत-हीनं यदा दृष्टं योगश्चाधिगत स्तदा ॥४॥

एवं सत्यतमं ज्ञानं परमेण समाधिना।
योगमाहुश्च योगा हि तस्योपाया: सदातनाः ॥५॥

सदातनाः—सनातनाः। "योगेन साधयेद् योगम ।"

योगाश्च बहवः सन्ति ज्ञानं भक्ति लयो जपः ।
प्राणायामः प्रपत्तिश्च कर्म-योग स्तथाऽपराः ॥६॥

ज्ञान-योगः—ब्रह्म-ज्ञान-प्राप्त्युपायः ॥ भक्ति-योगः—परमेश्वरे भजन-सम्बन्धः ।

लयो योगः—शरीर-प्राण-मानसानां चिच्चमत्कार-रसे मज्जनेन प्रशमनम् । समाध्यभ्यास-पाटवेनातितप्त-लोहतलच्छिप्त-जल-बिन्दुवत्—तैलरहित-दीपकलिकावच्च परमानन्दे चित्त-वृत्ते र्लयः ॥ प्रपत्तिः—शरणागतिः ।

सर्वे हि पूर्णतां यान्ति, सर्वे निर्वाण-दायकाः ।
एकमेवाश्रयेद्धीरः स्वाधिकारानुसारतः ॥७॥

प्रत्येकं भेषजं सर्व-रोगिभ्यो नैव शोभते ।
प्रत्येकः साधनोपायः सर्वेषां नैव युज्यते ॥८॥

अनुकूलः शुभो योगः शिक्षणीयो गुरोः सदा ।
शिक्षणीयोऽवधानेन, करणीयः प्रयत्नतः ॥९॥

अवधानम्—मनोयोगः । प्रणिधानम् ।

सर्वेभ्यो विषयेभ्यश्च समाहृत्य मनो नरः ।
कुर्याद् योगेन संरुद्धं केवले परमात्मनि ॥१०॥

प्रकीर्णे विषयारण्ये प्रधावन्तीन्द्रियाणि च ।
ज्ञान-संयम-पाशेन यत्नेन वशं मानयेत् ॥११॥

प्रकीर्णम्—विस्तृतम् ।

विश्वे ताप-त्रयं दृष्ट्वा पूर्णानन्दं परेश्वरे ।
ज्ञान-वैराग्य-संयुक्तः सर्वं विश्वं परित्यजेत् ॥१२॥

नश्वराणि समस्तानि विश्वानि कृत्रिमाणि च ।
दुःखमयानि बध्नन्ति तान्यञ्जसा परित्यजेत् ॥१३॥

कृत्रिमाणि—कल्पना-प्रसूतानि । काल्पनिकानि । अयथार्थानि । अञ्जसा—शीघ्रम् । द्रुतम् ।

बध्नन्ति स्नेह-जालेन मुग्धं चेतो हि बन्धवः ।
संसार-कारणं मोहं दुःखालयं परित्यजेत् ॥१४॥

जालम्—[ जल् ( आच्छादने ) + अ ] सूत्रादि-निर्मित-मत्स्यादि-धारणोपायः ॥

क्षुत्-पिपासा-जरा-व्याधि-संयुक्ताय विनाशिने ।
अशुद्धाय शरीराय योगं नैव परित्यजेत् ॥१५॥

जरा—वयःकृत-श्लथमांसाद्यवस्थाभेदः ।

शरीरम् — [शॄ(वधे, नाशे) + ईर (कर्मणि)] शीर्यते रोगादिना यत् तत् । प्रतिक्षणं क्षीयमाणो देहः ।

विषयान् सम्परित्यज्य निस्पृहो निष्परिग्रहः ।
योगं समभ्यसे दात्म-शोधनाय शिवाय च ॥१६॥

योग-योग्यत्व-सिद्ध्यर्थं वैराग्येण प्रयोजनम् ।
वैराग्याय विशुद्धाय सदाचारैः प्रयोजनम् ॥१७॥

सदाचारं भजेन्नित्यं सर्वदोष-निसूदनम् ।
सदाचारं भजेन्नित्यं चतुर्वर्ग-फल-प्रदम् ॥१८॥
सदाचारं भजेन्नित्यं सर्व-कल्याण-हेतवे ।
अधर्मं सर्वथा हित्वा श्रद्धया प्रीतये हरेः ॥१९॥

निसूदनम्—विनाशनम् ।

सन्ति सर्वेषु वर्णेषु सर्वाश्रमेषु साधवः ।
साधु र्भवेत् सदा कृत्वा सदाचारोपसेवनम् ॥२०॥

Comp. "सर्वे वर्णाः स्त्रियः सर्वाः कृत्वा पापानि भस्म-सात् । ध्यानाग्निनाऽमलाः सन्तो लभन्ते परमां गतिम् ॥" इति गारुडे ॥

युक्ति-युक्तं सदाचारं क्षेमदं गुरु-सम्मतम् ।
सेवेत श्रद्धया नित्यं निष्कामः सन्नतन्द्रितः ॥२१॥

अतन्द्रितः—सावधानः । अनलसः । अविरामः ।

क्षुद्र-चेताः फलाकाङ्क्षी न भवेद् धर्म-वाणिजः ।
शिवार्चया सदाचारो निष्कामानां विमुक्तिदः ॥२२॥

कामी कामातिरिक्तञ्च लभते न कदाचन ।
निष्कामो लभते सर्वं श्रीविष्णोश्चातिवल्लभः ॥२३॥

वल्लभः—प्रियः ।

प्रभा सूर्ये, तिले तैलं यथा सदैव तिष्ठति ।
सर्वदैव ध्रुवं कामे दुःखानां भवति स्थितिः ॥२४॥

पापं क्रोधो महोद्वेगः—सर्वं कामात् प्रवर्त्तते।
कामाग्निं शमयेत् तस्मात् संयमामल-वारिणा ॥२५॥

सर्वान् कामान् परित्यक्तुम् असमर्थस्तु यो नरः।
सात्त्विकेनैव कामेन राजसं तामसं जयेत् ॥२६॥

सात्त्विकः—सत्त्व-गुणोद्भवः॥ [सतः साधो भावः सत्त्वं; प्रकाशकं ज्ञानं, सुख-हेतुः]। राजसः — रजोगुणोद्भवः। [रजः—रागात्मकं; दुःख-हेतुः]। तामसः—तमोगुणोद्भवः। [ताम्यति ग्लानिं प्राप्नोति अनेनेति तमः; आवरकं, मोह-हेतुः]। सत्त्वगुणान्वितस्य मनसो गुणाः—(१) आस्तिक्यं, (२) सदसद्-विवेचना-पूर्वकं भोजनम्, (३) अक्रोधः, (४) सत्य-निष्ठा, (५) मेधा, (६) बुद्धिः, (७) धृतिः, (८) क्षमा, (९) करुणा, (१०) आत्म-ज्ञानं, (११) कपटाभावः, (१२) अनिन्दितं कर्म, (१३) निष्कामत्वं, (१४) विनयः, (१५) धर्म-परायणता॥ रजोगुणान्वितस्य मनसो गुणाः—(१) क्रोधः, (२) ताडन-शीलता, (३) अत्यन्तं दुःखम्, (४) अत्यन्त-सुखेच्छा, (५) कपटता, (६) कामुकता, (७) मिथ्या-वादित्वम्, (८) अधीरता, (९) अहङ्कारः, (१०) ऐश्वर्याद् अभिमानिता, (११) अतिशयितानन्दः, (१२) अधिक-भ्रमणम्॥ तमोगुणान्वितस्य मनसो गुणाः — (१) नास्तिकता, (२) अत्यन्त-विषण्णता, (३) आलस्यं, (४) दुष्ट-बुद्धिः, (५) निन्दित-कर्मणि प्रीतिः, (६) अत्यन्त-निद्रालुता, (७) सर्वथा अज्ञानता, (८) सर्वदा क्रोधान्धता, (९) मूर्खता॥

( पूर्ण-ज्योतिः ३-२-२ श्लोको द्रष्टव्यः । ) दया, मुक्तीच्छा, धर्म-परायणता—सात्त्विकम् । अजस्रं विषयोपसेवनं, फलार्थं कर्मानुष्ठान-शीलता, ख्यातीच्छा — राजसम् । जीव-हिंसा, आराम-प्रियता, कुकर्मेच्छा — तामसम् । विष्णुसेवापराधः, नामापराधः, असत्-प्रतिग्रहः, अभिचार-कर्म, पश्वादि-जीव-हननं, पातकं, मोहः, अहङ्कारः, कामः, क्रोधः, सर्वं गर्हितं कर्म—राजसं तामसञ्च ।

राजसं तामसं त्यक्त्वा सत्त्वे तिष्ठति यो नरः ।
भवत्येव गुणातीतः सत्वरं स, न संशयः ॥२७॥

कामयेत सदा विद्वान् विष्णु-प्रेम सुदुर्लभम् ।
कामयेत सविज्ञानं ज्ञानञ्च दर्शनं हरेः ॥२८॥
कामयेत सदा प्राज्ञ आत्मोन्नतिं सुनिर्मलाम् ।
कामयेत सदा प्राज्ञः सर्वेषाञ्च शिवं शुभम् ॥२९॥

ज्ञानम्—परोक्ष-ज्ञानम् । औपदेशिकं ज्ञानम् ॥ विज्ञानम्—अपरोक्ष-ज्ञानम् । समाधिजं ज्ञानम् ।

इच्छा-शक्ति-मतां नृणां दुर्लभं नास्ति भूतले ।
इच्छा-शक्ति-प्रभावेण लभ्यते सकलं भवे ॥३०॥

"क ईप्सितार्थ-स्थिर-निश्चयं मनः । पयश्च निम्नाभिमुखं प्रतीपयेत् ॥" इति कालिदासः ॥

इच्छा-शक्ति-दृढा यस्य तत्-सकाशे सुनिश्चितम् ।
वशं याति महाव्याघ्रः सर्पो लोटयते शिरः ॥३१॥

इच्छा-शक्ति-प्रभावेण लक्ष्यं सदैव साधयेत्।
इच्छा-शक्ति-प्रभावेण संसार-सागरं तरेत् ॥३२॥

इच्छयेच्छां दृढीकुर्वन् सदिच्छां वर्धयन् सदा।
संसेवेत सदाचारं संयमादि-समन्वितम् ॥३३॥

---

## अष्टमोल्लासः।

सर्व-बन्ध-विनिर्मुक्तो निषेध-विधि-वर्जितः।
भवितुं त्रिगुणातीतः संनियच्छामि मामहम् ॥१॥

संनियच्छामि—नियमाधीनं करोमि। Restrain.

नित्यं नियम मास्थाय तपत्येव गभस्तिमान्।
नित्यं नियम मास्थाय भ्रमत्येव कलानिधिः ॥२॥
नित्यं नियम मास्थाय घूर्णते भव-चक्रकम्।
नित्यं नियम मास्थाय जीवनं चालयाम्यहम् ॥३॥

आस्थाय—अवलम्ब्य॥ गभस्तिमान्—सूर्यः॥
कलानिधिः—चन्द्रः।

उच्छृङ्खलः प्रपञ्चात्मा तृष्णयाऽऽकुलितेन्द्रियः।
स्व-दुर्बुद्धिं समालम्ब्य दम्भ-दर्पादि-योगतः ॥४॥
ममता-पाश-सम्बद्धः सर्वदा भोग-लोलुपः।
मरणान्मरणं याति दुःखाद् दुःखं सुदारुणम् ॥५॥

उच्छृङ्खलः—शृङ्खला-रहितः। उद्दामः। अनियन्त्रितः॥
अपञ्चात्मा—संसारासक्तः।

न काङ्क्षे पदवीं तस्य चिन्ता-जर्जर-चेतसः।
यास्याम्यहं सदा मार्गं यः खलु श्रुति-सम्मतः॥६॥
पदवी—पद्धती। पन्थाः।

किं कर्तव्य मकर्तव्यं किं भोग्यं किमभोग्यकम्।
विज्ञातु मुपगच्छामि श्रीगुरुं भव-तारकम्॥७॥

प्रतिपाल्य तदादेशं संसार-क्लेश-नाशनम्।
प्राप्स्याम्यहं, न सन्देहः, पूर्णात् पूर्णं सुखात् सुखम्॥८॥

विषयासक्ति-सन्त्यक्तः शीलाचार-समन्वितः।
प्राणानिव पणीकृत्य स्व-धर्मं पालयाम्यहम्॥९॥
शीलम्—सद्वृत्तम्। चरित्रम्। स्वभावः॥ ब्रह्मण्यता, देव-पितृ-भक्तता, सौम्यता, अनसूयता, मृदुता, अपारुष्यं, मैत्रता, कृतज्ञता, श्रद्धा, कारुण्यं, प्रशान्तिः— एतानि शीलानि। "शीलं—राग-द्वेष-परित्यागः।" "Do thy duties great and small, To thyself, to God, to all, Nicely, timely, gladly all. &c." *Yoga and Perfection*.

क्षुधितानां यथाऽन्ने च तर्षितानां यथा जले।
तथा मे भवतु प्रीति र्नारायणे चिरन्तने॥१०॥
तर्षितानाम्—तृषितानाम्।

अर्चित्वा शङ्करं देवं पुराणं नित्य-नूतनम् ।
संसेव्य तं विभुं पूर्णं मोदिष्ये विष्णु-मन्दिरे ॥११॥

अर्चना पञ्चविधा । (१) देवतास्थान-मार्जनम् । उपलेपनम् । निर्माल्य-दूरीकरणञ्च ॥ (२) गन्ध-पुष्पादि-संग्रहः ॥ (३) यथा-विधि पूजन-चेष्टा ॥ (४) मन्त्रस्य अर्थ-सन्धानतो जपः । सूक्त-स्तोत्रादि-पाठः । संकीर्तनम् । भगवन्नाम-शास्त्राभ्यासश्च । (५) देवता-चिन्तनम् ।

पुराणः—नित्यः । 'पुरा नव' इति पुराणः ।

संसेव्य—[सेवापराधाः—अपवित्र-भोजनम् । अनिषिद्ध-दिने दन्तधावनमकृत्वा देवोपसर्पणम् । अपवित्रावस्थायां पूजन-स्पर्शनादिकम् । शास्त्र-निन्दा । निषिद्ध-द्रव्येण पूजनम् । काम-क्रोध-लोभादि-विद्धस्य देवार्चनम् । देव-मन्दिरे-भक्षणम् । सुरापानादिकम् ।...]

ध्यात्वा नित्यं जगद्-योनिं लीला-कल्लोल-वारिधिम् ।
सदा-शुद्धः सदा-बुद्ध स्तनुं प्राप्स्यामि वैष्णवीम् ॥१२॥

कल्लोलः—महातरङ्गः ।

वैष्णवीं तनुम्—["मोहस्तन्द्राभ्रमो रुक्षरसता काम उत्कटः । लोलता मदो मात्सर्यं हिंसा-खेद-परिश्रमाः ॥ असत्यं क्रोध आकाङ्क्षा आशङ्का चित्त-विभ्रमः । विषमत्वं परापेक्षा दोषा अष्टादश स्मृताः ॥" (लोलता=(१) चञ्चलता (२) लोभः (३) शिथिलत्वम् ।) ] अष्टादश-महादोष-रहितां विज्ञानानन्द-रूपिणीं तनुम् ।

अविच्छिन्न-तपो-योगात् समाराध्य जगत्-पतिम् ।
लप्स्येऽहं परमानन्दं हित्वा संसार-बन्धनम् ॥१३॥

इष्टदेवं सुसम्पूज्य बालार्क-किरणोज्ज्वलम् ।
लप्स्येऽहं परमं ज्ञानं रहस्यं श्रुति-गूहितम् ॥१४॥
रहस्यम्—गुप्त-तत्त्वम् ।

तोषयेत् सलिलं पत्रं यं देवं करुणाकरम् ।
तं न स्मरन्ति मूढा ये तेषां वृथैव जीवितम् ॥१५॥

तस्यैव सफलं जन्म जीवितं तस्य सार्थकम् ।
शम्भु-पादाम्बुजे यस्य मानसं भ्रमरायते ॥१६॥

तस्यैव सफलं जन्म जीवितं तस्य सार्थकम् ।
पश्यन् विष्णुं सदा विश्वे सेवते विश्व मन्वहम् ॥१७॥
अन्वहम्—अनुदिनम् । प्रत्यहम् ।

कार्यमेकं जगत्-सेवा जनानां गृह-मेधिनाम् ।
धन्योऽसौ मानवो यो हि परार्थैक-प्रयोजनः ॥१८॥
गृहमेधी—गृहस्थः ।

दुष्करं विश्व-सेवायाम् अस्ति किं जगती-तले ।
सेवायाः परमाकाङ्क्षा निःस्वार्था यदि वर्तते ॥१९॥
तर्षिताय च रोगिभ्यो जलं दातुं न कः क्षमः ।
यात्रिकं सत्-पथं प्रेमणा को न दर्शयितुं क्षमः ॥२०॥

स्वदोष-त्यागतो विश्वं सेवितुञ्च न कः क्षमः।
किञ्चिदल्पं धनं दातुं दरिद्रोऽपि ध्रुवं क्षमः ॥२१॥

कोऽर्थो वित्तेन सर्वेण कोऽर्थश्च जीवितेन वा।
यदि नो तोष्यते ब्रह्म सर्वात्मा विश्व-सेवया ॥२२॥

इन्द्रिय-सेवनं घृण्यं कुक्कुटस्यापि वर्तते।
जीविष्यामि परार्थाय सर्वदा दान-तत्परः ॥२३॥

स्वार्थ-बुद्धिं हनिष्यामि मनो दाने निवेशयन्।
दुःखस्यान्तं गमिष्यामि शङ्करं परिचिन्तयन् ॥२४॥

सर्वदा पीडयिष्यामि राग-द्वेषादि-राक्षसान् ।
आदरेण वरिष्यामि गुणान् सर्वान् सदाऽमलान् ॥२५॥

सत्त्वेन राजसं दोषं संपीड्य रजसा तमम्।
सदाऽऽत्मानं पविष्यामि त्यक्त्वा वैषयिकं सुखम् ॥२६॥
पविष्यामि—पवित्रं करिष्यामि।

ज्ञानतोऽज्ञानतो वाऽपि नरै यत् पातकं कृतम्।
अवश्यमेव भोक्तव्यं फलं तस्य सुदारुणम् ॥२७॥

अतएव सदैवाहं गुरूपदिष्ट-मार्गतः।
चरिष्यामि सदाचारं भक्ति-वैराग्य-बृंहितम् ॥२८॥
बृंहितम्—वर्धितम्। पुष्टम्।
"गृहस्थेन सदा कार्य माचार-परिपालनम्।" "यज्ञ-दान-

तपांसीह पुरुषस्य न भूतये। भवन्ति यः समुल्लङ्घ्य सदाचारं प्रवर्तते॥" "आचारो ह्यलक्षणम्॥" "धर्मोऽस्य मूलं, धनमस्य शाखा, पुष्पञ्च कामः, फलमस्य मोक्षः। असौ सदाचार-तरुः सुकेशिन् संसेवितो येन स पुण्य-भोक्ता॥" [आदौ कुसङ्गं, कुकर्म, कुचिन्तां, कुमित्रं, कुपुस्तकं, कुभोजनं तथा अभिमानादि-दोषान् परित्यज्य सद्गुणान् वर्धयेत्; सत् कर्मणि सच्चिन्तायां निरतो भवेत्; उपयुक्त-विद्याभ्यासं कुर्याच्च। दीक्षां लब्ध्वा गुर्वधीनो भूत्वा सदाचारान् प्रपालयेत्॥] सदाचारानुष्ठानं यथा। रजन्या स्तृतीय-प्रहरान्तःकाले त्यक्त-निद्रः परमेश्वर-मनुस्मरेत्। तदनन्तरं श्रीगुरो ध्यानं मानस-पूजनञ्च सम्पाद्य ऋषीन् प्रणमेत्, सर्वेषां मङ्गलं चिन्तयेच्च। ततो निर्जने उपयुक्त-स्थाने वेगोत्सर्गं कृत्वा दन्त-धावन-पूर्वकं अरुणोदय-काले प्रातः-स्नानं कुर्यात्। तदनन्तरं तर्पणं सूर्यार्घ्यञ्च समाप्य प्रातः-सन्ध्यां समाचरेत्। केशान् संशोध्य, तिलकं सम्पाद्य, होमं कृत्वा, स्वाध्याय माचरेत्। ततः स्वास्थ्य-रक्षणाय उपयुक्तं व्यायामं कृत्वा न्याय-धर्मानुसारेण अर्थोपार्जने प्रयत्नं कुर्वीत। स्नानान्ते मध्याह्न-सन्ध्यामुपास्य श्रद्धा-भक्ति-योगेन यथा-विधि इष्टदेवं पूजयेत्। पितृ-यज्ञं, नृ-यज्ञं, भूत-यज्ञं परिसमाप्य, पोष्यगणैः सह यथाकाले पवित्रेण मनसा यथोपयुक्तं भोजनं समाचरेत्। भक्ति-पुतेन मनसा किञ्चित् कालं भगवत-प्रसङ्गं कृत्वा अपराह्न-कृत्यानि सम्पाद्य यथाकाले स्नान-सन्ध्या-होमा

दीनि सायं-कृत्यानि समाचरेत् । ततो भोजनावसाने परमेश्वरं ध्यायन् शय्यां गच्छेत् । पुनरुपयुक्त-काले जागृयाच्च ॥ अहन्य-हनि एवं कुर्यात् । धर्मोत्सवान्, पुण्यजनक-व्रतानि तथा सर्वाणि नित्य-नैमित्तिक-कृत्यानि यथा-शास्त्रं समाचरेत् । तीर्थ-यात्रां गच्छेत् । सज्जनं तथा सच्छास्त्रं श्रद्धया सेवेत । पोष्यवर्गं प्रतिपालयेत् । सन्तानं तथा आश्रितार्भकं विद्यामभ्यासयेत्, शौचाचारांश्च शिक्षयेत् । दानेन, विश्व-सेवया च स्वार्थ-बुद्धिं हन्यात् । सर्वत्र शिवं पश्येत् । शिवे निर्भरतां कृत्वा तत्-प्रीत्यर्थं सर्वाणि कर्तव्यानि यथाकाले यथाशास्त्रं सुचारु-रूपेण समाचरेत् । सर्वदा संयतो भूत्वा कर्म-फलानि ईश्वराय विनि-वेद्य आश्रम-धर्मान् पालयेत् ; अधिकारानुसारेण योगाभ्यासञ्च कुर्यात् । एवं सदाचारं प्रतिपाल्य योगि-जीवनं प्राप्य साधन-चतुष्टय-सम्पन्नः सन् सर्व-त्यागेन शिव-कृपया शिवं परिज्ञाय शिवो भवेत् ॥

---

# मध्याह्नः ।

## प्रथमोल्लासः ।

एक-यामावशेषायां रात्रौ निद्रां त्यजेन्नरः ।
चिन्तयेज्जगतामीशं भुक्ति-मुक्त्येक-कारणम् ॥१ ॥—
यामः—प्रहरः ॥ भुक्तिः—भोगः ।

"सृष्टि-स्थिति-लयानाञ्च हेतु-भूतं सनातनम् ।
अहेतुकं हृषीकेशं मायाधीशं नमाम्यहम् ॥ २ ॥
शुद्धं बुद्धं ध्रुवं सत्यं निष्कलं परमं-शिवम् ।
वन्दे देवं भवाराध्यं भाव-गम्यं परात्परम् ॥ ३ ॥
स्व-प्रकाशं चिदानन्दं भासयन्तं चराचरम् ।
वन्देऽहं शङ्करं नित्यं गुणाधारञ्च निर्गुणम् ॥ ४ ॥
साकारञ्च निराकारं कोटि-ब्रह्माण्ड-विग्रहम् ।
सर्वाधारं निराधारं नित्य-पूर्णं नमाम्यहम् ॥ ५ ॥
चतुर्णां पुरुषार्थानां दातारं करुणामयम् ।
सर्वावलम्बनं नित्यम् आशुतोषं नमाम्यहम् ॥ ६ ॥
भक्तानुग्रह-कर्मार्थं स्वेच्छाविष्कृत-विग्रहम् ।
लीला-रस-समायुक्तं सर्व-रूपं नमाम्यहम् ॥ ७ ॥

त्वमेव कालिका श्यामा मुण्डमाला-विभूषणा ।
शवारूढा शिरः-खड्ग-वराभीति-कराम्बुजा ॥ ८ ॥
त्वमेव गोकुलानन्दो गोपालो नन्द-बालकः ।
रासाधिष्ठातृ-देवश्च गोविन्दः श्याम-सुन्दरः ॥ ९ ॥
त्वमेव श्रीमहादेवः पञ्चानन स्त्रिलोचनः ।
व्योमकेश उमा-कान्तो भूत-नाथो वृषध्वजः॥१०॥
त्वमेव श्रीमहाविष्णु र्लक्ष्मी-कान्तो जनार्दनः ।
शङ्ख-चक्र-गदा-धारी पीताम्बरो मनोरमः ॥ ११ ॥
त्वमेव कुण्डली माता शब्द-ब्रह्म-स्वरूपिणी ।
योगेश्वरी महादेवी निर्वाण-पद-दायिनी ॥ १२ ॥
त्वमेव यन्त्र-रूपश्च सर्वाभीष्ट-प्रदायकः ॥
सर्व-विद्या-मयो मन्त्रो मूलाऽविद्या-निवर्तकः ॥१३॥
त्वमेव स्पर्शनो व्योम वरुणश्च हुताशनः ।
त्वमेव दानवो देव श्चन्द्रमा लोक-लोचनः ॥ १४ ॥
त्वमेव सागराः शैलाः पशु-पक्षि-नरादयः ।
त्वमेव जागरा निद्रा क्षुत् पिपासा क्षमा धृतिः ॥१५॥
वह्नौ त्वं दाहिका शक्तिः शोभा-शक्तिश्च चन्द्रिरे ।
पारिकाङ्क्षिणि योग स्त्वं मोहः सांसारिकस्य च ॥१६॥
त्वमेव देश-कालौ च पुण्यापुण्यं शिवाशिवम् ।
त्वमेव सर्व-कर्ता हि त्वमेव सर्व-कारणम् ॥ १७ ॥

त्वमेव रक्षको नित्यं सर्वेषाञ्च, महेश्वर ।
सर्वेषाञ्च गति र्भर्ता सर्वेषां परमः सुहृत् ॥ १८ ॥
वेद स्तस्य चतुर्वक्त्रो गुणान् वक्तुं क्षमो न ते ।
विचित्रा ते गति र्नित्यं त्वामनन्तं नमाम्यहम् ॥१९॥
श्रद्धां भक्तिं मतिं देहि देहि मे ज्ञानमुत्तमम् ।
संस्पृश्य मां कराब्जेन परां शान्तिं प्रयच्छ मे ॥२०॥
प्रीयतां देव-देवेश नित्यं मे परमेश्वर ।
सर्वं मया कृतं कर्म भवेदाराधनं तव ॥ २१ ॥
निर्बलं मां जडात्मानं सदा त्वं करुणामय ।
क्षेमान्वितं शिवं मार्गं स्नेहेन कृपया नय ॥२२ ॥
बलं धर्मो गृहस्थानां, न्यासः सन्न्यासिनां बलम् ।
सतां सत्यं बलं नित्यं शिष्याणां गुरु-सेवनम् ॥२३॥
बलं त्वमेव भक्तानां, बालानां रोदनं बलम् ।
बलैः सर्वै र्विहीनोऽस्मि निर्बलोऽस्मि सुनिश्चितम् ॥२४॥
एकान्त-करुणा-पात्रम् अहमेव न संशयः ।
मामुद्धर जगन्नाथ नीच-त्राण-परायण ॥ २५॥
नमामि त्वामहं नित्यं त्वामेवानुस्मराम्यहम् ।
त्राहि मां करुणा-कान्त परां भक्तिं प्रयच्छ मे ॥२६॥
संसार-दुर्गमे नाथ त्वं हि मां परिचालय ।
तवैव प्रीतये देव सन्तु कर्माणि मे सदा ॥"२७॥

माया—दुर्घट-सम्पाद-समर्थः शक्ति-विशेषः । ( 'सायाङ्क'स्य सप्तदशोल्लासो द्रष्टव्यः । )

पुरुषार्थः—पुरुषस्य प्रयोजनम् । स च चतुर्विधः—"धर्मार्थ-काममोक्षाश्च पुरुषार्था उदाहृताः ।" गोस्वामि-मते भक्तिः पञ्चम-पुरुषार्थः ।

लीला—खेला । क्रीडा ।

वराभीति-कराम्बुजा—"अभयं वरदञ्चैव दक्षिणाधोर्ध्व पाणि-काम्" ॥ रासः—बहुनर्तकीयुक्तो नृत्य-विशेषः ।

गोविन्दः—गवाध्यक्षः ॥ श्रीकृष्णः ॥ गाः इन्द्रियाणि विन्दति अधिकरोति इति गोविन्दः, हृषीकेशः ।

महादेवः—शिवः । "ब्रह्मादीनां सुराणाञ्च मुनीनां ब्रह्म-वादिनाम् । तेषाञ्च महतां देवो महादेवः प्रकीर्तितः ॥ महती पूजिता विश्वे मूल-प्रकृतिरीश्वरी । तस्या देवः पूजितश्च महादेवः स च स्मृतः ॥" इति ब्रह्मवैवर्ते ॥

पञ्चाननः—"पञ्चब्रह्मात्मको यस्मात् तेन पञ्च-मुखः स्मृतः ॥" "सद्योजातं वामदेव मघोरञ्च ततः परम् । तत्पुरुषं तथेशानं पञ्चवक्त्रं प्रकीर्तितम् ॥ सद्योजातञ्च वै शुक्लं शुद्धस्फटिकसन्नि-भम् । पीतवर्णं तथा सौम्यं वामदेवं मनोहरम् ॥ कृष्णवर्ण-मघोरञ्च सम भीमविवर्धनम् । रक्तं तत्पुरुषं देवि दिव्यमूर्ति मनोहरम् ॥ श्यामलञ्च तथेशानं सर्वदेव शिवात्मकम् ॥ चिन्तयेत् पश्चिमे चाद्यं द्वितीयञ्च तथोत्तरे । अघोरं दक्षिणे देवं पूर्वे तत्-

पुरुषं तथा ॥ ईशानं मध्यतो ज्ञेयं चिन्तयेद्भक्ति-तत्परः ॥" इति निर्वाणतन्त्रे ॥ ध्वजः—चिह्नम् ।

कुण्डली—कुण्डलिनी शक्तिः । "मूलाधारे सर्पवत् कुण्डली-भूता नाडी वर्त्तते ; तन्मध्य-स्थायित्वादियं कुण्डली ॥"

माता—मान्यते पूज्यते या सा । इति भरतः ॥ जननी ॥

यन्त्रम्—देवाद्यधिष्ठानम् । पूजाधार-यन्त्रम् । "शालग्रामे मणौ यन्त्रे प्रतिमामण्डलेषु च । नित्यं पूजा हरेः कार्या न तु केवल भूतले ॥" "लिङ्गस्थां पूजयेद् देवीं पुस्तकस्थां तथैव च । मण्डलस्थां महामायां यन्त्रस्थां प्रतिमासु च ॥" "आदौ लिखेद् यन्त्रराजं देवतायाश्च विग्रहम् ॥ काम-क्रोधादि-दोषोत्थ-सर्वदुःख-नियन्त्रणात् । यन्त्रमित्याहुरेतस्मिन् देवः प्रीणाति पूजितः ॥ दुःख-निर्यन्त्रणाद् यन्त्रमित्याहु स्तन्त्र-वेदिनः ॥"

स्पर्शनः—पवनः ॥ लोक-लोचनः—सूर्यः ॥ शोभा—कान्तिः । श्रीः । द्युतिः । सुषमा ॥चन्दिरः—चन्द्रः ॥ पारिकाङ्क्षी—तपस्वी ।

आराधनम्—साधनम् । तोषणम् । सेवनम् ॥ न्यासः—अर्पणम् । निक्षेपः । त्यागः ॥ नीचः—जाति-गुण-कर्मादिभिः निकृष्टः । अधमः ॥ कान्तः—पतिः ।

एवं प्रार्थ्य महादेवं, प्रणमेत् तं पुनः पुनः ।
सुखासन-समासीनो ध्यायेद् गुरु मतःपरम् ॥ २८ ॥

सहस्रार-महापद्म-कर्णिकां चिन्तयेद् बुधः ।
तन्मध्ये परमं दीप्रं मणि-पीठं विभावयेत्॥ २९ ॥

ध्यायेत् तत्र गुरुं गौरं शुद्ध-स्फटिक-भास्वरम् ।
चतुर्वर्ग-प्रदातारं सुलक्षण-पदाम्बुजम् ॥ ३० ॥
निधानं सर्व-विद्यानां श्वेताम्बर-सुशोभितम् ।
श्वेतानुलेपनं शान्तं वराभीति-कराम्बुजम् ॥ ३१ ॥
सुन्दरात् सुन्दरं कान्तं कृपा-शक्ति-समन्वितम् ।
निग्रहानुग्रहे शक्तं सर्वज्ञं सर्व-दर्शिनम् ॥३२ ॥
प्रसन्न-वदनं सौम्यं कारुण्यमय-लोचनम् ।
परानन्द-रसे मग्नं सच्चिदानन्द-विग्रहम् ॥३३ ॥

सहस्रारः—शिरोऽवस्थिताधोमुख-सहस्र-दल-कमलम् ॥
कर्णिका—पद्म-वीज-कोषौ ।
दीप्रम्—दीप्ति-विशिष्टम् । Shining. पीठः—आसनम् । वेदी ॥ स्फटिकः—शुभ्रः स्वच्छः प्रस्तर-विशेषः ।
निधानम्—आधारः ।
कान्तः—[ कम् ( कामनायां ) + त ] मनोरमः । शोभनः ।

ध्यात्वैवं श्रीगुरुं देवं परम-प्रेम-संप्लुतः ।
पूजाञ्च महतीं कुर्यान्मानसै रुपचारकैः ॥३४॥
पृथ्वी-गन्धं नभः-पुष्पं वायु-धूपं निवेदयेत् ।
दीपं तेजोमयं दद्या न्नैवेद्यञ्च रसात्मकम् ॥३५॥

नमेत् तं भक्ति-भावेन भक्त-पापाद्रि-भेदनम् ।
पुण्य-श्लोकान् ऋषीन् भक्त्या प्रणमेत् तदनन्तरम् ॥३६॥

ऋषिः—ऋषति ( गच्छति ) ज्ञानेन संसार-पारम् यः सः । शास्त्रकृदाचार्यः । सत्य-वचाः । "ऋषयो मन्त्र-द्रष्टारः ।"

ततो ध्यायेद्—"अहं ज्योति रचलोऽहं सनातनः ।
अहमात्मा निराकारो नित्य-मुक्त-स्वभाववान् ॥ ३७ ॥
नाहं देही न मे मृत्यु र्न मे दुःखं कदाचन ।
सच्चिदानन्द-रूपोऽहं केवलश्च सुनिर्मलः ॥"३८॥

विभाव्यैवं समः शान्तो विशोकश्च भवे न्नरः ।
प्रेमान्वित स्ततो वाञ्छेत् सर्वेषां मङ्गलं परम् ॥३९ ॥

अनन्तरं समुत्थाय प्रहृष्टेनान्तरात्मना ।
उदीरयेन् महेशस्य पुण्यं नाम पुनः पुनः ॥ ४० ॥

योग्य-स्थाने ततः कुर्याद् विण्मूत्रस्य विसर्जनम् ।
सम्प्राप्ते ब्रह्म-रात्रे वै वेगोत्सर्गः सुमङ्गलः ॥ ४१॥

ब्रह्म-रात्रः—ब्राह्म-मुहूर्तः । सूर्योदयात् प्राग अर्धप्रहरे द्वौ मुहूर्तौ । तत्राद्यो ब्राह्मः द्वितीयो रौद्रः ॥ [ मुहूर्तः = द्वादश-क्षण-परिमित-कालः । दण्ड-द्वयम् । ]

वेगः—मूत्र-विष्ठादि-निर्गम-प्रवृत्तिः । "आयुष्य मुषसि प्रोक्तं मलादीनां विसर्जनम् । तदन्त्र-कूजनाध्मानोदर-गौरव-वारणम् ॥" [ "स्वभावतः प्रवृत्तानां मलादीनां जिजीविषुः । न वेगान् धारयेद् धीरः, कामादीनाञ्च धारयेत् ॥" ]

शौच-कर्म ततः कुर्याद् यथा गन्ध-क्षयो भवेत्।
मृद्-वारि-व्यवहारेण यावच्चेतः-पवित्रता ॥ ४२ ॥

"गुदादि-मल-मार्गाणां शौचं कान्ति-बल-प्रदम्। पवित्र-करमायुष्यमलक्ष्मी-कलि-पाप-हृत् ॥"

अतःपरं विधानेन दन्त-धावन-पूर्वकम्।
अरुणोदय-वेलायां प्रातः-स्नानं समाचरेत् ॥ ४३॥

दन्त-धावनम्—'निहन्ति वक्त्र-वैरस्यं जिह्वा-दन्ताश्रितं मलम्। आरोग्यं रुचि माधत्ते सद्यो दन्त-विशोधनम् ॥' इति राज-वल्लभः ॥ 'तिक्तं कषायं कटुकं सुगन्धि कण्टकान्वितम्। क्षीरिणो वृक्षगुल्माद्या भक्षयेद् दन्त-धावनम् ॥' इति महाभारते ॥ 'अर्के (आकन्दे) वीर्यं वटे दीप्तिः करञ्जे विजयी भवेत्। प्लक्षे चैवार्थ-सम्पत्ति र्बदर्यां मधुरो ध्वनिः ॥ खदिरे मुख-सौगन्ध्यं बिल्वे तु विपुलं धनम्। उदुम्बरे तु वाक्‌सिद्धि राम्रे त्वा-रोग्यमेव च ॥ कदम्बे तु धृति र्मेधा चम्पके च दृढा मतिः। शिरीषे कीर्तिसौभाग्यमायुरारोग्य मेव च ॥ अपामार्गे धृति र्मेधा प्रज्ञा शक्ति स्तथा ध्वनिः। दाडिम्यां सुन्दराकारः ककुभे (अर्जुने) कुटजे तथा ॥ जाती-तगर-मन्दारै दुःस्वप्नश्च विनश्यति ॥' 'गुवाक-ताल-हिन्ताल-खर्जूरैः केतकीयुतैः। नारि-केलेन ताड्या च न कुर्याद् दन्त-धावनम् ॥'हैमं, राजतं, ताम्रजं मृदुपत्रमयं, दन्तकाष्ठजं वा जिह्वा-निर्लेखनं कुर्यात्। तेन जिह्वां लिखेत्। एतत्—जिह्वामल-वैरस्य-दुर्गन्ध-जडता-हरम्। तद-

नन्तरं पुनः पुनः गण्डूषं कुर्वीत । गण्डूषं—कफ-तृष्णा-मल-हरं, मुखान्तः-शुद्धि-कारकञ्च ॥ दुर्बलः, अजीर्ण-भुक्तः, हिक्का-मूर्च्छा-मदान्वितः, दन्त-जिह्वा-रोगी दन्त-काष्ठं वर्जयेत् ॥ [ दन्ता-नूर्ध्व-मध्ये घृष्ट्वा प्रातः सिञ्चेच्च लोचने । तोय-पूर्ण-मुख स्तेन दृष्टिराशु प्रसीदति ॥ ]

अरुणोदयः—[ अरुणस्यार्कस्य तत्-किरणस्योदयो यत्र । ] सूर्योदयात् पूर्वं मूहूर्तद्वय-कालः । "उदयात् प्राक् चतस्रस्तु नाडिका (=दण्डः ) अरुणोदयः । अत्र स्नानं प्रशस्तं स्यात् तद्धि पुण्यतमं स्मृतम् ॥" इति स्कन्द पुराणम् ॥

स्नानं हि पावनं नृणां स्नानं हि पावनं महत् ।
मल-प्रक्षालनेनैव स्नानं पुनाति मानवान् ॥ ४४ ॥

स्नानं मनो-मल-त्याग स्तं विना ना न शुध्यति ।
मनसः शुद्धये देहं जले पुण्ये विशोधयेत् ॥ ४५ ॥

तं विना—मनोमल-त्यागेन विना ॥ ना—मानवः ।

बहु-च्छिद्रान्वितो देहः स्रवत्यन्त-र्मलान् सदा ।
तिष्ठत्येव दिवा-रात्रं बाह्य-मलैश्च दूषितः ॥ ४६ ॥

शरीरं गात्र-मार्जन्या मार्जयित्वा पुनः पुनः ।
शुद्धाम्बु-मज्जन-स्नानात् कुर्याद् देह-विशोधनम् ॥ ४७ ॥

गात्रमार्जनी—शरीर-मार्जनार्थं वस्त्रम् ।

स्नानं पवित्र मायुष्यं नाना-रोग-विनाशकम् ।
स्नानमोजः-करं नित्यं दौर्गन्ध्यादि-विमोचकम् ॥४८ ॥

पवित्रम्—शुद्धि-जनकम् ॥ आयुष्यम्—आयुर्वृद्धिकरम् ॥
ओजः—तेजः । बलम् । दीप्तिः ।

अतः स्नायात् त्रिरह्नश्च यथाकालं यथा-विधि ।
मलापनयनं कृत्वा मृज्जलादि-सहायतः ॥ ४९॥

स्नानान्ते शुष्क-वस्त्रेण देहं सम्यक् प्रमार्जयेत् ।
परिदध्यात् ततो वस्त्रं विशुद्धं निर्मलं शुभम् ॥५०॥

निर्मलम्—"कदापि न जनैः सद्भिः धार्यं मलिनमम्बरम् । तत् तु कण्डू-कृमि-करं ग्लान्यलक्ष्मी-करं परम् ॥" ( अलक्ष्मी-रशोभा दारिद्र्यं वा ) इति भाव-प्रकाशः ॥

पुण्ये जले कृत-स्नानो भक्ति-प्रधौत-मानसः ।
पुण्यां पवित्रतां याति नारायण-परायणः ॥ ५१॥

"शौचन्तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा । मृज्जलाभ्यां स्मृतं बाह्यं भाव-शुद्धि रथान्तरम् ॥" "यस्य सत्यञ्च शौचञ्च तस्य स्वर्गो न दुर्लभः ।"

प्रातः-स्नातो विशुद्धात्मा कुर्याच्च तर्पणं मुदा ।
तर्पणेन हि तृप्यन्ति देवर्षि-पितृ-मानवाः ॥५२ ॥

तर्पणम्—देवर्षि-पितृ-मनुष्याणां जलाञ्जलि-दानेन तृप्ति-सम्पादनम् ।

शुद्धोदकादिना विश्वं तर्पये न्मन्त्र मुच्चरन् ।
सहस्रारामृतेनैव तर्पये दिष्ट-देवताम् ॥ ५३॥

जगन्मयस्य देवस्य स्वेष्टस्य चाखिलात्मनः ।
तर्पणेनैव तृप्यन्ति भुवनानि चतुर्दश ॥५४ ॥

भुवनानि चतुर्दश—"भूर्भुवः स्व र्महश्चैव जनश्च तप एव च। सत्यलोकश्च सप्तै ते लोकास्तु परिकीर्तिताः ॥" "अतलं वितलं चैव सुतलञ्च तलातलम्। महातलञ्च विख्यातं ततो ज्ञे यं रसातलम् ॥ ततः पाताल मित्येवं सप्त-पाताल-सं ज्ञकाः ॥" "पातालानाञ्च सप्तानां लोकानाञ्च यदन्तरम्। शुषिरं तानि कथ्यन्ते भुवनादि चतुर्दश ॥" इति वह्नि-पुराणम् ॥

ततोऽर्घ्येण जगन्ने त्रं पूजयेत् कर्म-साक्षिणम् ।
ग्रह-राजं सहस्रांशुं सवितारं तमोनुदम् ॥ ५५ ॥

अर्घ्यम्—पूजार्थ-दूर्वाक्षत-चन्दन-पुष्प-मिश्रित-वारि ॥ "गन्ध पुष्पाक्षत-यव-कुशाग्र-तिल-सर्षपैः। सदूर्वैः सर्वदेवाना मेतदर्घ्यमुदाहृतम् ॥" "यावन्न दीयते चार्घ्यं भास्कराय निवेदितम्। तावन्न पूजयेद् विष्णुं शङ्करं वा महेश्वरीम् ॥" इति राघव-भट्ट-धृतम् ॥

जगन्नेत्रम्—लोक-लोचनम्। सूर्यम् ॥

कर्म-साक्षिणम्—[ साक्षात् पश्यति साक्षी ] सूर्यम्। [ सूर्यः सोमो यमः कालो महाभूतानि पञ्च च। एते शुभाशुभस्येह कर्मणो नव साक्षिणः ॥" ]

दत्त्वा दिवाकरायार्घ्यं सन्ध्योपासन माचरेत् ।
सन्ध्या-हीनो नराभासो विष-हीनो यथोरगः ॥५६॥
[ सन्ध्या—सन्धौ भवा । ]

शिव-शक्ति-समायोगो यस्मिन् काले प्रजायते ।
सा सन्ध्या परमा सन्ध्या योगादेव प्रजायते ॥ ५७ ॥

तत्-समाधिज-सन्ध्यार्थं ध्यायेत् सन्ध्या-त्रयं द्विजः ।
सन्ध्या-वन्दनया सम्यग् विश्व-नाथ उपासितः ॥५८ ॥

द्विजः—[ द्वि+जन्+ड । द्विर्जातः ] संस्कृत-ब्राह्मणः, संस्कृत-क्षत्रियः, संस्कृत-वैश्यः ॥ "जन्मना ब्राह्मणो ज्ञेयः संस्कारै र्द्विज उच्यते ।" इति स्मृतिः ॥ [ सद्वृत्त-ब्राह्मणः । सद्वृत्त-क्षत्रियः । सद्वृत्त-वैश्यः ॥ "जातया कुलेन वृत्तेन स्वाध्यायेन श्रुतेन च । एभि र्युक्तो हि य स्तिष्ठेन्नित्यं स द्विज उच्यते ॥ न जाति र्न कुलं राजन् न स्वाध्यायः श्रुतं न च । कारणानि द्विजत्वस्य वृत्तमेव तु कारणम् ॥" ]

ब्राह्मणत्वं मनुष्यत्वं सन्ध्या-त्रये प्रतिष्ठितम् ।
अतएव यथा-कालं सन्ध्या-त्रयं समाचरेत् ॥ ५९ ॥

ज्ञान-भक्ति-समायुक्तो गायत्रीञ्च जपेत् स्मरेत् ।
या सन्ध्या सैव गायत्री सा सावित्री सरस्वती ॥६०॥

गायन्तं त्रायते यस्माद् गायत्री परिकीर्तिता ।
सवितृ-द्योतनाच्चैव सावित्री कथिता परा ॥ ६१ ॥

वाग्-रूपा सा नयत्येव वाग्-ब्रह्मान्तं सरस्वती।
मातृका-सुन्दरी देवी स्मरणीया प्रयत्नतः ॥ ६२ ॥

सविता—"सर्व-लोक-प्रसवनात् सविता स तु कीर्त्यते ॥"
सावित्री—[ सवितृ + अ (सावित्र = सविता ) + ङीप् ]

गायत्रीं पावनीं जप्त्वा ज्ञात्वा याति परां गतिम्।
न गायत्री-विहीनस्य भद्र मत्र परत्र च ॥ ६३ ॥

उपनीतो यथा-शास्त्रं भूत्वा नित्यं विधानतः।
संध्यां कुर्याद् जपेद् भक्त्या गायत्रीं वेद-मातरम्॥६४॥

उपनयनम्—[ उप (गुरु-समीपे—वेद-समीपे) नीयते इति उपनयनम्। ] [ "उपनीय गुरुः शिष्यं महाव्याहृति-पूर्वकम्। वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेत् ॥" इति याज्ञवल्क्यः॥ ] ब्राह्मण-क्षत्रिय-वैश्यानां यज्ञ-सूत्र-धारणादि-रूप-प्रधानसंस्कारः ॥ ब्राह्मणस्य गर्भावधि षोडश-वर्ष-पर्यन्तम्। तत्र गर्भाष्टम-वर्षो मुख्यः॥ क्षत्रियस्य द्वाविंशति-वर्ष-पर्यन्तम्। तत्रैकादश-वर्षो मुख्यः॥ वैश्यस्य चतुर्विंशति-वर्ष-पर्यन्तम्। तत्र द्वादश-वर्षो मुख्यः ॥ इति स्मृतिः ॥

प्रात र्मध्यन्दिने साये, स्नानं कृत्वा, शुचिः पुमान्।
तिस्रः सन्ध्याः प्रकुर्वीत भूत-शुद्धिं समाश्रितः॥६५॥

मध्यन्दिने—मध्याह्ने ॥ साये—दिनान्ते। सायं-काले। भूतशुद्धिः—भूतानां देहारम्भक-पृथिव्यादीनां शुद्धि भावना-

विशेषात् शोधनम् ॥ [ पूर्ण-ज्योतिः—२।४।१७—२५ श्लोका द्रष्टव्याः । ]

अरूपा भाव्यते सन्ध्या चतुर्थी सा परा स्मृता ।
शिव-बोधात्मिका सन्ध्या परमा सा समाधिजा ॥६६॥

प्रातः-सन्ध्यां समाप्याथ कुर्यान्ना तिलकं शुभम् ।
अतःपरं समाचम्य जुहुयाज्जात-वेदसम् ॥ ६७ ॥

तिलकम्=चन्दनादिना ललाटाद्यङ्गेषु कृत चिह्नविशेषः । "गङ्गामृत् तुलसी-मूल-मृत्तिका मलयोद्भवम् । साधोश्चरण-संलग्न-रजो मृद् गोष्पदस्य च ॥ याश्वत्थमूलमृद् गोपी-चन्दनं तीर्थ-मृत्तिका । कुङ्कुमं तुलसी-काष्ठं वैष्णवाहृत-मृत्तिका ॥ गोरोचना च कस्तूरी हरिद्रागुरु-चन्दनम् । वल्मीक-मृत्तिका गन्धः पद्मकं हरि-चन्दनम् ॥ गन्धकाष्ठं महानिम्बो यमुना-तीर-मृत्तिका । गुरु-पाद-रजो-वारिणि साध्वङ्घ्रि-रजो-जले ॥ कृत्वा प्रतिदिनं स्नान मेतै र्गन्ध-मृदादिभिः । चारु यत् तिलकं ग्राह्यं तन्नाम्ना वैष्णवै र्ध्रुवम् ॥" "ये कण्ठ-लग्न-तुलसी-भव-काष्ठमाला ये द्वादशाङ्गे हरि-नाम-कृतोर्ध्व-पुण्ड्रा । ये कृष्ण-भक्ति-सुदृढा धृत-शङ्ख-चक्रा स्ते वैष्णवा भुवनमाशु पवित्रयन्ति ॥" "ऊर्ध्व-पुण्ड्रं मृदा कुर्यात् त्रिपुण्ड्रं भस्मना सदा । तिलकं वै द्विजः कुर्यात् चन्दनेन यदृच्छाय ॥" "मृत्तिका-तिलकं कुर्यात् स्नात्वा, हुत्वा च भस्मना ।" इति

समुद्र-कर-भाषये ॥ "काम्यं नैमित्तिकं नित्यं यत् किञ्चित् कर्म नारद । वर्णाश्रमाणां तन्नास्ति स्नानान्ते तिलकं विना ॥" इति पाद्मोत्तरखण्डम् ।

जातवेदाः—[ जात+विद्+अस् ] अग्निः ।

जुहुयाद् विधिना जीवं तेजोरूपे परात्मनि ।
तदर्थं जुहुयात् सर्वं प्रियं पुण्यं हुताशने ॥६८ ॥

"शरीरं हविः ॥" ( स्थूल-सूक्ष्मादि-रूपं शरीरं परस्मिन् चिदग्नौ हूयमानं हविः ) इति शिवसूत्रम् ॥ "महा शून्यालये वह्नौ भूताक्ष-विषयादिकम् । हूयते मनसा साकं स होमः स्रुक् च चेतना ॥" इति श्रीविज्ञान-भैरवे ॥

त्याग एव परो होम स्त्यागाच्छान्तिः सुनिश्चितम् ।
होम-यज्ञं सदा कुर्यात् सर्व-त्याग-मयं शुभम् ॥६९॥

होमः—"विशिष्ट-देशावच्छिन्न-प्रक्षेपोपहित-त्यागः ॥"
यज्ञः—[ यज् ( देवार्चादान सङ्गतौ ) + नङ् ] इज्यते हवि-र्दीयतेऽत्र ।

स्वाध्यायञ्च ततः कुर्या न्निर्जने भक्ति-वर्धनम् ।
अनन्य-मानसः शान्तः श्रद्धया परयान्वितः ॥ ७० ॥

नाति-द्रुतं पठेत् शास्त्रं पठेन्नाति-विलम्बितम् ।
सुस्वरं ताल-संयुक्तं सुस्पष्टं वाचयेत् स्फुटम् ॥७१॥

स्पष्टम्—व्यक्तम् । प्रकटम् ॥ स्फुटम्—भिन्नम् ॥

शुद्धं नित्य मधीयीत, देह-चञ्चलतां त्यजेत् ।
आदावन्ते च पाठस्य पवित्रं प्रणवं जपेत् ॥ ७२ ॥

प्रणवः—[ प्र+नु ( स्तुतौ )+अ ] प्रकर्षेण नूयते अनेन । ओङ्कारः ॥

प्रणवः परमं ब्रह्म प्रणव स्तस्य वाचकः ।
प्रणवः परमो मन्त्रः प्रणवः परमो जपः ॥ ७३ ॥

ओमित्येकाक्षरे मन्त्रे परं ब्रह्म विराजते ।
प्रणवोपासनेनैव निर्वाण मधिगम्यते ॥ ७४ ॥

एवं स्वाध्याय माचर्य चिन्तयित्वा तदर्थकम् ।
नियमेन ततः कुर्याद् व्यायाम मासनादिकम् ॥७५॥

व्यायामः—स्वास्थ्योन्नति-सम्पादनार्थं विधि-पूर्वक मङ्ग-सञ्चालनम् ॥ "व्यायामो हि सदा पथ्यो बलिनां स्निग्ध-भोजिनाम् । स च शीते वसन्ते च तेषां पथ्यतमः स्मृतः ॥ सर्वेष्वृतुषु सर्वैर्हि पुंभिरात्म-हितार्थिभिः । शक्त्यर्धेन तु कर्तव्यो व्यायामो हन्त्यतो व्यथाम् ॥ कुक्षौ ललाटे ग्रीवायां यदा घर्मः प्रवर्त्तते । शक्त्यर्धं तं विजानीयादायतोच्छ्वास मेव च ॥ लाघवं कर्म-सामर्थ्यं स्थैर्यं क्लेश-सहिष्णुता । दोष-क्षयोऽग्निवृद्धिश्च व्यायामादुपजायते ॥ व्यायामं कुर्वतो नित्यं विरुद्धमपि भोजनम् । विदग्ध मविदग्धं वा निर्दोषं परिपच्यते ॥ न च व्यायामसदृशमन्यत् स्थौल्यापकर्षणम् । न च व्यायामिनं मर्त्यं मर्दयन्त्यरयो

बलात् ॥ न चैनं सहसाऽऽक्रम्य जरा समधिगच्छति ॥ व्यायाम-क्षुण्णगात्रस्य पद्भ्यामुद्वर्तितस्य च । व्याधयो नोपसर्पन्ति वैनतेय मिवोरगाः ॥" रक्त-पित्ती, क्षयी, शोषी, कासी, श्वासी, क्षतातुरः, वात-पित्तामयी, वृद्धः···व्यायामं परिवर्जयेत् ॥ "अति-व्यायामतः कासो रक्त-पित्तं प्रजायते ॥ श्रमः क्लमः क्षय स्तृष्णा ज्वर श्छर्दिश्च जायते ॥" इति राज-वल्लभः ॥

चिन्तयेद् दिन-कृत्यानि कर्माणि स्थिर-मानसः ।
उपायञ्च तथाऽपायं पर्यालोच्य पुनः पुनः ॥ ७६ ॥

अपायः—विघ्नः । Risk, danger.

ततः कुर्याद् विचारेण कार्याणां क्रम-निर्णयम् ।
विचारेण विना कार्यं न सिध्यति कदाचन ॥७७ ॥

सर्वाणि कार्य-कर्माणि यथा-कालं समाचरेत् ।
एकञ्च सीवनं काले नवभ्यो रक्षति ध्रुवम् ॥ ७८ ॥

कर्म—क्रिया । तच्च पञ्चविधम्, नित्य-नैमित्तिक-काम्य-प्रायश्चित्त-निषिद्ध-भेदात् ॥ तत्र आद्यानि चत्वारि धर्म्याणि, अन्यदधर्म्यम् ॥ एकञ्च सीवनं काले···—"One stitch in time saves nine."

आमुक्तेः कर्म-संसारो, मुक्ति स्तावन्न लभ्यते ।
यावन्न विन्दते ज्ञानं सुकृतेन स्व-कर्मणा ॥ ७९ ॥



च

विचारेण विरागेण निष्कामेन स्व-कर्मणा ।
जायते सुदृढं ज्ञानं कालेन निर्मलात्मनाम् ॥ ८० ॥

सत्येवं सदुपायेन कार्यं कर्म सदाऽऽचरेत् ।
धीरः सन् सर्व-कार्येषु संयतात्मा जितेन्द्रियः ॥ ८१ ॥

---

## द्वितीयोल्लासः ।

कर्मणां प्रथमारम्भे स्मरेद् भक्त्या जगत्-प्रभुम् ।
तस्मै कृतानि कर्माणि सर्वाण्येव समर्पयेत् ॥ १ ॥

प्रथमारम्भे—उपक्रमे ।

सर्वदा सर्व-कार्येषु परिपश्यन् परेश्वरम् ।
याति ब्रह्म-पदं नित्यम् अप्रमत्तो ह्यकल्कनः ॥ २ ॥

अप्रमत्तः—अवधान-विशिष्टः । सावधानः ॥
अकल्कनः—दम्भ-रहितः ।

परमेश-पदं ध्यायन् न्याय-निष्ठ उदार-धीः ।
कुर्यादर्जनमर्थस्य रक्षणं वर्धनं व्ययम् ॥ ३ ॥

धनं वै जीवनोपायो गृहिणां द्रविणं बलम् ।
निखिला धर्म-कामार्था धन-गम्याः सुनिश्चितम् ॥ ४ ॥

द्रविणम्—धनम् ।

उत्थाय हृदि लीयन्ते दरिद्राणां मनोरथाः।
विच्छिद्यन्ते क्रिया स्तेषां, बुद्धि स्तेषां प्रणश्यति॥ ५॥

मनोरथः—इच्छा।

विच्छिद्यन्ते—विच्छिन्ना भवन्ति। Are interrupted, broken off, destroyed.

धने तु सन्ति दोषाश्च बहवो नरक-प्रदाः।
धनात् कामश्च दर्पश्च चञ्चलत्वं सतामपि॥ ६॥

धनादेव पर-द्रोहो बाहुल्येन प्रवर्तते।
नयत्येव विमार्गेषु नरान् धन-पिशाचिका॥ ७॥

धन-पिशाचिका—धनाशा॥ धन-रूपा पिशाचिका॥

धनं सद्-व्यवहारेण मर्त्य मुत्कर्षति ध्रुवम्।
अन्याय-व्यवहारात् तु चापकर्षति तन्नरम्॥ ८॥

अतएव भवेन्नित्यं न्याय-निष्ठो विचारवान्।
उदारो धर्म-कामश्च धनस्योपार्जने व्यये॥ ९॥

अपव्ययं न कुर्वीत, न च कुर्या दति-व्ययम्।
न भवेत् सञ्चयात्मा च कृपणो व्यय-कातरः॥१०॥

जनानां धन-लुब्धानां सञ्चयासक्त-चेतसाम्।
धनानि बद्ध-मुष्टीनां खलु प्राणा बहिश्चराः॥ ११॥

बद्ध-मुष्टिः—कृपणः। Close-fisted.

प्राणान् धन-क्षयो हन्ति तद्धनानां जडात्मनाम् ।
स्वस्मै तथा परस्मै च द्रुह्यति व्यय-कुण्ठितः ॥१२॥
तद्धनः—कृपणः ।

ऐश्वर्येऽपि स्वयं नात्ति न पुष्णाति स्व-बान्धवान् ।
वित्त-शाठ्य-मयीं पूजां कुरुते कृपणो जनः ॥ १३ ॥

सदा-सञ्चय-शीलानां क्षुद्राणां क्षुद्र-चेतसाम् ।
जनाना मनुदाराणां नास्ति हन्त दया-धनम्॥१४॥
क्षुद्रः—कृपणः । अधमः । क्रूरः । अल्पः ।

विश्वस्य क्रन्दनं तेषां कल्ल-कर्णः शृणोति नो ।
विश्वस्य रोदनं तेषाम् अन्ध-नेत्रं न पश्यति ॥ १५ ॥
कल्लः—बधिरः ॥ रोदनम्—अश्रु ।

मनुष्यत्व-विहीना स्ते सञ्चये बद्ध-दर्शनाः ।
सुखं शान्तिं मनः-स्थैर्यं लभन्ते न कदाचन ॥ १६॥

कार्पण्येन शिव-द्वारं माऽवरुन्ध्याद् विमूढ-धीः ।
उन्मत्तां विभवाकाङ्क्षां त्यक्त्वोत्तिष्ठेत मुक्तये ॥ १७ ॥
उन्मत्तः—[ उन्माद-युक्तः । वायुकृत-चित्तविभ्रम-विशिष्टः ॥
उन्मादः—वातिक-रोग-विशेषः । चित्त-विभ्रमः । मति-भ्रंशः ॥
"विरुद्ध-दुष्टाशुचि-भोजनानि प्रधर्षणं देव-गुरु-द्विजानाम् । उन्माद-

हेतु भय-हर्ष-पूर्वो मनोऽभिघातो विषमाश्च चेष्टाः ॥ ] उन्मत्त-जनोचितः ॥

सर्व-भूत-हितायैव वर्तते द्रविणं सताम् ।
स्पृहयन्ति न भोगाय न धनाय विपश्चितः ॥ १८ ॥

आतपाय यथा छत्रं, पिपासायै यथा जलम् ।
धनं तेषां परार्थाय, दानं हि कर्म केवलम् ॥ १९ ॥

योग्ये दाने धनं सार्थं, दानं मितं मरिष्यतः ।
दानायैव धनं न्यस्तम् ईश्वरेण परात्मना ॥२०॥

दानेन शुद्धतां याति स्वार्थ-पङ्किल-मानवः ।
स्वार्थ-शून्यः परार्थो वै परमार्थं प्रयच्छति ॥२१॥

प्रवर्तते परार्थाय यथा प्रकृति-सुन्दरी ।
तथैव दीयते दानं परार्थाय मुमुक्षुणा ॥२२॥

यथा न्यासी विना त्यागं, यथा ज्ञानं विना मुनिः ।
विचारेण विना कर्म, तथा दानं विना गृही ॥२३॥

कुर्यादनारतं दानं, दद्यात् शक्त्यनुसारतः ।
उद्धरेच्चित्त-मातङ्गं दानेन भव-कर्दमात् ॥२४॥

अनारतम्—सर्वदा ॥ चित्तम्—"चेत्यते विमृश्यते अनेन परं तत्त्वम् इति चित्तम् ॥" इति शिवसूत्र-विमर्शिन्याम् ॥

दान-पुण्यै र्हरिं प्रार्च्य नरो याति हरेः पदम् ।
दानेन पूजयेद् देवं विश्वमूर्तिं परेश्वरम् ॥२५॥

काम-शून्ये महा-पुण्ये दाने धर्मः प्रतिष्ठितः ।
देयानि सर्व-वित्तानि विश्वाय परमात्मने ॥२६॥

अभाव-पीडनं तुष्टो नैव भुङ्क्ते कदाचन ।
तुष्टानां मानसानन्दो निर्धनत्वेऽपि राजते ॥२७॥
अभावः—दारिद्र्यम् । प्रयोजनम् ।

धनेऽपि यस्त्वसन्तुष्ट स्तृष्णार्तः स सुचञ्चलः ।
अभावो हन्ति तं नित्यं—दरिद्रः स, न संशयः ॥२८॥

सन्तोषे सर्वदा शान्ति स्तुष्टि-हीने सदा व्यथा ।
सन्तोषः परमं स्वास्थ्यं सन्तोषे मोक्ष-सम्भवः ॥२९॥
"सन्तोषो हि परं श्रेयः सन्तोषः सुखमुच्यते । सन्तुष्टः परमभ्येति विश्राममरिसूदन ॥ आशा-वैवश्य-विवशे चित्ते सन्तोष-वर्जिते । म्लाने वक्त्रमिवादर्शे न ज्ञानं प्रतिबिम्बति ॥ अप्राप्तवाञ्छामुत्सृज्य सम्प्राप्ते समतां गतः । अदृष्टखेदाखेदो यः स सन्तुष्ट इहोच्यते ॥" इति योग-वाशिष्ठे ॥

सन्तोषं वर्धयेन्नित्यं वैराग्यादि-सहायतः ।
आसक्तौ जायते दुःखं, त्यागं विना सुखं कुतः ॥३०॥

त्याग एव परो यज्ञ स्त्याग एव परं तपः ।
त्याग एव परा शान्ति स्त्यागेऽभयं प्रतिष्ठितम् ॥ २१॥

त्यागः—"त्यागो हि महतां पूज्यः सद्यो मोक्षमयो यतः ।" इति श्रुतिः ॥

अभयम्—[भयम्—"राग-विषयस्य विनाशके समुपस्थिते तन्निवारणासामर्थ्यमात्मनो मन्यमानस्य दैन्यात्मक श्चित्त-वृत्ति-विशेषो भयम् ।" इति गीतायां द्वितीयाध्याये मधुसूदन सरस्वती ॥ "परतः स्वानिष्ट-सम्भावना भयम् ।"]

त्यजेदात्म-सुखाकाङ्क्षाम् इच्छेत् सौख्यं परस्य तु ।
पर-दुःख-विनाशाय स्व-सुखानि त्यजेद् बुधः ॥२२॥

दधीचेन पुरा दत्तं जीवितं देव-सेवया ।
स्व-मांसं शिविना दत्तं कपोत-रक्षणेच्छया ॥२३॥

दधीचः—दधीचि-मुनिः ।

शाक्य-सिंहो ददौ प्राणान् पश्वादीनव-कातरः ।
आत्म-पुत्रं ददौ पान्ना राज-भक्ति-परायणा ॥२४॥

आदीनवः—क्लेशः ।

पान्ना—मिवाराधिपति-उदयसिंहस्य धात्री ।

आत्मोत्सर्गः परार्थाय मोक्ष-मार्गः सनातनः ।
सेवेत सकलं विश्वं प्राणैः कण्ठ-गतैरपि ॥२५॥

एकमेव परं ब्रह्म सर्व-रूपैः सदा स्थितम् ।
सर्वेषां सेवया नित्यं पूजयेत् तदनञ्जनम् ॥३६॥

अनञ्जनम्—दोष-शून्यम् । निरञ्जनम् । पर-ब्रह्म ।

गुणातीतो महाविष्णु र्मनो-वाचा मगोचरः ।
पूजां गृह्णाति सर्वेषां विश्वरूपेण सर्वदा ॥ ३७॥

अहो भाग्य महो भाग्यं—नरोऽपि ज्ञान-दुर्बलाः ।
अर्चितुं शक्नुवन्तेवं सूक्ष्मं तं प्रकृतेः परम् ॥ ३८ ॥

सर्वस्मिन् ब्रह्म सेवेत प्रेम्णा चोत्फुल्ल-मानसः ।
सर्वं ब्रह्मणि सर्वत्र ब्रह्मैव परिभावयेत् ॥३९॥

देहं गेहं धनं कर्म पुत्रं मित्रं यशो बलम् ।
सर्वमेतद् विजानीयात् पूर्णस्य परमात्मनः ॥४०॥

प्रीतये तस्य देवस्य सदा समत्व माश्रितः ।
कुर्यात् कर्माण्यनासक्तः सन्तुष्टो ज्ञान-निश्चयः ॥४१॥

निर्ममो निरहङ्कार स्तृष्णा-क्रोध-विवर्जितः ।
सर्व-हिंसा-विहीनश्च निरालस्यो जितेन्द्रियः ॥४२॥

तुल्य-निन्दा-स्तुति र्दक्षः सुखे दुःखे सदा समः ।
सर्व-भूत-स्थितं विष्णुं प्रेमान्वितः प्रपूजयेत् ॥४३॥

ब्रह्मादि-तृण-पर्यन्तो शिवं शान्तं विभावयन् ।
देह-ज्ञानं परित्यज्य भजेत् तं सर्व-कारणम् ॥४४॥

सर्वत्र प्रणमेद् भक्त्या नारायण मनामयम् ।
कुर्यादैक्यं प्रयत्नेन सर्वदा सेवकेशयोः ॥ ४५ ॥

भाव-कर्म-गुण-द्रव्ये दृष्ट्वा विष्णुं जले स्थले ।
विस्मरेन्नाम-रूपाणि चिदि चित्तं नियोजयेत् ॥ ४६ ॥

भगवच्छासनालम्बी भव-भङ्ग-करे हरे ।
आत्मानं लीनयेन्नित्यं शङ्करे परमेश्वरे ॥ ४७ ॥

एवं कर्म-परो भूत्वा नित्ये ब्रह्मणि निष्ठितः ।
सर्वोपाधि-विनिर्मुक्तो लभेत ब्रह्मणः पदम् ॥ ४८ ॥

"ईश्वरस्य जगत् सर्वं, सर्वमेव करोति सः ।
नाहं कर्ता न मे किञ्चित्, तस्मै सर्वं समर्पितम् ॥ ४९ ॥
दाता दानं ग्रहीता च दत्तं दान-फलञ्च यत् ।
सर्वाण्येव परं ब्रह्म"—सर्वदैवं विचिन्तयेत् ॥ ५० ॥

इदं ब्रह्मार्पणं पुण्यम् इदं ब्रह्मार्पणं परम् ।
इदं ब्रह्मार्पणं कृत्वा मुच्यते कर्म-बन्धनात् ॥ ५१ ॥

---

## तृतीयोल्लासः ।

पर-ब्रह्म-परो भूत्वा, स्थित्वा गुर्वनुशासने ।
यथा-योग्यं यथा-कालं कार्यं कर्म समाचरेत् ॥१॥

पोष्य-वर्गं भरेन्नित्यं श्रद्धा-प्रेम-समन्वितः ।
न कुर्यात् पीडनं तस्य तस्मिन् पश्येद् भवायनम् ॥ २ ॥

भरेत्—maintain, take care of, protect. ["दरिद्रान् भर कौन्तेय मा प्रयच्छेश्वरे धनम् ।"]

श्रीगुरुः पितरौ पत्नी सन्तानाश्च समाश्रिताः ।
अभ्यागतोऽतिथिश्चैते पोषणीयाः प्रयत्नतः ॥ ३ ॥

समाश्रिताः—सम्यक् प्रकारेण आश्रिताः ।

अभ्यागतः—ज्ञातपूर्व-गृहागतः ।

अतिथिः—अज्ञातपूर्व-गृहागत-व्यक्तिः । आगन्तुः ॥ "यस्य न ज्ञायते नाम न च गोत्रं न च स्थितिः । अकस्माद् गृहमायाति सोऽतिथिः प्रोच्यते बुधैः ॥" "ततो गोदोहमात्रन्तु कालं तिष्ठेद् गृहाङ्गणे । अतिथि-ग्रहणार्थाय तदूर्ध्वं वा यदृच्छया ॥ (गोदोहकालश्च=मुहूर्ताष्टमभागः ।) स्वाध्यायगोत्रचरणमपृष्ट्वापि तथा कुलम् । हिरण्यगर्भ-बुद्ध्या तं मन्येताभ्यागतं गृही ॥" इति विष्णु-पुराणम् ॥ [ अतिथि-पूजनम्=अतिथि-सेवा । नृ-यज्ञः ॥ ]

सेवेत पितरौ नित्यं नेत्र-गोचर-दैवतौ ।
मानसेन शरीरेण द्रविणेन मुदा गिरा ॥ ४ ॥

अभ्यासयेत् शुभां विद्यां सन्तान माश्रितार्भकम् ।
उपनयेद् यथा-कालं यथा-शास्त्र मपत्यकम् ॥५॥

"माता वैरी पिता शत्रु बालो येन न पाठितः ।"

अर्भकः—शिशुः ।

अपत्यम्—न पतन्ति पितरोऽनेन । पुत्र-दुहितृ-रूप-सन्तानम् ।

शिक्षयेच्च सदाचारं नीति-धर्म-समन्वितम् ।
पर्यवेक्षेत यत्नेन निरन्तर मपत्यकम् ॥ ६॥

नीतिः—morality. पर्यवेक्षेत—inspect.

आत्मनो मङ्गलार्थाय सन्तानोन्नति-हेतवे ।
ब्रह्मनिष्ठो भवेत् पूतः संयमी विजितेन्द्रियः ॥ ७॥

संयमो हि परो धर्मः संयमो हि परं तपः ।
पुण्यानामपि पुण्यञ्च संयमो हि महाबलः ॥८॥

संयमो धारणा ध्यानं संयमो हि समाधयः ।
संयमः स्व-वशे यस्य मुक्ति स्तस्य करे स्थिता ॥९॥

धारणा—ध्येय-वस्तुनि अन्तरिन्द्रिय-धारणम् ।

ध्यानम्—धारणा-विषये एक-प्रत्यय-सन्ततिः ।

समाधिः—'ध्याता केवलं ध्येयमेव पश्यति ; नान्यत् किञ्चित् जानाति'—एषावस्था ।

पूज्य-वृद्धान्ध-रोगिभ्यः स्त्रियै च दुर्बलाय च ।
ददाति यस्तु पन्थानं स एव संयतः पुमान् ॥१०॥

वृथाङ्ग-चालनं द्यूतम् उच्च-हास्यादिकं तथा ।
येन नित्यं परित्यक्तं स एव संयतः पुमान् ॥११॥

द्यूतम्—पाशकादि-क्रिया । अप्रामाणिकरण-क्रिया ।

उच्च-वाक्यं वृथा-वाक्यं जहाति क्रूर-भाषणम् ।
पर-निन्दां मृषा-वाक्यं स एव संयतः पुमान् ॥१२॥

अहिंसा-निरतो यो हि शिष्टाचार-परायणः ।
विचार्य कुरुते कर्म स एव संयतः पुमान् ॥१३॥

कुरुते यो यथाकालं स्व-कर्माणि यथा-विधि ।
पापादुपरतो नित्यं स एव संयतः पुमान् ॥१४॥

अतिथिं, सज्जनं, शास्त्रं, देवतां, न्यूनाङ्गम्, अधमं तथा कमपि जनं कदापि न दूषयेत् ; न उपहसेद् वा । पूज्यानां, देवतानाञ्च च्छायां नातिक्रमेत् ॥ पूज्याभिमुखं पादं न नयेत् । गुरु-सन्निधौ हीनान्न-वस्त्र-वेश स्तथा नीच-शय्यासनो भवेत् । केषाञ्चिदपि, विशेषतः पूज्यानां, गतिं, भाषितं, चेष्टां वा नैव अनुकुर्वीत । पूजार्हाणामग्रतो न गच्छेत् । दण्डायमानो

भूत्वा पूजनीयं जनमभिनन्देत् । पूजनीयान् जनान् श्रद्धया अभिवादयेत् । पूज्येषु दण्डायमानेषु न उपविशेत् । श्मश्रुं न भक्षयेत् । नग्नो भूत्वा न स्नायात्, न वा स्वप्यात् । ऊर्ध्वं, तिर्यग्, दूरं वा निरीक्षमाणो न पर्यटेत् । नेत्र-चपलो न भवेत् । असंवृत-मुखो न जृम्भेत् । रहस्यानि रोमाणि तथा इन्द्रियाणि न स्पृशेत् । दन्तैर्नख-लोमानि न च्छिन्द्यात् । जितेन्द्रियो भवेत् । प्रस्राव-काले मुक्त-कच्छको भवेत् । प्रस्रावान्ते जलेन शौचं कुर्यात् । दुष्ट-यानादिकं न आरोहेत् । देवतां, सज्जनम्, आचार्यं, तथा अन्यान् पूज्यान् जनान् श्रद्धया सेवेत । यथाकालं सन्ध्यादिकानि समुदयानि कर्तव्यानि कुर्यात् । आत्मश्लाघां सर्वथैव वर्जयेत् । सर्वथा आचार्याधीनो भवेत् ।···॥

सेवां यः कुरुतेऽश्रान्तं सर्वेषां श्रद्धयान्वितः ।
आत्म-सौख्य-परित्यागी स एव संयतः पुमान् ॥१५॥

अश्रान्तम्—श्रम-रहितम् । अनवरतम् ।

शुद्धाहारं मितं भुङ्क्ते सात्त्विकं स्वास्थ्य-रक्षकम् ।
अलुब्धः शिव-सम्प्रीतैः स एव संयतः पुमान् ॥१६॥

मितम्—परिमितम् ।

ब्रूते सर्व-हितं सत्यं भाषते मधुरं मितम् ।
विष्णु-सङ्कीर्तने मग्नः स एव संयतः पुमान् ॥१७॥

सङ्कीर्तनम्—सम्यक् प्रकारेण देवता-नामोच्चारणम्, गुणादि-कथनम् ॥ नाम-सङ्कीर्तनं यत्र कृष्णस्य परमात्मनः । स्थानं तत् तु पवित्रं स्यान्मृतानां तत् तु मुक्तिदम् ॥ इति पद्म-पुराणम् । वर्तन्ते पापिनां देहे पापानि त्रिविधानि च । महापापोपपापा-तिपापान्येव स्मृतानि च । कृष्ण-सङ्कीर्तनाद् ध्यानात् तन्मन्त्र-ग्रहणादहो । मुच्यन्ते पातकै स्तैश्च पापिन स्त्रिविधा जनाः ॥ इति नारद-पञ्चरात्रे ज्ञानामृतसारे । अज्ञानादथवा ज्ञानाद् उत्तमश्लोकनाम यत् । सङ्कीर्तित मघं पुंसो दहेदेधो यथाऽनलः ॥ इति श्रीभागवतम् ॥ "नरके पच्यमानानां नराणां पाप-कर्मणाम् । मुक्तिः सञ्जायते तस्मात् नाम-सङ्कीर्तनाद्धरेः ॥" इति हरिभक्तिविलासधृतम् इतिहासोत्तम-वचनम् ॥

शान्तो दान्त स्तितिक्षुश्च भक्तिमान् विनयान्वितः ।
गुरु-शुश्रूषणे रक्तः स एव संयतः पुमान् ॥ १८ ॥

गुरु-शुश्रूषणम्—गुरु-सेवा ।

हरि-पादाश्रयो नित्यं भगवच्छासन-प्रियः ।
बाह्यान्तः-शिव-चित्तो यः स एव संयतः पुमान् ॥ १९॥

इन्द्रियाणीन्द्रियार्थेभ्यः प्राणांश्च मानसं तथा ।
निगृह्यास्ते महायोगी स एव संयतः पुमान् ॥ २० ॥

"अहमेकं परं-ब्रह्म"—सदैवमवतिष्ठते ।
अन्तर्गलित-सर्वाशः स एव संयतः पुमान् ॥ २१ ॥

एवं संयम मास्थाय कार्यं कुर्याद् विचक्षणः।
अन्तः-शौचं बहिः-शौचं यत्नतः परिपालयन् ॥२२॥

---

## चतुर्थोल्लासः।

मध्याह्ने स्नपितः शुद्धो वसित्वा शुद्ध-वाससी।
सन्ध्यां कृत्वा यथा-कालं पूजये दिष्ट-देवताम् ॥ १ ॥

मध्याह्नः—त्रिधा-विभक्त-दिनमध्यभागः। स च दशदण्डात् परं दश-दण्ड-रूपः। इति श्रुत्युक्तः अमरोक्तश्च ॥

स्नपितः—कृत-स्नानः ॥ वसित्वा—परिधाय।

मध्याह्न-सन्ध्या—[ मध्याह्न-सन्ध्याया अष्टम-मुहूर्तं कालमाह स्मृतिः॥ "पूर्वापरे तथा सन्ध्ये सनक्षत्रे प्रकीर्तिते। सम-सूर्येऽपि मध्याह्ने मुहूर्त-सप्तमोपरि॥" इति सांख्यायन-गृह्यम् ॥ ] पूर्वास्य उत्तरास्यो वा पूजां कुर्याद् यथाविधि।" इति ब्रह्मवर्म पुराणे ॥

पूज्यो हि सर्व-लोकानाम् अद्वितीयो महेश्वरः।
चिदानन्द-स्वरूपो यो नित्य-पूर्णः परात्परः ॥ २ ॥

असङ्गं परमं सूक्ष्मम् अनिर्देश्य मलक्षणम्।
कथं ध्यास्यन्ति मूढा स्तं स्वर-व्यञ्जन-वर्जितम् ॥३॥

अनिर्देश्यम्—न निर्देश्यं जाति-गुण-क्रिया-संज्ञाभि र्निर्दिष्टम्

शक्यम् । निर्विशेषे निर्धर्मके परमात्मनि तस्य जातिगुणाद्य-भावेन इदं तदिति निर्देशायोग्यत्वम् ।

नित्य-शुद्धः शिवः शान्तः सर्वानुग्रह-कातरः ।
लीला-देहान् विधृत्यास्ते वह्नि-विष्णु-शिवादिकान् ॥ ४॥

यो यस्याभिमतः पुंसः स हि तस्येष्ट-देवता ।
इष्ट-देव-प्रपूजायां चतुर्वर्गः प्रतिष्ठितः ॥ ५ ॥

अभिमतः—इष्टः । सम्मतः । आदृतः ॥

स्वेष्ट-मूर्तौ निबध्नीया न्न कदापि महेश्वरम् ।
प्रत्येक-प्रतिमायान्तु पश्येत् पूर्णं परात्परम् ॥ ६ ॥

प्रतिमा—अनुकृतिः । मूर्ति-सदृश-मृच्छिलादि-निर्मित-प्रति-रूपकम् ॥

प्रत्येकस्यार्चनेनैव पूजितः परमेश्वरः ।
प्रत्येकस्यार्चनेनैव लभ्यते परमः-शिवः ॥ ७ ॥

"यथारुचि भवेत् सर्वा देवता फलतः समा । भजन्नेकां परां निन्दन् भजते नरकाय तत् ॥" इति बृहद्धर्मपुराणे ॥

अनन्य-भक्ति-संयोगाद् अर्चनस्यातिशायनात् ।
भगवत्-कृपया स्वेष्टो दृष्टि-गोचरता मियात् ॥ ८ ॥

अतिशायनात्—आधिक्यात् । आतिशय्यात् । प्रकर्षात् ॥
इयात्—गच्छेत् ।

तदाऽर्चको महाभाग्यात् सह स्वेष्टेन दीव्यति।
नाना-लीला-विलासेन स्वेष्टेनैव प्रमोदते॥ ९॥
दुःखायते यदा स्वामी भवत्येवापवारितः।
रोरुद्यते निरीहः सन् देव-विश्लेष-कातरः॥ १०॥
भवत्येव महात्यागी ममाहं-भाव-वर्जितः।
भवत्येव महामौनी मुकुन्द-मग्न-मानसः॥ ११॥
लभते निर्मलं प्रेम सविज्ञान मभङ्गुरम्।
प्राप्नोति परमानन्दं स्वेष्ट-देव मधोक्षजम्॥ १२॥
तदा सर्वा मनः-पीडा तमर्चकं परित्यजेत्।
तदा देवात्मन स्तस्य सर्व-बन्ध-क्षयो भवेत्॥ १३॥

दीव्यति—क्रीडति॥ लीला—क्रीडा॥

विलासः—क्रिया। सुख-भोगः। स्फुरणम्। आमोदः।

अपवारितः—अन्तर्हितः। आच्छादितः॥ [साधकानां दर्पादिकान् दोषान् चूर्णीकृत्य निर्मलीकृत-मानसेभ्य स्तेभ्यः प्रसादं प्रदातुं श्रीभगवान् अन्तर्हितो भवति।] "एवं मदर्थोज्झित-लोक-वेद-स्वानां हि वो मय्यनुवृत्तयेऽबलाः। मया परोक्षं भजता तिरोहितं माऽसूयितुं माऽर्हथ तत् प्रियं प्रियाः॥" "तासां तत्-सौभग-मदं वीक्ष्यमाणञ्च केशवः। प्रशमाय प्रसादाय तत्रैवान्तरधीयत॥" इति श्रीभागवतम्॥

निरीहः—ईहा-शून्यः। (ईहा=चेष्टा, उद्यमः) निश्चेष्टः। निरुद्यमः॥ मग्नः—अन्तः-प्रविष्टः।

अभङ्गुरम्—अनश्वरम् । स्थिरम् ।

अधोक्षजः—[ अक्षात् इन्द्रियात् जायते इति अक्षजम् । प्रत्यक्ष-ज्ञानम् । इन्द्रिय-ज्ञानम् । ] अधः ( ग्राहकत्वाभावात् हीनम् ) अक्षजं ( इन्द्रिय-ज्ञानं ) यस्मात् स—इन्द्रिय-ज्ञानातीतः ॥

अतएव सनिष्ठः सन् पूजये दिष्ट-देवताम् ।
अनन्य-प्रेम-संयुक्तो गुरुणैव यथोदितम् ॥ १४ ॥

"स्तुति-स्मरण-पूजाभि र्वाङ्मनःकायकर्मभिः । मयि भक्ति-र्दृढा पुत्र एतदीश्वर-पूजनम् ॥" इति सौर पुराणे ॥

क्षालयित्वा करौ पादौ चोपविश्य कुशासने ।
राङ्कवे कम्बले किंवा कृष्णाजिने सुकोमले ॥ १५ ॥
आचान्तः सन् प्रकुर्वीत प्राणायाम-त्रयं ततः ।
पूजा योग्यत्व-सिद्ध्यर्थं भूत-शुद्धिं समाचरेत् ॥ १६ ॥

क्षालयित्वा करौ पादौ—"प्रक्षालनं मतं पाण्योः पादयोः शुद्धि-कारणम् । मल-श्रम-हरं हृष्यं चक्षुष्यं राजसापहम् ॥"

आसनम्—( आस्यतेऽत्र आधारे ) उपवेशनाधार-कम्बलादासनम् । [ "काष्ठासने वृथा पूजा पाषाणे रोग-सम्भवः । भूम्यासने गति र्नास्ति वस्त्रासने दरिद्रता ॥ कुशासने ज्ञान-वृद्धिः, कम्बले सिद्धिरुत्तमा । कृष्णाजिने धनी पुत्री मोक्षः स्याद् व्याघ्र-चर्मणि ॥" इति पाद्मोत्तर खण्डे ॥ ]

राङ्कवम्—पशु-लोमजात-वस्त्रादि ।

आचान्तः—कृताचमनः। [ आचमनम्—वैध-कर्मारम्भात् पूर्वं वारत्रय-जलपानानन्तरं यथाक्रमाष्टाङ्ग-स्पर्शरूप-शुद्धिजनक-क्रिया। ]

प्राणायामः—पुरक-कुम्भक-रेचक-रूप-योगाङ्ग-विशेषः। स द्विविधः, सगर्भो निर्गर्भश्च। "सगर्भो मन्त्र-जापेन निर्गर्भो मात्रया भवेत्।" "प्राणायामो मरुज्जयः।" "प्राणापान-निरोध स्तु प्राणायाम उदाहृतः।"

"सुस्नाते भूतशुद्धया च प्राणायामादिभि स्तथा। षडङ्गाद्यखिलन्यासै रात्मशुद्धिरुदीरिता॥"

शरीर-स्थित-भूतानां यद् योगेन विशोधनम्।
भूत-शुद्धि स्तदेव स्याज् ज्ञान-दीप-प्रदीपनी ॥१७॥

प्रदीपनी—उद्दीपिका। प्रकाशिका। poker.

हृत्पद्म-निलयं जीवं चैतन्य-ज्योतिरव्ययम्।
ध्यायेदादौ प्रयत्नेन प्रदीप-कलिका-निभम् ॥ १८ ॥
ध्यायेत् कुण्डलिनीं देवीं मूलाधार-निवासिनीम्।
कोटि-सौदामिनी-भासां सर्व-सौभाग्य-दायिनीम् ॥१९॥
कुण्डल्या सह जीवञ्च ब्रह्म-मार्गेण योगवित्।
शिरस्थे पुष्कर-स्थाने परमात्मनि योजयेत् ॥ २० ॥
ततो विभावयेत् तत्र मनसा नान्य-गामिना।
चतुर्विंशति-तत्त्वानि विलीनानि परात्मनि ॥ २१ ॥

ततो यमादि-बीजैश्च सावधानो दृढ-व्रतः ।
यथोक्तेन विधानेन प्राणायामं समाचरेत् ॥ २२ ॥
कुण्डली- प्रभया व्याप्तं देहं मूलोत्थ-वह्निना ।
निर्दहेत् कृष्ण-वर्णेन पापेन सह साधकः ॥ २३ ॥
भस्म त्यक्त्वा ततो ध्यात्वा चन्दिर-च्चरितां सुधाम् ।
विनिर्मायात् तया देहं परामृतमयं दृढम् ॥ २४ ॥
ततः शुद्ध-विधानेन मानसेन सुसाधकः ।
जीवं तत्त्वानि सर्वाणि स्व-स्थाने स्थापयेत् पुनः ॥ २५ ॥

ब्रह्म-मार्गेण—सुषुम्णा-मार्गेण ।

पुष्कर-स्थाने—सहस्रारे महापद्मे ।

यमादि- बीजैः—यम्, रम्, ठम्,—इति बीजैः ॥ [ यमिति वायु-बीजम् । रमिति वह्नि-बीजम् । ठमिति चन्द्र-बीजम् । ]

मूलोत्थः—मूलाधारोत्थितः ।

चन्दिरः । चन्द्रः । सुधांशुः । सुधाकरः । सुधाधारः । सुधानिधिः । सुधाङ्गः । अमृतसूः । अमृतः ।…॥

'परं-ज्योति रहं ब्रह्म'—तदेत्येवं विचिन्तयेत् ।
हृदि ध्यायन् पराद्वैतं, शुद्धाद्वैत-पदं व्रजेत् ॥ २६ ॥

देवो भूत्वा यजेद् देवं, नादेवो देव मर्चयेत् ।
येन केन प्रकारेण द्वैत-भावं विवर्जयेत् ॥ २७ ॥

कृत्वा न्यासादि-कर्माणि प्रार्चयेदिष्ट-देवताम् ।
मनोयोग-सहायेन परमाह्लाद-पूर्वकम् ॥ २८ ॥

न्यासः—पूजा-जपादेः प्राग् विघ्ननाशमन्त्र सिद्ध्याद्यर्थं देहान्त-र्बहिर्वर्णादि-विन्यासः । "आगमोक्तेन विधिना नित्यं न्यासं करोति यः । देवताभाव माप्नोति मन्त्र-सिद्धिः प्रजायते ॥ यो न्यास-कवचच्छन्दो मन्त्रं जपति तं प्रिये । विघ्ना दृष्ट्वा पलायन्ते सिंहं दृष्ट्वा यथा गजाः ॥" "अकृत्वा न्यास-जालं यो मूढत्वात् प्रजपेन्मनुम् । सर्व-विघ्नैः स बाध्यः स्याद् व्याघ्रै र्मृगशिशु र्यथा ॥ "प्राणायाम मकृत्वा तु भूतशुद्धि मथापि वा । अकृत्वा विधिव-न्न्यासान् नार्चाया मधिकारवान् ॥" इति तन्त्रसारः ॥

मानसं मारुतं शक्तिं योजयेद् देवतात्मना ।
पौरुषेण प्रयत्नेन पूजादि-फल-हेतवे ॥ २९ ॥

मारुतम्=प्राण-पवनम् ॥ शक्तिम्—कुण्डलिनी-शक्तिम् ।

भाव-ग्राही भवेशानो, भावेन तं भजेत् सदा ।
भावेन शुद्धतां याति क्रियाऽपि विधि-वर्जिता ॥ ३० ॥

भावः—"चित्त-वृत्ति-विशेषो भावः" । ईश्वरानुरागरूपचित्त-वृत्तिः । "शुद्ध-सत्त्व-विशेषात्मा प्रेम-सूर्यांशु-साम्यभाक् । रुचि-भिश्चित्तमासृण्यकृदसौ भाव उच्यते ॥" इति भक्तिरसामृत-सिन्धौ ॥

भवेशानः—जगदीश्वरः ।

श्रद्धा-भक्ति-विहीनानां नराणा मभिमानिनाम्।
जप-पूजादि-कर्माणि सुफलानि भवन्ति नो ॥ ३१ ॥

"यस्य वै यावती भक्ति र्देवदेवे जनार्दने। तावत्येव फलावाप्ति स्तस्य नास्त्यत्र संशयः ॥" इति पाद्मे क्रियायोगसारे ॥

कृपणेन कृता पूजा, वित्त-शाठ्यमयी च या।
नैव सा सुफला पूजा दक्षिणादि-विवर्जिता ॥ ३२ ॥

वित्त-शाठ्यम्—कृपणता।

दक्षिणा—यज्ञादि-सम्पादक-तदन्तर्विहित-दानम्।

अङ्ग-हीना क्रिया-हीना मन्त्र-हीना तमोमयी।
शुद्धि-हीना च या पूजा, न सा सुफल-दायिनी ॥ ३३ ॥

अङ्गहीना—साधनीभूत द्रव्य कालाद्यङ्ग करण शुन्या।

पूजापराधो द्वात्रिंशद्-विधो यथा। "याने र्वा पादुकै र्वापि गमनं भगवद्-गृहे। देवोत्सवाद्यसेवा च अप्रणाम स्तदग्रतः ॥ उच्छिष्टे वाथवाऽशौचे भगवद्दर्शनादिकम्। एकहस्त-प्रणामश्च तत्पुरस्तात् प्रदक्षिणम् ॥ पाद-प्रसारणञ्चाग्रे तथा पर्यङ्कबन्धनम्। शयनं भक्षणं वापि मिथ्या भाषणमेव च ॥ उच्चै र्भाषा मिथो जल्पो रोदनानि च विग्रहः। निग्रहानुग्रहौ चैव नृषु च क्रूर-भाषणम् ॥ कम्बलावरणं चैव पर-निन्दा पर-स्तुतिः। अश्लील-भाषणञ्चैव अधोवायु-विमोक्षणम् ॥ शक्तौ गौणोपचारश्च अनिवेदित-भक्षणम्। तत्तत्कालोद्भवानाञ्च फलादीनामनर्पणम् ॥

विनियुक्तावशिष्टस्य प्रदानं व्यञ्जनादिके। पृष्ठीकृत्वासनञ्चैव परेषामभिवादनम् ॥ गुरौ मौनं निज-स्तोत्रं देवता-निन्दनं तथा। अपराधा स्तथा विष्णो द्वांत्रिंशत् परिकीर्तिताः ॥

अतएव मनोयोग-समन्वितो यथोचितम् ।
पूजयेद् देवतां भक्त्या विशुद्धै रुपचारकैः ॥ ३४ ॥

उपचारः—पूजोपकरणम् ।

आसनं कोमलं पाद्यम् अर्घ्यं माचमनीयकम् ।
स्नानीयं मधु-पर्कञ्च वस्त्राण्याभरणानि च ॥ ३५ ॥
धूपं दीपं प्रसूनानि नैवेद्यं चन्दनं तथा ।
यज्ञ-सूत्रञ्च ताम्बूलं पुष्प-माल्यं मनोहरम् ॥ ३६॥
यद् यदिष्टतमं लोके यच्चापि प्रियमात्मनः ।
तत्तन्निवेदयेद् भक्त्या भगवत्-प्रीति-हेतवे ॥३७॥

आसनम्—उपवेशनाधारः । पीठादि ।

पाद्यम्—पाद-प्रक्षालनार्थ-जलम् ।

आचमनीयकम्—मुख-प्रक्षालनार्थ-जलम् ।

मधुपर्कम्—[ मधु+पृच्+घञ् ] "दधि सर्पि र्जलं क्षौद्रं सितैताभिस्तु पञ्चभिः। प्रोच्यते मधुपर्कन्तु सर्व-देवौघ-तुष्टये ॥ जलन्तु सर्वतः स्वल्पं सितादधिघृतं समम्। सर्वेषामधिकं क्षौद्रं मधुपर्के प्रयोजयेत् ॥"

धूपः—गन्ध-द्रव्य-विशेषोत्थधूमस्तद्-वर्तिश्च ।

नैवेद्यम्—देवाय निवेदनीय-द्रव्यम् । "चतुर्विधं कुलेशानि द्रव्यं ते षड्-रसान्वितम् । निवेदनात् भवेत् तृप्ति र्नैवेद्य' तदुदाहृतम् ॥" इति कुलार्णवे ॥

यज्ञ-सूत्रम्—[ "यज्ञार्थं धार्यते सूत्रम् ।" इति वृद्धादित्य-संहिता ॥ ] यज्ञोपवीतम् ॥ ऊर्ध्वन्तु त्रिवृतं सूत्र' सधवा-निर्मितं शनैः । तन्तु-त्रय मधोवृत्तं यज्ञ-सूत्रं विदु र्बुधाः ॥"

इष्टः—अनुकूलः Regarded as good. पूजितः । वाञ्छितः प्रियः ॥

सर्वं निवेदयेद् भक्त्या—देहं गेहं धनं जनम् ।
निवेदनेन सर्वस्य च्छेदयेन्मोह-विद्रधिम् ॥ ३८ ॥

विद्रधिः—रोग-विशेषः । हृद्-व्रणः । हृद्-ग्रन्थिः ॥

पूजयेच्च परं देवं मानसै रुपचारकैः ।
आन्तरं पूजनं भक्त्या गरीयो बाह्य-पूजनात् ॥ ३९ ॥

"बाह्य-पूजा-क्रमेणैव ध्यानयोगेन पूजयेत् । पूजयेच्चिन्तयेद्देवं वचसा मनसा हृदा । तथैव साधको लोके चान्तर्याग-परायणः ॥" इति मुण्डमाला-तन्त्रे ॥

हृदयेऽष्ट-दले पद्मे वह्नि-भानु-सम-प्रभे ।
इष्ट-देवं प्रतिष्ठाप्य दोष-निर्मुक्त-विग्रहम् ॥ ४० ॥
सच्चिदानन्द-सान्द्राङ्गं धर्म-कामार्थ-मोक्षदम् ।
उद्यद्-भानु-सहस्राभं पूजयेत् तं यतेन्द्रियः ॥ ४१ ॥

दोष-निर्मुक्त-विग्रहम्—( १।८।१२ टीका द्रष्टव्या ) अष्टादश-महादोष-रहिता सर्व-सुलक्षण-युक्ता सर्वैश्वर्यमयी अभौतिकी भगवत्तनुः ॥ सान्द्रम्—घनम् ।

सहस्रारामृतेनैव पाद्यं दद्यात् पदाम्बुजे ।
अर्चयेद् विषयैः पुष्पैः सर्व-तत्त्वैः समाहितः ॥ ४२ ॥

एवं दत्त्वा शरीराणि ब्रह्माण्डानि परात्मने ।
पूर्णमेकं महादेवं तन्मयत्वेन चिन्तयेत् ॥ ४३ ॥

ध्यायेत् ततो हृदाकाशे स्वेष्ट-देवं मनोहरम् ।
ध्यानं हि चिन्तनं विष्णोः पावनं शिवदं परम् ॥ ४४ ॥

यावदिन्द्रिय-चाञ्चल्यं मनसा संनियम्य च ।
शान्तेनाभीष्ट-देवस्य चिन्तनं ध्यान मुच्यते ॥ ४५ ॥

ध्येयालम्बन-संस्थस्य ध्येय-प्रत्यय-सन्ततिः ।
प्रत्ययान्तर-निर्मुक्ता सा ध्यानमिति भण्यते ॥ ४६ ॥

ध्येय-प्रत्यय-सन्ततिः—ध्येयाकाराकारित-अन्तरिन्द्रियवृत्ति-प्रवाहः ।

ध्येयस्य चिन्तनेनैव याति निश्चलतां मनः ।
ध्येये पदे महाविष्णौ तद् ध्यानं परमं महत् ॥ ४७ ॥

पादतो मस्तकान्तञ्च सर्वाङ्गाणि यथा-क्रमम् ।
चिन्तयेत् सुमनाः शान्तो ध्यायेत्तानि पृथक् पृथक् ॥४८॥

यदैकाङ्गे धृतं चित्तं नान्यदङ्गं तदा स्मरेत्।
अङ्गं प्रियतरं ध्यायेद् अधिकञ्च यथा-रुचि ॥ ४८ ॥

शुभ-चिह्न-समायुक्ते मोहान्धकार-दीपके।
पश्येत् ते शुभदे शुद्धे पावने चरणाम्बुजे ॥ ५० ॥

शुभचिह्न-समायुक्ते—"ब्रह्मोवाच। ऊनविंशति चिह्नानि मया दृष्टानि तत्-पदे। दक्षिणे दश-चिह्नानि वामे च नव नारद॥ ध्वजातपत्रं कमलं वज्राख्यमङ्कुशो यवः। स्वस्तिकं चोर्ध्वरेखा चाष्ट-कोणं चक्रमेव च॥ नवान्यानि प्रवक्ष्यामि साम्प्रतं वैष्णवोत्तम। चिह्नानि वामचरणे गोविन्दस्याद्भुतानि च॥ इन्द्रचापं त्रिकोणञ्च कलसञ्चार्धचन्द्रकम्। शङ्खोऽम्बरं मत्स्य-चिह्नं गोष्पदं जाम्बवं स्मृतम्॥"

सर्व-लक्षण-सम्पूर्णं दिव्य-गन्धानुलेपनम्।
पश्येत् सुकोमलं गात्रं सर्वालङ्कार-भूषणम् ॥ ५१ ॥

सर्व-लक्षण-सम्पूर्णम्—"त्रि-विस्तीर्णं त्रि-गम्भीरं त्रि-खर्वं सुमनोहरम्। पञ्च-दीर्घं पञ्च-सूक्ष्मं षट्-तुङ्गं सप्त-रक्तिमा। विग्रहे लक्षणं ज्ञेयं वासुदेवस्य पार्वति॥" त्रि-विस्तीर्णम्—(१) नाभिः, (२) कपोलौ, (३) वक्षःस्थलम्॥ त्रि-गम्भीरम्—(१) नाभिः, (२) हस्त-तले, (३) नेत्रे॥ त्रि-खर्वम्—(१) नखानि, (२) केशः, (३) अधरः॥ पञ्च-दीर्घम्—(१) नेत्रे, (२)

हस्तौ, (३) हस्त-तले, (४) पादौ, (५) पाद-तले ॥ पञ्च-सूक्ष्मम्—(१) ग्रीवा, (२) मध्यदेशः, (३) जङ्घा, (४) दन्तः, (५) कुन्तलः ॥ षट्-तुङ्गम्—(१) नासा, (२) ग्रीवा, (३) स्कन्धः, (४) वक्षः, (५) शिरः, (६) कटिः ॥ सप्त-रक्तिमा—(१) पाद-तले, (२) हस्त-तले, (३) नाभिः, (४) वक्त्रम्, (५) नासापुटद्वये, (६) नेत्रे, (७) कर्णौ ॥

ध्यायेत् ततः कृपाऽऽधारौ वराभीति-करौ करौ ।
ततश्च सुन्दरीं ग्रीवां नेत्राह्लाद-करीं पराम् ॥ ५२ ॥

प्रसन्नं वदनं ध्यायेत् सुस्मितञ्च मनोरमम् ।
अपीव्य-दर्शनं शान्तं पूर्णेन्दु-सन्निभं शुभम् ॥ ५३ ॥
अपीव्यम्—अति-सुन्दरम् ।

पुनाति यत् कृपाऽऽलोकैः सन्ततं भुवन-त्रयम् ।
महानन्दमयं पश्येत् सुनीलोत्पल-लोचनम् ॥ ५४ ॥

एवं ध्यात्वा ततो भूय एकदैव समाहितः ।
आपाद-मस्तकं रम्यं सर्व-देहं विचिन्तयेत् ॥ ५५ ॥

आनन्द-सिन्धु-संमग्नो रोमाञ्चित-कलेवरः ।
इष्ट-देवं निरीक्षेत ज्योतिर्मयं मनोहरम् ॥ ५६ ॥

पावनं दर्शनं यस्य करोति जन्म-खण्डनम् ।
पश्येत् तं शोभनं नित्यं पुण्यं नित्य-कलेवरम् ॥ ५७॥

नित्य-कलेवरः—स 'सर्वात्मा नित्य-विग्रहः'। तस्य न भौतिकं शरीरम्। तस्य सर्वैश्वर्यमयी विज्ञानानन्द-रूपिणी सत्या तनुः॥
(ब्रह्मवैवर्त पुराणे श्रीकृष्णशरीरस्य नित्यत्वं व्याख्यातम्।)
[टीका-परिशिष्टं द्रष्टव्यम्।]

सर्वाङ्ग-सुन्दरं शान्तं सुकुमार मनामयम्।
गम्भीरादति-गम्भीरं पश्येद् देवं सुखावहम्॥ ५८॥

मुदाऽसेचनकं देवं रुचिरं प्रिय-दर्शनम्।
पुलकाङ्कित-सर्वाङ्गः पश्येत् प्रेम्णा प्रतिक्षणम्॥ ५९॥

असेचनकम्—[न सिच्यते तृप्यति मनोऽत्र आधारे असेचनः] यस्य दर्शनात् तृप्तेः रन्तो नास्ति तम्। अत्यन्त-प्रिय-दर्शनम्।

रुचिरम्—सुन्दरम्।

इष्ट-रूपं सुखाधारं सर्वदैवं विचिन्तयेत्।
रूपं ध्यायन् समाधिस्थो रूपातीतो भवेत् पुमान्॥६०॥

समर्थो यः सदा चित्तं निर्मले व्योम्नि धारयेत्।
व्यापके परमे शान्ते सर्व-शून्ये प्रभान्विते॥ ६१॥

शक्त-तरो न्यसेज्जीवं शुद्धे बुद्धेऽव्यये पदे।
भ्रमो येन लयं याति जीवन्मुक्तिः प्रजायते॥ ६२॥

शक्ततरः—अधिकतर-समर्थः साधकः ।

जीवन्मुक्तिः—जीवतो बन्ध-निवृत्तिः। जीवतः पुरुषस्य कर्तृत्व-भोक्तृत्वनिबन्धन-सुखदुःखविशेष-क्लेशादि-रूपस्य चिर-निवृत्तिः ।

एवं योगिन्द्र महाध्याने सदा चित्तं नियोजयेत् ।
ज्ञान-वैराग्य-सम्पन्नः श्रद्धधानो यतेन्द्रियः ॥ ६३ ॥

तिष्ठन् गच्छन् पिबन्नश्नन् पश्यन् शृन्वन् वदन्नपि ।
शुचि र्वाप्यशुचिर्वापि सदा ध्यायेन्महेश्वरम् ॥ ६४ ॥

ध्यान-काले तदन्ते वा जपेन्मन्त्रं समाहितः ।
जपेनैव परां शान्तिं संसिद्धिं लभते नरः ॥ ६५ ॥

मन्त्रः—उपासनानुकूल-वाक्यम् ।

जपः—विधानेन मन्त्रोच्चारणम् । "न चंक्रमन् न विहसन् न पार्श्वमवलोकयन् । नोपाश्रितो न जल्पंश्च न प्रावृतशिरा स्तथा ॥ न पदा पादमाक्रम्य न वै बहिः करौ स्मृतौ । नैवं विधं जपं कुर्यात् न च संश्रावयेज्जपम् ॥" इति याज्ञवल्क्यः ॥ जपकाले न भाषेत …॥ "क्रोधं मोहं क्षुतं निद्रां निष्ठीवनं विजृम्भितम् । दर्शनं वनितानाञ्च वर्जये ज्जप-कर्मणि ॥ नाभे रधश्च संस्पर्शं कर्मकाले विवर्जयेत् ॥" "मनः संहृत्य विषया-न्मन्त्रार्थ-गत-मानसः । न द्रुतं न विलम्बञ्च जपेन्मौक्तिक-पङ्क्तिवत् ॥"

श्रीगुरो र्वदनाच्छ्रब्धो बीज-रूपो सनातनः ।
मननात् त्रायते मन्त्रः संसारात् पाप-नाशनः ॥ ६६ ॥

संस्मृत्य वाच्य-लक्ष्यार्थौ मन्त्र-संलग्न-मानसः ।
सर्वदैव जपेन्मन्त्रं परमानन्द-दायिनम् ॥ ६७ ॥

[ "वाच्योऽर्थोऽभिधया बोध्यो लक्ष्यो लक्षणया मतः ।" ]
[विष्णु-शब्दस्य वाच्यार्थः = शङ्ख-चक्र-गदा-पद्म-धारी पीताम्बरः पुरुष-मूर्तिः । तस्य लक्ष्यार्थः = सर्वव्यापी सर्वाधारः सर्वान्तर्वर्ती परमात्मा । ]

उच्चै र्जपा दुपांशुश्च श्रेयानित्येव निश्चितम् ।
उपांशो र्मानसः श्रेयान् कर्तव्यो गुरु-सम्मतः ॥ ६८ ॥

"जिह्वोष्ठौ चालयेत् किञ्चिद् देवता-गत-मानसः । निज-श्रवण-योग्यः स्यादुपांशुः स जप-स्मृतः ॥" "धिया यदक्षर-श्रेणीं वर्ण-स्वर-पदात्मिकाम् । उच्चरेदर्थमुद्दिश्य मानसः स जपःस्मृतः ॥" इति तन्त्रसारः ॥

शुचि र्वाप्यशुचि र्वापि सर्व-देशे च सर्वदा ।
मन्त्रैक-शरणो योगी मन्त्रमेव समभ्यसेत् ॥ ६९ ॥

मन्त्रः शब्दमयः स्थूलो विग्रहो बाह्य उच्यते ।
सूक्ष्मो ज्योतिर्मयो हार्द श्चिन्तामयः परो मतः ॥ ७० ॥

चिन्तया रहितो मन्त्रः परमः परिकीर्तितः ।
एवं ध्यात्वा महामन्त्रं प्राप्नोति परमां गतिम् ॥ ७१ ॥

हार्दः—हृद्-गतः ॥ मन्त्रः—परो मन्त्रः—परमो मन्त्रः ।

जपाच्छ्रान्तः प्रकुर्वीत प्रार्थनं भाव-संयुतम् ।
प्रार्थनेन स्तवेनैव स्वर्ग-द्वार मपावृतम् ॥ ७२ ॥

अपावृतम्—अनावृतम् । अपसारितावरणम् ।

जीवानां करुणं क्रुष्टं सहते न प्रजापतिः ।
नेत्राम्बु द्रावयेन्नित्यम् आर्तबन्धुं दया-निधिम् ॥७३॥

क्रुष्टम्—रोदनम् ।

प्रार्थनस्य प्रभावेण समस्तमेव लभ्यते ।
नास्त्येव दुर्लभं किञ्चिद् यदनेन न साध्यते ॥ ७४ ॥

यद् यदाकाङ्क्षितं लोके प्रार्थयेत महेश्वरम् ।
तदन्यः कोऽपि नो दाता, तमेकं सर्वदाऽऽश्रयेत् ॥ ७५ ॥

न प्राप्तं प्रार्थितं यावत् तावद्धि पार्थनं चरेत् ।
सदा सारल्य-सम्पन्नः सन्तान-भावमाश्रितः ॥ ७६ ॥

सर्वेषां जन्म-दाता स पालनाच्च पिता महान् ।
अवश्यं तेन दातव्यं यद् यदिष्टतमं नृणाम् ॥ ७७ ॥

धर्म्यं क्षेम्यं शुभं पुण्यं प्रयाचेत परात्परम् ।
पांशु-कूलं न याचेत विश्व-राजं विमूढ़-धीः ॥७८॥

पांशुः—धूलिः ॥ कूलम्—स्तूपः ।

अथवा यः सदोदारः चेमं राति स्वभावतः ।
तत्-सकाशे विपन्नानां प्रार्थनेन स्तवेन किम् ॥७६॥

अथवा किं कुतः कस्मात् केन याच्यं चराचरे ।
सर्वमेव यतो ब्रह्म नास्त्यन्यत् परमार्थतः ॥ ८० ॥

मौनं हि प्रार्थनं सत्यं, मौनं हि प्रार्थनं परम् ।
ज्ञान-ध्यान-जपानाञ्च मौनमेव परा गतिः ॥ ८१ ॥

मृते चित्ते भवेन्मौनं, न तु मौनमभाषणात् ।
अतो नित्यं मनुष्येण साधनीया मनोन्मनी ॥ ८२ ॥

"Mind unmind thou, make mind cease."
*Yoga and Perfection.*

यदैव म्रियते चित्तं विलिनाति चराचरम् ।
तदैव योगिनां सत्यं सामर्थ्यं जायते महत् ॥ ८३ ॥

तदैव त्यागिनां चित्ते ब्रह्म-भानुः प्रकाशते ।
अविद्या-तिमिरं सर्वं तदा सद्यः पलायते ॥ ८४ ॥

भक्ति-योग-सहायेन तत्तुमज्ञान-वारिधिम् ।
प्रेमाश्रु-जल-पूर्णाक्षः प्रार्थयेत परेश्वरम् ॥ ८५ ॥—

"नमस्ते सच्चिदानन्द नमस्ते पुरुषोत्तम ।
लीलया विततं विश्वं येन तुभ्यं नमो नमः ॥ ८६ ॥

विनाशोत्पत्ति-हीनाय निर्गुणाय गुणात्मने ।
नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमो नमः ॥ ८७ ॥
सङ्ग-हीनं निराधारं मायातीतं चिदात्मकम् ।
माया-मुग्धः कथं जाने त्वामहं परमेश्वरम् ॥ ८८ ॥
विस्मृत्यब्धौ कृत-स्नानो विस्मृतात्माऽणुतां गतः ।
ममाहन्ता-युतो देही पश्यामि त्वां कथं विभो ॥ ८९ ॥
कर्त्तृ-भोक्तृत्व मारोप्य स्वस्मिन्, दृष्ट्वा शुभाशुभम् ।
प्रियाप्रियं गतः कामी चञ्चल स्त्वां कथं भजे ॥९०॥
आशा-पाश-शतै र्बद्धः कर्म-चक्रे सुघूर्णितः ।
भव-पिष्टो विमुग्धोऽहं कथं यामि त्वयि प्रभो ॥ ९१ ॥
अज्ञानं चञ्चलं बद्धं क्षेमङ्कर दयस्व माम् ।
प्रसीद करुणा-कान्त, न गति स्त्वत्-कृपां विना ॥९२॥
आलोकय कृपा-दृष्ट्या तामसं ज्ञान-दुर्बलम् ।
अनाथं मां महाविष्णो त्वं निरावरणो भव ॥ ९३ ॥
रजस्तमोमयो नित्यं वृथा-मान-मदान्वितः ।
निर्लिप्त न्त्वां कथं जानेऽपाप-विद्धं कृपां विना ॥ ९४ ॥
विश्वे लीनेऽति-गम्भीरे गहने च महातमे ।
तत्-तमस्यापि पारे त्वं राजसे यो महोज्ज्वलः ॥ ९५ ॥
सूक्ष्मात् सूक्ष्मं कथं तत् त्वां बुद्धि र्वेत्स्यति मे जडा ।
कर्मानुसारिणी स्थूला, कृपां विना, ऽऽविलाऽऽकुला ॥९६॥

कुत्र त्वं परमः शम्भुः स्वे महिम्नि विराजितः ।
कुत्र वा क्षुद्र-जीवोऽहं मोह-पङ्क-कलङ्कितः ॥ ९७ ॥
कथं त्वाञ्च गमिष्यामि निर्बल स्त्वत्-कृपां विना ।
अहैतुक-कृपा-सिन्धो पाहि मां पाहि मां प्रभो ॥ ९८ ॥
काल-पाशेन संबद्धं शङ्कितं शोक-कर्षितम् ।
मामुद्धर जगन्नाथ तृष्णाया परिपीडितम् ॥ ९९ ॥
त्वमेवात्मा पिता माता सखाऽपत्यं पतिः प्रभुः ।
त्वमेव द्रविणं शम्भो गुरु स्त्वं ज्ञान-दायकः ॥ १०० ॥
चातकस्य यथा निष्ठा सदैकस्मिन् पयोधरे ।
तथा मे भवतान्निष्ठा त्वय्येकस्मिन् सुधार्णवे ॥१०१॥
इन्द्रियाणि मनः प्राणं विश्व-स्मृतिं हरस्व मे ।
आकर्ष मां जगन्नाथ तवैव श्रीपदान्तिके ॥ १०२ ॥
किञ्चनापि न मेऽस्तु स्वं विना त्वयाऽखिलात्मना ।
अचलां देहि मे भक्तिं त्वयि नित्य-प्रिये प्रभो ॥ १०३ ॥
वित्तात् क्लेशो मदो हिंसा जायन्ते धर्म-विच्युतिः ।
नाहं याचे धनं मानं, देहि भक्तिं भवेश्वर ॥ १०४ ॥
दुःख-दैन्य-मयो देह स्थिराशुद्धो विनश्वरः ।
देह-सौख्यं न वाञ्छामि, देहि भक्तिं जनार्दन ॥ १०५ ॥
बान्धवं बन्धनं ज्ञात्वा कथं स्वङ्ख्ये कुटुम्बकम् ।
कर्तित्वा मे महामोहं, देहि भक्तिं सदाशिव ॥ १०६ ॥
वीर्यं धर्मो मतिः सत्यं सर्वं नश्यति कामतः ।
कामान् हित्वा सदा मेऽस्तु तव श्रीचरणे रतिः ॥ १०७ ॥

न वाञ्छामि सुखं भोगं कैवल्यमपि दुर्लभम्।
प्रयच्छ मे दृढां भक्तिं तव श्रीचरणाम्बुजे ॥ १०८ ॥
येन केन प्रकारेण यत्र तत्र च भावय।
देहि मे निर्मलां भक्तिं त्वयि प्रेमास्पदे हरे ॥१०९॥
प्रसीद मे महाशम्भो प्रसीद विश्व-नायक।
सर्वाभिलाषिता-शून्यां भक्तिं देहि त्वयि प्रभो ॥ ११० ॥
करोतान्मे वचो नित्यं तवैव नाम-कीर्तनम्।
करोतान्मे करो नित्यं तवैव पाद-सेवनम् ॥ १११ ॥
पिबतान्मे श्रवो नित्यं तवैव कीर्तनामृतम्।
स्मरतान्मे मनो नित्यं त्वामेव शान्ति-दायकम् ॥ ११२ ॥
वसतान्मे हृदाकाशे विद्युत्-कोटि-सम-प्रभः।
तिष्ठतान्मे सदा मत्यां सच्चिदानन्द-विग्रह ॥ ११३ ॥
मानसं मे यदा भ्रान्तं त्वद्-विच्युतं भविष्यति।
कृपया हे दया-सिन्धो त्वयीश्वरे तदानय ॥११४॥
ध्यायानि त्वामहं नित्यं पश्यानि सर्वदा प्रभो।
नमानि त्वां सदा-कालम्—एवं कुरु महेश्वर ॥ ११५ ॥
नमामि त्वां जगद्-बन्धो नमस्ते परमात्मने।
नमो विश्वसृजे तुभ्यं नम आश्चर्य-कर्मणे ॥ ११६ ॥
नमो देवादि-देवाय परिपूर्ण-स्वरूपिणे।
नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमो नमः ॥" ११७ ॥

विततम्—विस्तृतम्।

भव-पिष्टः—संसारेण दलितः, मर्दितः, चूर्णीकृतः।

गहनम्—दुर्गमम्। दुष्प्रवेशम्।

१०२म श्लोकः—"दुहन्त्योऽभिययुः काश्चिद्दोहं हित्वा समुत्सुकाः। पयोऽधिश्रित्य संयाव मनुद्वास्या परा ययुः॥ परिवेशयन्त्य स्तद्धित्वा पाययन्त्यः शिशून् पयः। शुश्रूषन्त्यः पतीन् काश्चिदश्नन्त्योऽपास्य भोजनम्॥ लिम्पन्त्यः प्रमृजन्त्योऽन्या अञ्जन्त्यः काश्च लोचने। व्यत्यस्त (विपर्यस्त) वस्त्राभरणाः काश्चित् कृष्णान्तिकं ययुः॥ ता वार्यमाणाः पतिभिः पितृभि र्भ्रातृबन्धुभिः। गोविन्दापहृतात्मानो न न्यवर्तन्त मोहिताः॥"

नित्य-प्रियः—"निरुपाधि-प्रेमास्पदत्वम्—आत्मत्वम्॥"

जनार्दनः—जनै रर्द्यते याच्यते पुरुषार्थ-लाभाय। जनं जनन मर्दति हिनस्ति ताडयति वा।

स्वङ्क्ष्ये—[ स्वञ्ज्—आलिङ्गने, to embrace. ]

रतिः—रागः। अनुरागः। प्रीतिः। क्रीडा।

कैवल्यमपि दुर्लभम्—"सालोक्य सार्ष्टि सामीप्य सारूप्यैकत्वमप्युत। दीयमानं न गृह्णन्ति विना मत्-सेवनं जनाः॥" इति भागवतम्॥

भावय—[ भू (स्थितौ) + णिच् ] keep.

एवं स्तुत्वा ततो दत्त्वा पुष्पाञ्जलिं विधानतः।
पञ्च-नीराजनं कुर्याद् भक्ति-भावेन मोदितः॥ ११८॥

नीराजनम्—दीपादिना प्रतिमादे रारात्रिकम् । निर्मञ्छनम् ॥ "आदौ चतुष्पाद-तलैकदेशे, द्वौ नाभि-देशे, मुख-मण्डले त्रीन् । सर्वेषु गात्रेषु च सप्तवारानारात्रिकं तन्मुनयो वदन्ति ॥" पञ्च-नीराजनम्—पञ्च-प्रकारारात्रिकम् ॥ "पञ्च-नीराजनं कुर्यात् प्रथमं दीप-मालया । द्वितीयं सोदकाब्जेन तृतीयं धौत-वाससा ॥ चूताश्वत्थादि-पत्रैश्च चतुर्थं परिकीर्तितम् । पञ्चमं प्रणिपातेन साष्टाङ्गेन यथाविधि ॥" इति कालोत्तर-तन्त्रम् ॥ "मन्त्र-हीनं क्रिया-हीनं यत् कृतं पूजनं हरेः । सर्वं सम्पूर्णता मेति कृते नीराजने शिवे ॥" इति स्कान्दे शिवोमा-संवादे ॥ "कृत्वा नीराजनं विष्णो र्दीपावल्या सुदृश्यया । तमो-विकारं जयति जिते तस्मिंश्च को भवः ॥" इति हरि-भक्ति-सुधोदये ॥ [ कर्पूर-यन्त्रधूप-चामर-व्यजन-प्रभृतिभिरपि नीराजनं क्रियते ।] शङ्ख-घण्टादि वाद्यकैः सह भक्ति-भावेन नीराजनं कुर्यात् ।

ततश्च प्रणतिं कुर्यात् पतित्वा दण्डवत् क्षितौ ।
नम्रत्वेन समायुक्तः प्रेम-वाष्प-परिप्लुतः ॥ ११८ ॥

प्रणतिः—भक्ति-श्रद्धातिशययुक्त-नमस्कारः । स चतुर्विधः । (१) अभिवादनम् (नामोच्चारण-पूर्वक-नमस्कारः ; 'अभिवादये भो अमुक-शर्माहम्'—इत्येवं रूपः । तत्तु पाद-स्पर्श-पूर्वक-नमस्कारः ; पाद-ग्रहणम् । ) । (२) अष्टाङ्गः ( पद्भ्यां कराभ्यां जानुभ्याम् उरसा शिरसा दृशा । वचसा मनसा चैव प्रणामोऽष्टाङ्ग ईरितः ॥ ) । (३)

पञ्चाङ्गः ( बाहुभ्याञ्चैव जानुभ्यां शिरसा वचसा दृशा । पञ्चाङ्गोऽयं प्रणामः स्यात् पूजासु प्रवराविमौ ॥ ) । (४) कर-शिरः-संयोगश्च ॥

स्वापकृष्टत्व-बोधेन शरणागति-पूर्वकः ।
श्रद्धान्वितः प्रणामो यः प्रणिपातोत्तमो हि सः ॥ १२० ॥

प्रणिपातः परो यज्ञो वन्दनं पावनं परम् ।
प्रेमान्वितो नमस्कारः प्रीतिदः सततं हरेः ॥ १२१ ॥

साष्टाङ्ग-प्रणतिं कुर्याद् दृष्ट्वा नारायणं विभुम् ।
उत्थायोत्थाय हर्षेण दण्डवत् प्रणमेन्मुहुः ॥ १२२ ॥

नमेद् भागवतान् नित्यं गुरुं दृष्ट्वा सदा नमेत् ।
महागुरून् नमेन्नित्यं संयतो विनयान्वितः ॥ १२३ ॥

महागुरुः—अतिगुरुः ॥ स च पुरुषस्य पिता माता आचार्यश्च । स्त्रियाः पतिः । अदत्त-कन्यायाः पिता माता च ॥

इष्ट-देवं प्रणम्याथ कुर्यात् प्रदक्षिणं शुभम् ।
तदन्ते चोपभुञ्जीत नैवेद्यं चरणोदकम् ॥ १२४ ॥

प्रदक्षिणम्—दक्षिणावर्तेन देवमुद्दिश्य भ्रमणम् । "एकं देव्यां रवौ सप्त त्रीणि कुर्याद् विनायके । चत्वारि केशवे कुर्यात् शिवे चार्ध-प्रदक्षिणम् ॥" इति कर्म-लोचनम् ॥ "न लङ्घयेत् सोम-सूत्रं ( जल-निःसरण-स्थानं ) धीमान् शम्भु-प्रदक्षिणे ।" इति

पाद्मे क्रियायोगसारे ॥ "शङ्ख-हस्तेन सर्वत्र दक्षिणं परि-कीर्तितम् ।" इति विश्वसारे ॥

नैवेद्यं चरणोदकम्—( चरणोदकम् = पादोदकम् । चरण-धौत-जलम् । चरणामृतम् । ) "हृदि रूपं मुखे नाम नैवेद्य मुदरे हरेः । पादोदकञ्च निर्माल्यं मस्तके यस्य सोऽच्युतः ॥ नैवेद्यमन्नं तुलसी-विमिश्रं विशेषतः पाद-जलं पिवेच्च । योऽश्नाति नित्यं प्रयतो मुरारेः प्राप्नोति सुप्रेम-युतां स भक्तिम् ॥ अयमेव परो धर्म इदमेव परं तपः । इदमेव परं तीर्थं विष्णु-पादाम्बु यत् पिवेत् ॥" "पादोदकञ्च निर्माल्यं नैवेद्यञ्च विशेषतः । महाप्रसाद इत्युक्त्वा ग्राह्यं विष्णोः प्रयत्नतः ॥" इत्येकादशीतत्त्व-धृतं मत्स्य-सूक्त-वचनम् ॥

अर्चनाच्च जपाद् ध्यानात् कीर्तनात् स्मरणाद्धरेः ।
तत्-कथा-श्रवणात् पुण्याद् वन्दनाच्छिव-सेवनात् ॥१२५॥
तत्-पादोदक-पानाच्च तन्निवेदित-भोजनात् ।
सर्व-कर्मार्पणात् तस्मै शिवायात्म-निवेदनात् ॥१२६॥
भक्तानां पुण्य-संसर्गात् पुण्य-तीर्थ-निषेवणात् ।
भक्तिः सञ्जायते नृणां सारात्सारा परात्परा ॥१२७॥

कीर्तनात्—"ॐ स कीर्त्यमानः शीघ्रमेवाविर्भवति अनुभा-वयति भक्तान् ।" नाः सूः ॥

तन्निवेदित-भोजनात्—"ये विप्रा हरये दत्त्वा नित्य मन्नञ्च भुञ्जते । उच्छिष्ट-भोजनात् तेषां हरे र्दास्यं लभेन्नरः ॥"

भक्तानां पुण्य-संसर्गात्—"ॐ मुख्यतस्तु महत्कृपयैव भगवत्-कृपालेशाद्वा ।" "ॐ महत्-सङ्गस्तु दुर्लभोऽगम्योऽमोघश्च।" नाः सूः ॥ सारः—वरः । श्रेष्ठः ।

यत्र नास्ति हरेः पूजा शङ्कर-स्मरणं परम् ।
तत्रैव मानवो नित्यम् आहते स्व-शिरो ध्रुवम् ॥१२८॥

हृषीकेश-च्युता लोकाः सर्वेन्द्रिय-सुखैषिणः ।
जायन्ते च म्रियन्ते च भ्रमन्त्येव पुनः पुनः ॥१२९॥

तावदेव हि संसारो यावन्मुक्ति र्न लभ्यते ।
मुक्ति र्न लभ्यते लोके विश्व-नाथे रतिं विना ॥१३०॥

काम-क्रोधान्ध-चित्तानां मुग्धानां संशयात्मनाम् ।
ब्रह्माण्ड-पावनं प्रेम दुर्लभादपि दुर्लभम् ॥१३१॥

कामाक्रान्ताः सुविभ्रान्ता ममाहन्ता-समन्विताः ।
भ्रामयन्ति देह-वित्तार्थं संसारे कर्म-दुर्गमे ॥१३२॥

काम-कर्म मनुष्याणां संसार-गति-कारणम् ।
सर्वान् कामान् परित्यज्य भजेन्नित्यं सनातनम् ॥१३३॥

आत्मन्येव दृढासक्ति रसङ्गत्व मनात्मनि ।
भवतो हि विमोक्षाय ताभ्यां यतेत सत्वरम् ॥१३४॥

सर्वान् सङ्गान् परित्यज्य शुभेच्छा-संयुतः पुमान् ।
भक्ति-वैराग्य सिद्ध्यर्थं देवार्चनं समाचरेत् ॥१३५॥

वैराग्येण हरि-ध्यानं श्रद्धा-भक्ति-समन्वितम् ।
विधुनोति मलान् सर्वान् दुःख-ताप-प्रदायकान् ॥१३६॥

स्वरूपावरको यस्तु सोऽविवेक स्तमोमलः ।
या जडेषु ममाहन्ता भ्रान्तो मोह-मयो-मलः ॥१३७॥
नाना-विषय-भोगेच्छा महामोह-मयो-मलः ।
यस्मात् क्रोधश्च मृत्युश्च कर्म-पाशो भयावहः ॥१३८॥

विषयेषु सदा पश्येद् दोषं पापं भयानकम् ।
जगन्नाथे सदा पश्येत् सुखं शान्तिं शिवं शुभम् ॥१३९॥

सर्वं विश्वं महाविष्णो मायया कल्पितं मृषा ।
त्यक्त्वा विश्वं भजेन्नित्यं सत्यमेकं निरञ्जनम् ॥१४०॥

विहाय नाम-रूपाणि रतिं कुर्यान्महेश्वरे ।
असारे खलु संसारे सार माराधनं हरेः ॥१४१॥

स्वप्नेऽपि जागरे चैव स्मृतिः शम्भो रघौघनुत् ।
शम्भु-स्मृति-प्रभावेण तरेन्मायां सुदुस्तराम् ॥१४२॥
अघौघनुत्—पाप-समूह-विनाशिका ।

जन्मना यज्ञ-सूत्रेण विद्यया दीक्षया च किम् ।
यदि नो सेवते विष्णुम् आद्यम्पुरुष मव्ययम् ॥१४३॥

सा जिह्वा या शिवं स्तौति तच्चित्तं यत् शिवे रतम्।
तावेव केवलौ श्लाघ्यौ यौ तत्-पूजा-करौ करौ ॥१४४॥

श्लाघ्यः—श्लाघनीयः। प्रशंस्यः।

[ द्वादश-शुद्धिः—"गृहोपसर्पणञ्चैव तथानुगमनं हरेः। भक्त्या प्रदक्षिणञ्चैव पादयोः शोधनं पुनः॥ पूजार्थं पत्र-पुष्पाणां भक्त्यैवोत्तोलनं हरेः। करयोः सर्वशुद्धीनामियं शुद्धिर्विलिख्यते॥ तन्नामकीर्तनञ्चैव गुणानाञ्चैव कीर्तनम्। भक्त्या श्रीकृष्ण-देवस्य वचसः शुद्धिरिष्यते॥ तत्-कथा-श्रवणञ्चैव तस्योत्सव-निरीक्षणम्। श्रोत्रयो र्नेत्रयोश्चैव शुद्धिः सम्यगिहोच्यते॥ पादोदकञ्च निर्माल्यं मालानामपि धारणम्। उच्यते शिरसः शुद्धिः प्रणतस्य हरेः पुनः॥ आघ्राणं गन्ध-पुष्पादे निर्माल्यस्य तपोधने। विशुद्धिः स्यादनन्तस्य घ्राणस्यापि विधीयते॥ तत्र पुष्पादिकं यच्च कृष्णपाद-युगार्पितम्। तदेव पावनं लोके तद्धि सर्वं विशोधयेत्॥" इति पाद्मे पाताल-खण्डम्॥ ]

स योगः परमो योगः सा तिथिः परमा तिथिः।
तल्लग्नं परमं लग्नं यत्र सम्पूज्यते हरिः ॥१४५॥

योगः—विष्कम्भादिः। ['ज्योतिस्तत्त्वम्'—द्रष्टव्यम्]॥

तिथिः—चन्द्रकलाक्रियारूपा। चन्द्रकलाक्रियोपलक्षितः काल इति वा। "अमादि पौर्णमास्यन्ता या एव शशिनः कलाः। तिथयस्ताः समाख्याताः षोडशैव वरानने॥"

लग्नम्—राशीनामुदयः। इत्यमरः॥

अतएव जगद्-वीजं स्वेष्ट-देवं प्रपूजयेत् ।
प्रतिमासु शिलाबुद्धिं परित्यज्य विचारतः ॥१४६॥

प्रतिमासु शिलाबुद्धिः—वैष्णव-शास्त्रोक्त ६४ प्रकारापराधान्तर्गतापराध विशेषः । [ (१) इष्टदेवे देव-विशेष-बुद्धिः । (२) शास्त्रे पौरुषेय-बुद्धिः, साधारण-ग्रन्थ-बुद्धिर्वा । (३) वैष्णवे जाति-बुद्धिः । (४) श्रीगुरौ साधारण-मानुष-बुद्धिः । (५) प्रतिमायां दारु-शिला-मृदादि-बुद्धिः । (६) प्रसादे खाद्य-बुद्धिः । (७) चरणोदके जल-बुद्धिः । (८) तुलस्यां साधारण-वृक्ष-बुद्धिः । (९) गवि साधारण-पशु-बुद्धिः । (१०) भगवल्लीलासु मानव-कृत-बुद्धिः । (११) रास-लीलायां काम-चेष्टा-बुद्धिः । (१२) महोत्सवे स्पर्शास्पर्श-बुद्धिः । (१३) नास्तिक्यम् । (१४) संशय-पूर्वकं धर्माचरणम् । (१५) अश्रद्धा-पूर्वकं धर्माचरणम् । (१६) आलस्य-पूर्वकं धर्माचरणम् । (१७) महापुरुषाणां बाह्य-चरित्र-दर्शन-पूर्वकः गुण-दोष-विचारः । (१८) अभिमानः । (१९) शास्त्र-देवतादि-निन्दनम् । (२०) माल्य-दण्ड-पादुकै र्भगवद्-गृहे गमनम् । (२१) देवं पृष्ठीकृत्वोपवेशनम् । (२२) अशुचिर्भूत्वा मन्दिर-प्रवेशः । (२३) ताम्बूल-सेवनम् । (२४) काम-क्रोधादि-चेष्टा । (२५) उच्च-हास्यम् । (२६) कुचेष्टा । (२७) उच्चवाक्यम् । (२८) अश्लीलवाक्यम् । (२९) मिथ्या वाक्यम् । (३०) मादकसेवनम् । (३१) परहिंसा । (३२) कुसङ्गः । (३३) आत्म-स्तुतिः । (३४) इष्टदेवतातिरिक्तेषु निर्भरता । (३५) पोष्यभरणे त्रुटिः । (३६) पापाचरणम् । (३७) अनिवेदित-द्रव्य-

भोजनम् । (३८) सुस्वादु-द्रव्य-भोजनेच्छया तद्द्रव्यस्य निवेदनम् । (३९) धर्म-विक्रयः । (४०) भगवन्नाम-विक्रयः । (४१) शपथः । (४२) भगवति अस्वाधीनता-बुद्धिः । (४३) लोभेन प्रसादादि-वितरणम् । (४४) धर्मे अश्रद्धा । (४५) धर्म-वैतंसिकत्वम्—इत्यादीनि त्याज्यानि ॥ ]

प्रतिमा-पूजने किन्तु चित्तं नो रमते यदि ।
अर्चयेत् परमं ब्रह्म स्व-गुरूक्त-क्रमेण वै ॥ १३७ ॥

द्विविधं ब्रह्मणो रूपं मूर्तामूर्त-विभेदतः ।
तस्य हि द्विविधं रूपं स्थूल-सूक्ष्म-विभागतः ॥ १४८ ॥
एकमेतदतीतञ्च रूपं तस्यैव राजते ।
अरूपञ्चेति तन्नित्यं प्रोच्यते तत्त्व-दर्शिभिः ॥ १४९ ॥

मूर्तम्—मूर्तिमत् ॥ अमूर्तम्—मूर्ति-रहितम् । मूर्त-भिन्नम् ॥

सर्वाण्येतानि रूपाणि महानिर्वाण-दानि हि ।
स्वेष्टं प्रियं मुदा नित्यं पूजयेद् भक्ति-पूरितः ॥ १५० ॥

येन केन प्रकारेण शिवं नित्यं प्रपूजयेत् ।
शिवं प्राच्यं शिवं ज्ञात्वा शिवो भूत्वा शिवं व्रजेत ॥ १५१ ॥

---

## पञ्चमोल्लासः।

पूजां परिसमाप्याथ नित्य-श्राद्धं समाचरेत्।
भोजयेदतिथीन् भिक्षून् अभ्यागतान् समादरात्॥ १॥

श्राद्धम्—शास्त्रोक्त-विधानेन-पितृ-कर्म। "संस्कृत-व्यञ्जनाद्यञ्च पयोदधिघृतान्वितम्। श्रद्धया दीयते यस्मात् श्राद्धं तेन निगद्यते।" इति पुलस्त्य-वचनात् श्रद्धया अन्नादे दानं श्राद्धम्। अपि च। सम्बोधन पदोपनीतान् पित्रादीन् चतुर्थ्यन्त पदेनोद्दिश्य हवि स्त्यागः श्राद्धम्।

नित्य श्राद्धम्—"अहन्यहनि यच्छ्राद्धं तन्नित्य मभिधीयते॥" "नित्यश्राद्धन्तु कुर्याद्वै यत्तत् प्रतिदिनं कृतम्। दद्यादहरहः श्राद्ध मन्नाद्येनोदकेन च। पयो मूल फलै र्वापि पितृभ्यः प्रीति मावहन्॥" इति बृहद्धर्म पुराणे॥

श्रद्धया यो ददात्यन्नं सव्यञ्जनं बुभुक्षवे।
तेन तत् कर्मणा सत्यम् आशुतोषः सदाऽर्च्यते॥ २॥

अन्नम्—[ अद् भोजने + क्त ] भोज्य-द्रव्यम्॥ व्यञ्जनम्—अन्नोपकरणम्। तत् शाक-सूपादि।

भूतेभ्यो दीयतामन्नं सह स्नेहेन सादरम्।
सर्वेषामप्यलाभे तु खाद्यं गोभ्यो निवेदयेत्॥ ३॥

भूतः—प्राणी । जन्तुः ।

अन्न-दानं महापुण्यं लोभ-कार्पण्य-वर्जितम् ।
अन्न-दानात् परं नास्ति न भूतं न भविष्यति ॥ ४ ॥

अहन्यहनि दीयेत धनं किञ्चित् स्व-शक्तितः ।
धर्म-बुद्ध्या प्रदीयेत चानपेक्ष्य प्रयोजनम् ॥ ५ ॥

दान-पात्रे शिवं पश्यन् शिवं दानेन पूजयेत् ।
अन्नार्थादि-प्रदाने च वित्त-शाठ्यं विवर्जयेत् ॥ ६ ॥

प्रात-र्मध्याह्नयोः सन्ध्ये चाकृत्वा देव-पूजनम् ।
अदत्त्वा च तथा दानं नैवाश्नीयात् नरः क्वचित् ॥ ७ ॥

क्षालयित्वा करौ पादौ शुद्ध-वस्त्र-धरः पुमान् ।
विशुद्धे विजने स्थाने भुञ्जीत स्व-जनैः सह ॥ ८ ॥

"आहारः प्रीणनः सद्यो बलकृद्देहधारणः । स्मृत्यायुः शक्ति-वर्णौजः सत्त्व शोभा विवर्धनः ॥"

हृद्यं सद्गुण-सम्पन्नं भक्षितव्यं सुभोजनम् ।
अन्याय-भोजनं नित्यं त्यक्तव्यं दोष-सङ्कुलम् ॥ ९ ॥

हृद्यम्—हृत् प्रियम् । हृद्धितम् । मनोहरम् ।

अन्यायभोजनम्—देह-मनसोः क्षतिकरं खाद्यम् । (१) अपवित्र-द्रव्य-भोजनम्, (२) अस्वास्थ्यकर-द्रव्य-भोजनम्, (३) अकाले भोजनम्, (४) अक्षुधायां भोजनम्, (५) अतिरिक्त

भोजनम्, (६) स्वल्प-भोजनम्—सर्वाण्येतानि अन्याय-भोजनानि॥ नीच-पतित-अपवित्र-पापिनामन्नं तथा अपवित्र जनेन स्पृष्टं खाद्यं सर्वथा वर्जनीयम्। दिवाभागे द्विभोजनं, सन्ध्ययो र्भोजनं, रात्रिशेषे भोजनं, रात्रौ दधि-भक्षणं, रौप्य-पात्रस्थ-कर्पूरं, ताम्र-पात्रे दुग्ध-पानम्, उच्छिष्ट-पात्रे घृत-भोजनं, कांस्ये नारिकेलोदकं, ताम्रपात्रस्थं मधु, लवण-मिश्रितं दुग्धं, गुडसंयुक्त मार्द्रकं, पिपीलिका-मिश्रितं मध्वादि द्रव्यं तथा काक-कीटादि-भक्षितं, कृमियुक्तम्, आविलं, शास्त्र-निषिद्धं सर्वमन्नपानं वर्जनीयम्॥ द्विस्विन्नमन्नं, चिपिटकः, ताम्बूलं, मसूरं, मत्स्यः, मांसं—ब्राह्मणानां, विधवा स्त्रीणां, यतीनां, वैष्णवानां तथा ब्रह्मचारिणामभक्ष्यम्। ["प्रतिपत्सु च कुष्माण्ड मभक्ष्य मर्थनाशनम्। द्वितीयायाञ्च वृहती-भोजको न स्मरेद्धरिम्॥ अभक्ष्यञ्च पटोलञ्च शत्रुवृद्धिकरं परम्। तृतीयायां, चतुर्थ्याञ्च मूलकं धन-नाशनम्॥ कलङ्क-कारणञ्चैव पञ्चम्यां विल्व-भक्षणम्। तिर्यग्-योनिं प्रापयेत् तु षष्ठ्याञ्च निम्ब-भक्षणम्॥ रोगवृद्धिकरञ्चैव सप्तम्यां ताल-भक्षणम्। नारिकेल फलं भक्ष मष्टम्यां बुद्धिनाशनम्॥ तुम्बी नवम्यां गोमांसं दशम्याञ्च कलम्बिका। एकादश्यां तथा शिम्बी द्वादश्यां पूतिका तथा॥ त्रयोदश्यान्तु वार्ताकी-भक्षणं पुत्र-नाशनम्। चतुर्दश्यां माषभक्षं महापापकरं परम्॥ पञ्चदश्यां तथा मांसमभक्ष्यं गृहिणां मुने॥"]

सकृद्दिवा सकृन्नक्तं भोजनं शास्त्र-बोधितम् ।
एकाहारी दिवा-रात्रे योगिनान्तु प्रशस्यते ॥१०॥

दिवा द्वितीयके यामे भोजनं ना समाचरेत् ।
भक्षयेद् भोजनं नक्तं यामार्धे तु तृतीयके ॥ ११ ॥
यामार्धम्—प्रहरस्यार्धम् ।

भोजनादक्षुधायान्तु व्याधिः सञ्जायते ध्रुवम् ।
अभोजनात् क्षुधायाञ्च स्वास्थ्य-हानिः प्रजायते ॥ १२ ॥
अभोजनात् क्षुधायाञ्च—"भोजनेच्छा विघातात् स्यादङ्गमर्दोऽरुचिः श्रमः । तन्द्रा लोचन-दौर्बल्यं धातु-दाहो बलक्षयः ॥ बुभुक्षितो न योऽश्नाति तस्याहारेन्धन-क्षयात् । मन्दीभवति कायाग्नि र्यथा चाग्नि र्निरिन्धनः ॥ यथा भूमिगतं तोयं रवि-रश्मिभिः शुष्यति । शरीरस्थ स्तथा धातुः शुष्यते जाठराग्निना ॥ न शृणोति न चाघ्राति चक्षुषा न च पश्यति । दह्यते वेपते मूढः शुष्यते च क्षुधार्दितः ॥ मुकत्वं बधिरत्वञ्च जडान्धत्वञ्च पङ्गुताम् । रौद्रं मर्यादाहीनत्वं क्षुधा सर्वं प्रवर्तते ॥" इति वह्नि-पुराणे ।

मिताहारी भवेन्नित्यं जाठराग्नि-विचारतः ।
उपतापकरं सर्वम् अशुद्धान्नं त्यजेद् बुधः ॥ १३ ॥
मिताहारी—परिमित भोजी । "सुस्निग्ध मधुराहार श्चतुर्थांश-विवर्जितः । भुज्यते शिव-संप्रीत्यै मिताहारः स उच्यते ॥"

जाठराग्नि-विचारतः—"मन्दानलो नरो द्रव्यं मात्रागुरु विवर्जयेत् । स्वभावतश्च गुरु यत् तथा संस्कारतो गुरु ॥ मात्रा गुरुस्तु मुद्गादि र्माषादिः प्रकृते र्गुरुः ॥ संस्कारगुरु पिष्टान्नं प्रोक्तमित्युपलक्षणम् ॥" इति भाव-प्रकाशे ॥

उपतापः—रोगः । उत्तापः । अशुभम् ।

भक्षयेद् देह-रक्षार्थं विष्णु-प्रीति-निमित्तकम् ।
लोभान्नो भोजनं कुर्या ल्लोभः परम-हानिदः ॥ १४ ॥

लोभो यत्र सदा तत्र रिपवः षट् सुनिश्चितम् ।
लोभेन च प्रमादेन साधको नश्यति ध्रुवम् ॥ १५ ॥

लोभः पापस्य बीजञ्च नरक-द्वार मुच्यते ।
तस्माल्लोभं तृषा-बीजं समूलं परिवर्जयेत् ॥ १६ ॥

अन्न-पानादिभिः कुक्षे र्भागत्रयं प्रपूरयेत् ।
वायु-सञ्चारणार्थाय चतुर्थ मवशेषयेत् ॥ १७ ॥

कुक्षिः—उदरम् ।

भुञ्जीतानति-तृप्तं हि युक्ति-युक्तञ्च सात्त्विकम् ।
सुसंस्कृतं हितं स्निग्धं भुञ्जीतान्नं यथोचितम् ॥ १८ ॥

संस्कृतम्—पक्वम् । शोधितम् । विशुद्धम् । मन्त्र-पूतम् । भावना-पूतम् ।



भ

अत्युष्णान्न मति-क्लिन्नम् अति-शीतञ्च दुर्जरम्।
अतिशुष्कं विरुद्धान्नं सन्त्यजेद् विषमाशनम् ॥१८॥

अत्युष्णान्नम्, अति शीतान्नम्, अतिशुष्कान्नं, दुर्जरान्नं—बलं घ्नन्ति। अतिक्लिन्नं—ग्लानिकरम्। (ग्लानिः = बलहीनता। अस्वास्थ्यम्। अवसादः। हानिः। क्लान्तिः। क्षयः। रोगः।) सर्वाण्येतानि—व्याधिकराणि ॥ विरुद्धान्नं वह्नि-मान्द्यं करोति।

क्लिन्नम्—आर्द्रम्॥ दुर्जरम्—hard, hard to digest. शुष्कम्—शुष्क-द्रव्यम्; चिपिटकादि।

विरुद्धान्नानि यथा। (१) मत्स्यं तथा आनुपमांसं—दुग्ध-युक्तम्। (२) कपोतं—सर्षप-तैल-भर्जितम्। (३) मधुना, इक्षु-विकारेण वा सह मत्स्यः। (४) पयोयुक्तः शक्तुः। (५) उष्णद्रव्येण सह दधि। (६) कृशरान्वितं पायसम्। (७) रम्भा-फलेन सह दधि, तक्रं वा। (८) मधु, घृतं—समम्। (९) पुन रुष्णीकृतं शीतल-व्यञ्जनम्। (१०) एकत्र बहुमांसानि···इत्यादीनि॥

विषमाशनम्—(१) बहु, (२) स्तोकम्, (३) अकाले वा भोज-नम्॥ बहुलाल्पस्य भक्षितस्य दोषमाह। (१) आलस्य-गौरवाटोप-शब्दांश्च (आटोपः = वायुजन्य-उदर-गुड्गुडा शब्दः) कुरुते-ऽधिकम्॥ (२) हीनमात्रं तनोः कार्श्यं करोति च बल-क्षयम्॥ (३) अकाले भुक्तस्य दोष माह। (क) कालादतिप्राक्भुञ्जानः—असमर्थशरीरो भवति, शिरोव्यथा-विसूचिकालसक-विलम्बि-कादीन् प्राप्नोति। (ख) "कालेऽतीतेऽश्नतो जन्तो र्वायुनापहतेऽनले।

क्षुच्छ्रान्तिपच्यते भुक्तं न स्याद् भोक्तुं पुनः स्पृहा ॥" उद्गारशुद्धि-रुत्साहो वेगोत्सर्गो यथोचितः । लघुता क्षुत् पिपासा च यथा-काल-सुभोजने ॥

राजसं तामसं सर्वम् अन्नं पानं सदा त्यजेत् ।
अति-द्रुतं न भुञ्जीत नैव चाति-विलम्बितम् ॥ २० ॥

चर्व्यादिकं समश्नीया न्नरो दद्भिः सुचूर्णितम् ।
लाला-स्रावो भवेद् येन परिपाक-सहायकः ॥ २१ ॥

आहारं षड्-विधं चूष्यं पेयं लेह्यं तथैव च । भोज्यं भक्ष्यं तथा चर्व्यं गुरु विद्याद् यथोत्तरम् ॥ (१) चूष्यम्—इक्षु-दाडिमादि । (२) पेयं—पानक-शर्करोदकादि । (३) लेह्यं—रसाला-क्वथितादि । (४) भोज्यं—भक्त-सूपादि । (५) भक्ष्यं लड्डुक- मोदकादि । (६) चर्व्यं—चिपिट-चणकादि ।

लाला—[ लल् (ईप्सायाम्) + णि + अन् ] मुखभव-जलम् ।

परिपाकः—अत्यम्बु-पानात्, विषम-भोजनात्, मल-मूत्रादीनां वेग-धारणात्, दिवा-स्वप्नात्—लघु भोजनमपि पाकं न भजते ॥ "ईर्षा-भय-क्रोधादि-समन्वितस्य, लुब्धस्य, व्याधि-दैन्य-पीडितस्य, विद्वेष-युक्तस्य भुक्तान्नं सम्यक् न परिपाक मेति ॥" "प्रातराशे त्वजीर्णे तु साममाशेन दुष्यति ॥"

पत्रा पात्रे प्रशस्ते च प्राश्नीयात् शुद्ध-भाजने ।
मौनी भूत्वा प्रसन्नेन मनसाऽन्नं शिव-प्रदम् ॥ २२ ॥

प्रशस्तम्—कल्याण-जनकम् । स्वास्थ्यानुकूलम् । "नित्यं नूतन-भाण्डेन कर्तव्यः पाक एव च । अथवा पक्ष-पर्यन्तं तत स्त्याज्यं मनीषिभिः ॥" इति ब्रह्मवैवर्ते ॥ अशौचान्त-दिने प्राक्तन-पाकपात्रं विसृजेत् ॥ ताम्र निर्मितं पाकपात्रं नेत्रहानिकरम् । मणि-निर्मितं क्षयकारकञ्च । आयसं पात्रं पाककार्ये न प्रशस्तम् । "पक्क-पात्रे च यत् पक्कं तत् सर्वं निष्फलं भवेत् ।" पाकार्थं सुधौतं निर्मलं पात्रमेव गृह्णीयात् ।

भोजन-पात्रस्य गुणागुणं यथा । हैमं भोजन-पात्रम्—दृष्टि-शक्ति-वर्धकं, स्वास्थ्यप्रदं त्रिदोषनाशकञ्च । रौप्यं—चक्षुष्यं, पित्त-नाशकं, कफ-वात-कारकम् । कांस्यं—बुद्धिप्रदं, रुच्यं, रक्त-पित्त-नाशकञ्च । पैत्तलं—वातकृत्, रूक्षम्, कफ-कृमि-वर्धकञ्च । मृन्मयं—श्रीनिवारणम् । दारुपात्रं—श्लेष्मकरम् । आयसे तथा कान्त-पात्रे भोजनं—शोथ-पाण्डु-हरं, कामलापहं, बल्यञ्च । "क्षयी भवति ताम्रे च काच-पात्रे दरिद्रता ।" प्रस्तर-पात्रं पवित्रम् । "पाषाण-पात्रे पत्रे वा सर्वेषां भोजनं शुभम् ॥" इति बृहद्धर्म पुराणम् ॥ "पात्रं पत्रमयं रुच्यं दीपनं विषपापनुत् ॥" "स्वर्ण-रौप्यमये पात्रे पाषाणे ब्रह्मपत्रके ( पलाश पत्रे ) । सकृद् भुक्त्वा तु देवेशि पराकस्य फलं लभेत् ॥" भोजनं ब्रह्म-पत्रेषु कथयालोचनं हरेः । दर्शनं वैष्णवानाञ्च महापातक-नाशनम् ॥" इति पाद्मोत्तरखण्डे ॥ "कदले कीर्तिमाप्नुयात् ।" शालपत्रन्तु न प्रशस्तम् ॥

उपविश्यासने शुद्धे स्वेष्ट-देवं विचिन्तयेत् ।
प्रार्च्य तं मनसा भक्त्या तस्मै चान्नं निवेदयेत् ॥ २३ ॥

तस्योच्छिष्टं सदा-पूतं सर्व-पावन-पावनम् ।
प्राश्नीयात् संयतः शुद्धः परम-प्रेम-कारणम् ॥ २४ ॥
उच्छिष्टम्—भुक्तावशिष्टम् । "नारायणोच्छिष्ट मिष्ट मनिवेद्यमभक्ष्यकम् ।" इति ब्रह्मवैवर्तं ॥

अथवा जुहुयादन्नं हृदि-स्थितेऽन्तरात्मनि ।
पश्येद् वा परमं ब्रह्म भोक्तर्यन्ने च भोजने ॥ २५ ॥
भोजने—भोजन-क्रियायाम् ।

भोजनान्ते जलेनैव समाचामेद् यथोचितम् ।
निर्हृत्य दन्त-लग्नानि कूर्च-ग्रहण-पूर्वकम् ॥ २६ ॥
कूर्चः—दन्त-मल-निष्काश-शलाका । Tooth-pick.

ततः पाद-शतं गच्छेत् स्मरन् विष्णु मनश्वरम् ।
शयीत वाम-पार्श्वेन किञ्चित् काल मतःपरम् ॥ २७ ॥
"भुक्त्वा शतपदं गच्छेत् शनै स्तेन तु जायते । अन्न-संघात-शैथिल्यं ग्रीवा-जानु-कटी-सुखम् (बलम्) ॥" भोजनान्ते (१) उपविशतः—तुन्दं वर्धते, (२) शयानस्य—पुष्टि वर्धते, (३) पद-शतं शनै गच्छतः—परमायु र्वर्धते, (४) धावतः—पश्चात् मृत्यु र्धावति ॥

अनश्वरम्—सनातनम् ।

शयीत—Cf. "श्वासानष्टौ समुत्तान स्तान् द्वि पार्श्वे तु दक्षिणे। ततस्तद् द्विगुणान् वामे पश्चात् स्वप्याद् यथासुखम् ॥" "वाम-दिशायामनलो नाभेरूर्ध्वेऽस्ति जन्तूनाम्। तस्मात्तु वामपार्श्वे शयीत भुक्त-प्रपाकार्थम् ॥"

> अथोत्थाय सुखासीन स्तिष्ठेदनाकुलो नरः ।
> स्वप्यान्नैव दिवा-भागे तिष्ठेज्जाग्रदतन्द्रितः ॥२८॥

अनाकुलः—स्थिरः। अव्याकुलः।

स्वप्यान्नैव दिवा-भागे—"दिवा-स्वापं न कुर्वीत यतोऽसौ स्यात् कफावहः। ग्रीष्म-वर्ज्येषु कालेषु दिवास्वप्नो निषिध्यते ॥" "उचितो हि दिवा-स्वप्नो नित्यं येषां शरीरिणाम्। वातादयः प्रकुप्यन्ति तेषामस्वपतां दिवा ॥" क्लान्तस्य, अतिसार-शूल-श्वास-पिपासा-हिक्का-वायुरोग-अजीर्ण-पीडितस्य, क्षीण-देहस्य, क्षीण-कफस्य, बालकस्य, वृद्धस्य, रात्रि-जागरणशीलस्य दिवानिद्रा हितकारिका।

> अनायासेन साध्यञ्च कर्म कुर्यादनिन्दितम् ।
> पठेद् वा पुण्य-शास्त्राणि कुर्याद् वाऽऽलापनं हरेः ॥२९॥

अनायासः—अल्प-प्रयासः। अक्लेशः। श्रम-व्यतिरेकः। "शरीरं पीड्यते येन शुभेनाप्य शुभेन वा। अत्यन्तं तन्न कुर्वीत अनायासः स उच्यते ॥" [ अनायासेन मरणं विना दैन्येन

जीवनम् । अनाराधित-गोविन्द-चरणस्य कथं भवेत् ॥" ]

पुण्य-शास्त्राणि—Cf. "यस्मिन् शास्त्रे पुराणे वा हरिभक्ति र्न दृश्यते । न श्रोतव्यं न मन्तव्यं यदि ब्रह्मा स्वयं वदेत् ॥"
आलापनम्—परस्पर-कथोपकथनम् । आभाषणम् ।

तत्रागच्छन्ति सर्वाणि तीर्थानि पावनानि च ।
यत्र विष्णु-कथाऽऽलापः श्रद्धया प्रेमिकैः सह ॥३०॥

संसार-दुर्गमारण्ये हिंस्र-जन्तु-समाकुले ।
सम्बलं हि हरेर्नाम-मङ्गलं विश्व-मङ्गलम् ॥३१॥

कृष्ण-कथा-सुधा-पाने यो मत्तः प्रेम-विह्वलः ।
विस्मरत्येव सर्वाणि—देहं गेहं प्रियाप्रियम् ॥३२॥
चिदानन्द-रसे मग्न स्तरत्येव महाभयम् ।
विश्वं सुधामयं तस्य सुधा जगन्मयी ध्रुवम् ॥३३॥

"तव-कथाऽमृतं तप्त-जीवनं, कविभिरीडितं कल्मषापहम् ।
श्रवण-मङ्गलं श्रीमदाततं, भुवि गृणन्ति ये भूरिदा जनाः ॥" इति भागवतम् ॥

अनित्यं जीवनं ज्ञात्वा वाचमन्यां परित्यजेत् ।
श्रोतव्यः कीर्तितव्यश्च सर्वदा दीन-बान्धवः ॥३४॥

किं कुर्वीते पिता माता किं कुर्वते च बान्धवाः ।
सर्वं करोति विश्वात्मा पूज्यो वन्द्यः सदैव सः ॥३५॥

सर्व-कर्ता भवत्येव शङ्करो लोक-शङ्करः ।
शिवायैव भवेत् सर्वं यत् शिवेन विधीयते ॥३६॥

सर्वं यद् घटते विश्वे मङ्गलायेति निश्चयन् ।
शिवे निर्भरतां कृत्वा निश्चिन्त स्तं स्मरेत् पुमान् ॥३७॥

विना नारायण-स्मृत्या चित्त-शुद्धि र्न जायते ।
भक्त्या प्रकीर्तिते कृष्णे सर्वं पापं प्रणश्यति ॥३८॥

कृत्वा श्रुत्वा सदा तस्य नामैक-मङ्गलं शुभम् ।
रूपं लीलां स्वरूपञ्च ध्यात्वा तस्य प्रतिक्षणम् ॥३९॥
दृष्ट्वा चात्म-प्रदीपं तं सर्वत्र सर्व-कर्मसु ।
याति ब्रह्मपदं सत्यं यस्मान्नो विनिवर्तनम् ॥४०॥

कर्मणि स्वे रतो नित्यं स्मरेद् विष्णु मधोक्षजम् ।
तत्-कृपा निश्चितं पुंसां कर्म-निर्मूल-कारिका ॥४१॥

---

## षष्ठोल्लासः ।

अपराह्णे च कृत्यानि यानि कर्माणि तानि च ।
कुर्यात् सर्वाणि सोत्साहं स्मरन् कृष्णं जनार्दनम् ॥१॥

अपराह्णः—दिन-शेष-भागः । विकाल इति ख्यातः । इत्य-
मरः ॥ त्रिधा-विभक्त-दिनस्य तृतीय-भागः ।

सायं-काले कृत-स्नानः सायं-सन्ध्यां समाचरेत् ।
होमं कुर्याद् यथा-शास्त्रं ज्वलिते हव्य-वाहने ॥२॥

असम्पन्नं दिवा-कृत्यम् अतःपरं समापयेत् ।
कु-कृतं यद् दिवा-भागे तत् कार्यमपि शोधयेत् ॥३॥

भुञ्जीताथ यथा-कालम् अन्नं पोष्य-गणैः सह ।
लघ्वाहार स्तमस्विन्यां सर्वथैव प्रशस्यते ॥४॥

तमस्विनी—रात्रिः ।

भोजनान्ते सुखासीनो विश्राम्येच्च मुहूर्तकम् ।
तदन्ते पूजयेद् भक्त्या मनसा शिव मव्ययम् ॥५॥

प्रसन्न-मानसो भूत्वा शुद्ध-सत्त्वे व्यवस्थितः ।
निष्प्रपञ्चं निरालम्बं शिवं शान्तं विभावयेत् ॥६॥

तं देवं परमात्मानं शुद्ध-भाव-समन्वितः ।
शुद्धं बुद्धं निराकारं स्तुयादेवं परात्परम् ॥७॥—

"नमस्ते परमाद्वैत नमस्ते परमामृत।
आकाराधार-हीनाय निर्गुणाय नमो नमः ॥८॥
नमस्ते वाङ्-मनोऽतीत संज्ञा-नाम-विवर्जित।
आदि-मध्यान्त-हीनाय शाश्वताय नमो नमः ॥९॥
नमस्तुभ्यं निराभास निर्विशेष निरञ्जन।
परिच्छेद-विहीनाय निष्कलाय नमो नमः ॥१०॥
नमस्तुभ्य मविज्ञेय निर्विकल्प निरामय।
द्वैताद्वैत-विहीनाय निश्चलाय नमो नमः ॥११॥
नमः सत्याय पूर्णाय शङ्कराय नमो नमः।
अव्ययाय विशुद्धाय विशोकाय नमो नमः ॥१२॥
नमस्ते परमानन्द नमस्ते परमाक्षर।
नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमो नमः ॥१३॥
किञ्चनापि यदा नाभू न खं नापि दिनादिकम्।
मरणामरणे नास्तां सच्चासच्च न किञ्चन ॥१४॥
बभाथ त्वं तदाऽद्वैतः स्वे पूर्णत्वे विराजितः।
आत्मारामः स्वयञ्ज्योतिः समाधिस्थ इवाचलः ॥१५॥
द्रष्टृ-दृश्ये यदा नास्तां रेजिथ त्वं चिदि स्थितः।
गम्भीरादति-गम्भीरो दुष्प्रवेशः सुगूढकः ॥१६॥
तत्-त्वय्येव सदा-शान्ते परमाश्चर्य-कर्मणि।
ब्रह्माण्डानि स्फुरन्त्येव तरङ्गा इव सागरे ॥१७॥
माहात्म्य-मण्डिते नित्ये त्वयि चैतन्य-वारिधौ।
आविर्भूता स्तिरोभूता अगण्या विश्व-बुद्बुदाः ॥१८॥

असंख्येयानि विश्वानि नानारूपाणि सर्वदा ।
बहुधा त्वयि घूर्णन्ते निर्लिप्ते निर्विकारके ॥१९॥
अन्तर्बहिश्च विश्वानां चञ्चलाना मनारतम् ।
राजसे त्वं महानात्मा समः शान्तो निरन्तरः ॥२०॥
कथमेवं—न जानन्ति शास्त्राण्यपि कदाचन ।
महामायाविनं देवं त्वामेव प्रणमाम्यहम् ॥२१॥
प्रति-विश्वं सुविस्तीर्णं शैल-कानन-संयुतम् ।
ब्रह्मादिभिः समायुक्तं चन्द्रार्कादि-विमण्डितम् ॥२२॥
प्रति-विश्वं पराश्चर्यं स्वप्रकाश-प्रकाशकम् ।
अर्पितं त्वयि तद् येन तस्मै तुभ्यं नमो नमः ॥२३॥
अदः पूर्ण मिदं पूर्णं पूर्णात् पूर्ण मुदच्यते ।
पूर्णस्य पूर्ण मादाय पूर्णमेवावशिष्यते ॥२४॥
पूर्णाय पूर्ण-रूपाय दिव्याविच्युत-रूपिणे ।
सामरस्याय नित्याय तुभ्यं नित्यं नमो नमः ॥२५॥
यस्मिन् निष्कारणे विष्णौ साक्षिण्येव चिरन्तने ।
ओतप्रोत मिदं सर्वं तस्मै तुभ्यं नमो नमः ॥२६॥
तवेदञ्च त्वयीदञ्च त्वमेवेदं सुनिश्चितम् ।
त्वमेवास्मिन् महादेव त्वां शिवं प्रणमाम्यहम् ॥२७॥
त्वमेव कारणं कार्यं क्रिया त्वं करणं तथा ।
अव्यक्तञ्च तथा व्यक्तं त्वमेकः सर्व-रूपभाक् ॥२८॥
नृत्यन्ति सर्व-विश्वानि लीलाधरे त्वयि स्थिरे ।
भूत्वा भूत्वा विलीयन्ते नश्वराणि सनातने ॥२९॥

त्वं हि नाथ्येश्वरो नित्यः सीमा-हीन श्चिदर्णवः ।
विश्वानां स्थिति-कालेऽपि प्रलये च सदा-समः ॥३०॥
यावन्न प्राप्यसे त्वञ्च तावज्जीवस्य बन्धनम् ।
तावत् तस्यास्ति संसार स्तावत् ताप-त्रयं ध्रुवम् ॥३१॥
यदा त्वं लभ्यसे पुंसा तदा तस्य विमोचनम् ।
तदा वै परमानन्दो निर्वाणञ्च निरामयम् ॥३२॥
प्राप्स्यामि त्वा मनिर्देश्यं कथं नाथ पराड्तम् ।
सङ्गहीनं निरालम्बं निर्गुणं निरुपाधिकम् ॥३३॥
प्रकाश्य स्त्वं न नेत्रेण त्वया नेत्रं प्रकाशितम् ।
पश्यामि त्वां कथं शम्भो निराकार मतीन्द्रियम् ॥३४॥
प्रकाश्य स्त्वं न चित्तेन त्वया चित्तं प्रकाशितम् ।
जानामि त्वां कथं देवम् अप्रतर्क्य मलक्षणम् ॥३५॥
भाव-गम्यः सदा त्वं हि भक्त्या लभ्य स्त्वनन्यया ।
निर्दोषेण मनुष्येण श्रद्धान्वितेन धीमता ॥३६॥
भक्त्या विज्ञायते तत्त्वं सत्यं साक्षात्-कृतं भवेत् ।
भवेच्च शाश्वती मुक्तिः स्वरूपावस्थितिः परा ॥३७॥
नैव भक्त्यतिरिक्तञ्च क्वचिद् वाञ्छामि किञ्चन ।
भक्तिरेकं बलं नृणां, सम्पदः पद मापदाम् ॥३८॥
त्वमेको हि मया सेव्यः शुद्धो बुद्ध श्चिदात्मकः ।
शुद्धां भक्ति महं याचे दयस्व मे दयानिधे ॥३९॥
दम्भ-मोह-मयं जीवं कृत्वा मां मुक्त-बन्धनम् ।
एकीकुरु जगन्नाथ त्वयि ब्रह्म-महार्णवे ॥४०॥

त्वमेवैको विराजस्व विजयस्व जगत्-पते ।
त्वमेवैकः प्रमोदस्त्व सर्व माहृत्य तिष्ठ च ॥४१॥
चिन्मयं भवतात् सर्वं, जडत्वं माऽस्तु कुत्रचित् ।
मधु क्षरन्तु सर्वाणि पश्यानि त्वां निरन्तरम् ॥४२॥
परमाणौ तथा शैले स्मयस्व त्वं मनोहर ।
प्रेम ज्ञानं शिवं पुण्यं स्यन्दन्तां सर्वतः सदा ॥४३॥
गायतां यमुना गङ्गा महिमानं तव प्रभो ।
वहन्तु ते सु-सन्देशं जगत्-प्राणाः समीरणाः ॥४४॥
शोणितानां प्रवाहे च नरीनृत्यस्व शङ्कर ।
चित्ताकाशं महाकाशं सुधया प्लावय प्रभो ॥४५॥
पश्यता न्नयनं त्वां हि नान्यत् किञ्चित् कदाचन ।
शृणोतात् श्रवणं त्वां हि नान्यत् किञ्चित् कदाचन ॥४६॥
एको देवः सदा तिष्ठ स्थिरः शान्तो निरञ्जनः ।
एको देवः सदा तिष्ठ संसार-ध्वान्त-नाशन ॥४७॥
निर्मलाय प्रकाशाय केवलाय शिवाय च ।
नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमो नमः ॥" ४८॥

निर्विकल्पः—विकल्प-रहितः । विशेष्य-विशेषणता-सम्बन्ध-शून्यः । ज्ञातृ-ज्ञेयता-भेद-शून्यः । अखण्ड-ज्ञान-रूपः ।

खम्—आकाशम् ॥

बभाथ—[भा (दीप्तौ to shine, to appear) + लिट्]

आत्मारामः—आत्मा आराममिव रतिस्थानं रतिसाधनं वा यस्य ॥

रेजिथ—[राज् (दीप्तौ, to shine, to glitter)]

माहात्म्यम्—महिमा। महत्त्वम्। प्रसिद्धिः। महीयसी कीर्तिः ॥

ओतप्रोतम्—अन्तर्व्याप्तम् ॥ अतीन्द्रियम्—अतिक्रान्तमिन्द्रियं तदविषयत्वात्। इन्द्रियागोचरम्, इन्द्रियाग्राह्यम् ॥

अनन्या—अन्यैः सह सम्पर्क-रहिता। अभिन्ना। भेद-विरहिता ॥ आपत्—विपत्। विपत्तिः।

निरन्तरम्—निर्गतमन्तरं यस्मात्। अच्छिद्रम्। अनव-काशम्। सततम् ॥ स्मयस्व—[स्मि to smile] स्मितं कुरु।

स्यन्दन्ताम्—[स्यन्द् (स्रुतौ, क्षरणे—to flow out)].

एवं स्तुतिं समाप्याथ ब्रह्म-भावं विचिन्तयन्।
पवित्रा मुत्तमां शय्यां गच्छेन्नरः समाहितः ॥४९॥

शय्या—"त्रि-दोष-शमनी खट्वा तूली वात-कफापहा। भूशय्या बृंहणी (उपचयकारिका) वृष्या (शुक्रकारिका) काष्ठ-पट्टी तु वातला॥" "भूशय्या वातलातीव।" "सुशय्या-शयनं हृद्यं पुष्टि-निद्रा-धृति-प्रदम्। श्रमानिल-हरं वृष्यं विपरीत-मतोऽन्यथा॥"

शान्तः प्राची-शिराः स्वप्याद् अथवा दक्षिणा-शिराः।
वामे वा दक्षिणे पार्श्वे स्वप्यान्नरो जितेन्द्रियः ॥५०॥

स्खलनं ब्रह्म-चर्यस्य निश्चितं मरणोपमम्।
कामान्न स्कन्दयेत् शुक्रं, शुक्रं हि जीवनं ध्रुवम् ॥५१॥

शुक्रम्—[शुच् (शुचौ)+रक्] मज्ज-जात-धातुः। [तत्-पर्यायः—पुंस्त्वम्। वीर्यम्। पौरुषम्। तेजः। इन्द्रियम्। बलम्। मज्जारसः।···॥ इति राज-निर्घण्टः॥] "रसाद् रक्तं ततो मांसो मांसान्मेदः प्रजायते। मेदसोऽस्थि ततो मज्जा मज्जात् शुक्रस्य सम्भवः॥ शुक्रं शौक्ष्यं सितं स्निग्धं बल-पुष्टि-करं स्मृतम्। गर्भबीजं वपुःसारो जीवस्याश्रय उत्तमः॥ जीवो वसति सर्वस्मिन् देहे तत्र विशेषतः। वीर्ये रक्ते मले यस्मिन् क्षीणे याति क्षयं क्षणात्॥ यथा पयसि सर्पिस्तु गूढश्चेक्षौ रसो यथा। एवं हि सकले काये शुक्रं तिष्ठति देहिनाम्॥" [शुक्र कामिन प्रवर्तते।]

धृते शुक्रे धृताः प्राणा धृत मायु र्धृतं मनः।
धृता शक्ति र्धृतो योगो जीवनं सफलं भवेत्॥ ५२॥

आयुः—जीवित-कालः। परमायुः।

संनियम्येन्द्रियग्रामं ब्रह्म-स्थापित-मानसः।
स्वप्यान्नित्यं यथा-कालं, यथा-कालञ्च जागृयात्॥५३॥

रात्रि-जागरणं रूक्षं कफदोषविषार्तिजिच्च। यथाकाल-सेविता निद्रा—धातु-साम्यम्, अतन्द्रितं, पुष्टि-वर्ण-बलोत्साहं, वह्नि-दीप्तिञ्च करोति॥

एवं कर्माणि सर्वाणि दैनिकानि समाचरेत्।
शक्त्यल्पत्वं यदा दृष्टं प्रार्थयेत जगत्-पतिम्॥ ५४॥

कः समर्थः शिवादन्यः किञ्चित् कर्तुञ्च सेवितुम् ।
शुभं दातुं परित्रातुं प्रयोजनञ्च वेदितुम् ॥ ५५ ॥

स एवैति सहायत्वं शिवो यस्य सहायकः ।
अतएव भवाधीशं शिवमेकं समाश्रयेत् ॥ ५६ ॥

एति—गच्छति । प्राप्नोति ।

---

## सप्तमोल्लासः ।

शिवाश्रितः शिवानन्दः सदा सारल्य-मण्डितः ।
कुर्यात् कर्माणि सर्वाणि नित्य-नैमित्तिकानि च ॥ १ ॥

नित्य-नैमित्तिकानि—[नित्यानि—अकरणे प्रत्यवाय-साधनानि सन्ध्या-वन्दनादीनि । एकादश्या मुपोषणमपि नित्यम् ॥ नैमित्तिकानि—पुत्र-जन्माद्यनुबन्धीनि जातेष्ट्यादीनि ॥] नित्यं नैमित्तिकञ्चैव नित्य-नैमित्तिकं तथा । गृहस्थस्य त्रिधा कर्म तन्निशामय पुत्रक ॥ पञ्च यज्ञाश्रितं नित्यं यदेतत् कथितं तव । नैमित्तिकं तथा चान्यत् पुत्र-जन्म-क्रियादिकम् ॥ नित्य-नैमित्तिकं ज्ञेयं पर्व-श्राद्धादि पण्डितैः ॥ इति मार्कण्डेय-पुराणम् ॥ "पापं भुङ्क्ते समुल्लङ्घ्य नित्य-नैमित्तिकीः क्रियाः ।"

जातानां जात-कर्मादि-संस्कारांश्च समाचरेत् ।
संस्कारेण विना नृणां शुद्धता न प्रजायते ॥ २ ॥

संस्कारः—[ सं + कृ + घञ् ] शुद्धिः । दशविध-संस्कारा यथा । (१) विवाहः । (२) गर्भाधानम् । (३) पुंसवनम् । (४) सीमन्तोन्नयनम् । (५) जातकर्म । (६) नाम-करणम् । (७) अन्न-प्राशनम् । (८) चूडा-करणम् । (९) उपनयनम् । (१०) समावर्तनम् ॥

पितृ-श्राद्धादिकं कुर्याद् दद्यात् पिण्डान् यथोचितम् ।
अश्रद्धया कृतं श्राद्धं भवेद् दुष्टं सुनिश्चितम् ॥ ३ ॥

श्राद्धं कृत्वा द्यूतं, कलहं, दिवानिद्रां, पुनर्भोजनम्, अध्व-गमनं, मैथुनं प्रतिग्रहञ्च वर्जयेत् ॥

पिण्डः—श्राद्धशेषद्रव्य-निर्मित-विल्वफलाकारं पितृदेयमन्नम् ॥

"देवो यदि पिता जातः शुभकर्मानुयोगतः । तदन्न ममृतं भूत्वा देवत्वेऽप्यनुगच्छति । दैत्यत्वे मद्य-मांसादि पशुत्वे च तृणं भवेत् । मनुष्यत्वेऽन्न-पानादि-नानाभोग-रसं भवेत् ॥" इति मत्स्य-पुराणम् ॥

विद्याऽनभ्यासतो नष्टा नष्टो धर्मश्च दम्भतः ।
ज्ञानं हि तृष्णया नष्टं नष्टं तपश्च कोपतः ॥ ४ ॥
योगश्च व्यस्त-चित्तानां नष्टो यथा तथैव हि ।
नष्टं सर्वं शुभं कर्म यदेवाश्रद्धया कृतम् ॥ ५ ॥

श्रद्धैव हि हुतं ज्ञानं ध्यानं दानं तपो जपः ।
श्रद्धया लभ्यते सर्वं, यो यच्छ्रद्धः स एव सः ॥ ६ ॥

श्रद्धा—[ श्रत्+धा+अ, भावे ] [ चित्त-प्रसन्नता ]। श्रद्धायाः (१) बाल्यं = विश्वासः । (२) यौवनं—प्रीतिः, अनुरागः । (३) प्रौढत्वं—निर्भरता । (४) वृद्धत्वं—ज्ञानम्॥ [comp. (१) गुरु-वेदान्त-वाक्यादिषु विश्वासः । इति वेदान्त-सारः ॥ (२) प्रत्ययो धर्मकार्येषु सा श्रद्धेत्यभिधीयते । इति स्मृतिः ॥ (३) सत्कृति श्चानसूया च सदा श्रद्धेति कीर्तिता । इति देवल-संहिता ॥ (४) यत्पूर्वकः सर्व-पुरुषार्थ-साधन-प्रयोगः, चित्त-प्रसादः, आस्तिक्य-बुद्धिः । इति मुण्डके शाङ्कर-भाष्यम् ॥] "श्रद्धावान् लभते ज्ञानम् ।" इति गीतायाम् ॥

श्रद्धान्वितो यथा-शक्ति यथा-न्यायं यथाऽर्हणम् ।
दरिद्रान् सज्जनान् भक्तान् मासान्ते भोजयेन्नरः ॥ ७ ॥

यथाऽर्हणम्—According to propriety. "भोजयेद् दक्षिणां दत्त्वा प्रणामं कारयेत् ततः ॥"

धर्मोत्सवान् महापुण्यान् कुर्यादाह्लाद-पूर्वकम् ।
यथा-कालं यथा-योगं शास्त्र-निर्दिष्ट-वर्त्मना ॥ ८ ॥

उत्सवः—नियताह्लाद-जनक-व्यापारः ।

यथा-योगम्—यथा-युक्तम् । Fitly, suitably, according to circumstances.

कृष्ण-जन्माष्टमीं पुण्यां श्रीराम-नवमीं स्तथा ।
कुर्यादेकादशीं भक्त्या शिव-रात्रिं सुपावनीम् ॥८॥

कृष्ण-जन्माष्टमी—भाद्र-कृष्णाष्टमी । सा च श्रीकृष्णस्य जन्मतिथिः ॥ "तत्र कृष्णाष्टमी पुण्या सर्वपाप-प्रणाशिनी ।" कृष्णाष्टमी-व्रतं श्रेष्ठं सर्वकाम-फलप्रदम् ।" इति सौर-पुराणम् ॥

श्रीराम-नवमी—चैत्र-शुक्ल-नवमी । सा च श्रीरामस्य जन्म-तिथिः ॥ "चैत्रे मासि सिते पक्षे नवम्यां शोभने दिने । अतिपुण्ये सुसंलग्ने जातो रामः स्वयं हरिः ॥ पुनर्वस्वृक्ष-संयुक्ता सा तिथिः सर्वकामदा । श्रीराम-नवमी प्रोक्ता कोटिसूर्य-ग्रहाधिका ॥ अस्मिन् दिने महापुण्ये राममुद्दिश्य भक्तितः । यत्किञ्चित् क्रियते कर्म तदक्षयकरं स्मृतम् ॥ उपोषणं जागरणं पितॄनुद्दिश्य तर्पणम् । तस्मिन् दिने तु कर्तव्यं ब्रह्मप्राप्ति मभीप्सुभिः ॥ तस्मिन् दिने महापुण्ये राममुद्दिश्य भक्तितः । जपेदेकान्त आसीनो यावत् स्याद्दशमी-दिनम् । तेनैव स्यात् पुरश्चर्या दशम्यां भोजयेद् द्विजान् । भक्ष्यभोज्यैश्च बहुविधै भक्त्या दद्याच्च दक्षिणाम् ॥ कृतकृत्यो भवेत् तेन सद्यो रामः प्रसीदति ॥" इति श्रीराम-भक्तितरङ्गिणी ।

एकादशी—[ एकादशन् + डच्, ङीप् ] तिथि-विशेषः ॥ सा तु शुक्ल-पक्षे सूर्यमण्डलात् चन्द्र-मण्डलस्य निर्गमरूपैकादश-कला-क्रिया-रूपा । कृष्ण-पक्षे सूर्य-मण्डले चन्द्र-मण्डलस्य प्रवेशरूपै-

कादशकला-क्रिया-रूपा॥ हरि-वासरम्। हरि-दिनम्॥ कांस्यं मांसं मसूरञ्च चौद्रं चान्टत-भाषणम्। पुन र्भोजन मायासं दशम्यां परिवर्जयेत्॥ पारण-दिनोक्त-निषिद्ध-द्रव्याणि अत्रापि निषिद्धानि॥ एकादश्या मुभौ पचौ निराहारः समाहितः। स्नात्वा सम्यग् विधानेन धौतवासा जितेन्द्रियः। संपूज्य विधिवद् विष्णुं श्रद्धयाऽतिसमाहितः। पुष्पै र्गन्धै स्तथा धूपै र्दीपै र्नैवेद्यकैः परैः॥ उपहारै र्बहुविधै र्जप-होम-प्रदचिणैः। स्तोत्रै र्नानाविधै र्नृत्य-गीत-वाद्यै र्मनोरमैः॥ एवं सम्पूज्य विधिवद् रात्रौ कुर्यात् प्रजागरम्॥ चौद्रं मांसं सुरां तैलं व्यायामं क्रोध-मैथुने। परान्नं कांस्यताम्बूले लोभं निर्माल्य-लङ्घनम्॥ द्वादश्यां द्वादशैतानि वैष्णवः परिवर्जयेत्॥ अपि च। वितथ-भाषणं, प्रवासः, दिवा-स्वप्नः, अञ्जनं, मसूरं, द्यूतं, हिंसा, चणकम्—इत्यादीन्यपि वर्जनीयानि॥

शिवरात्रिः—शिवचतुर्दशी। "माघ-मासस्य शेषे या प्रथमे फाल्गुनस्य च। कृष्णा चतुर्दशी सा तु शिव-रात्रिः प्रकीर्तिता॥" तस्यामुपवासः प्रधानम्। "न स्नानेन न वस्त्रेण न धूपेन न चार्चया। तुष्यामि न तथा पुष्पै र्यथा तत्रोपवासतः॥" इति शङ्करोक्तेः॥ "ततो रात्रौ प्रकर्तव्यं शिव-प्रीणन-तत्परैः। प्रहरे प्रहरे स्नानं पूजाञ्चैव विशेषतः॥" "दुग्धेन प्रथमं स्नानं दध्ना चैव द्वितीयके। तृतीये च तथाऽऽज्येन चतुर्थे मधुना तथा॥" "उपवास-प्रभावेण बलादपि च जागरात्। शिव-रात्रे

स्तथा तस्या लिङ्गस्यापि प्रपूजया । अक्षयान् लभते लोकान् शिवसायुज्य माप्नुयात् ॥" इति स्कान्दे ॥

उपवासो दिनेष्वेषु पवित्रेषु विधीयते ।
विष्णु-सन्निकटे वास उपवास इति स्मृतः ॥१०॥

तत्-सहायो निराहारः संयमादि-पुरःसरः ।
सोऽप्युक्त उपवासश्च पालनीयो विधानतः ॥११॥

उपवासः—[उप+वस्+घञ्] अहोरात्र-भोजनाभावः । उपवास-दिने वर्जनीयानि—अञ्जनम् । गन्धः । माल्यम् । अलङ्कारः । गात्राभ्यङ्गः । शिरोऽभ्यङ्गः । ताम्बूलम् । यच्चान्यत् बल-राग-कृत् । दिवा-स्वापः । अक्ष-क्रीडा । अष्टाङ्ग-मैथुनम् ॥ तत्-पूर्वा-पर-दिने वर्जनीयानि—कांस्य-पात्रे भोजनम् । मांस-भोजनम् । सुरा-पानम् । मधु-पानम् । लोभः । वितथ-भाषणम् । व्यायामः । व्यवायः । दिवा-स्वापः । अञ्जनम् । मसूर-भक्षणम् । पुनर्भोज-नम् । अध्व-गमनम् । यानम् । आयासः । द्यूत-क्रीडा । अभ्यङ्गः । परान्नम् । तैलम् । चणकम् । शाकम् । अधिक-घृतम् । अत्यम्बु-पानम् ॥ इति एकादशीतत्त्वम् ॥ "न भोक्तव्यं न भोक्तव्यं न भोक्तव्यञ्च नारद । गृहिभिर्ब्राह्मणैरन्नं संप्राप्ते हरि-वासरे ॥ जन्माष्टमीदिने राम-नवमी-दिवसे हरेः । शिव-रात्री च यो भुङ्क्ते सोऽपि द्विगुणपातकी ॥" "उपवासासमर्थश्चेत् फल-मूल-जलं पिबेत् । नष्टे शरीरे स भवेदन्यथा चात्म-घातकः ॥

सकृद् भुङ्क्ते हविष्यान्नं विष्णो र्नैवेद्यमेव च। न भवेत् प्रत्यवायी स चोपवासफलं लभेत् ॥"

विष्णोः सन्निकटे वासः सर्वदैव प्रयोजनम् ।
उपवासो दिने पुण्ये भवेत् तस्य सुसाधनम् ॥१२॥

[पुण्यजनकव्रतानि यथा। (१) वैशाखस्य शुक्लतृतीयायाम् अक्षयतृतीयाव्रतम्। (२) तच्चतुर्दशी—नृसिंह-चतुर्दशी। (३) तस्य कृष्णाष्टमी—त्रिलोचनाष्टमी। (४) तस्य कृष्ण-चतुर्दशी—सावित्री। (५) ज्यैष्ठ शुक्ल-चतुर्थी—उमाचतुर्थी। (६) आषाढी शुक्लैकादशी—शयनैकादशी। (७) श्रावणी-कृष्णाष्टमी—श्रीकृष्ण जन्माष्टमी। (८) भाद्र शुक्ल-चतुर्थी—शिवा-चतुर्थी। (९) तस्य शुक्लाष्टमी—राधाष्टमी। (१०) तस्य शुक्लैकादश्यां—पार्श्वपरिवर्तन-व्रतम्। (११) तस्य शुक्ला चतुर्दशी—अनन्त-चतुर्दशी। (१२) तस्य कृष्णा चतुर्थी—गणेश-चतुर्थी। (१३) आश्विन-शुक्लाष्टमी—महाष्टमी। (१४) कार्तिक-शुक्ल-नवमी—दुर्गा-नवमी। (१५) तस्य शुक्लैकादशी—उत्थानैकादशी। (१६) अग्रहायणस्य शुक्ला द्वादशी—अखण्डा द्वादशी। (१७) माघ-शुक्ल-पञ्चमी—श्रीपञ्चमी। (१८) तस्य शुक्लैकादशी—भीमैकादशी। (१९) तस्य कृष्णचतुर्दशी—शिव-रात्रिः। (२०) फाल्गुन-शुक्ल-द्वादशी—गोविन्द-द्वादशी। (२१) चैत्रस्य शुक्ल-नवमी—श्रीराम-नवमी।··· इत्यादीनि॥] अपि च। [अमावस्या द्वादशी च संक्रान्तिश्च

विशेषतः । एताः प्रशस्ता स्तिथयो भानुवार स्तथैव च ॥ अत्र स्नानं जपो होमो देवतानाञ्च पूजनम् । उपवास स्तथा दान मेकैकं पावनं स्मृतम् ॥ इति तिथि-तत्त्वे संवर्त-वचनम् ॥ ]

तीर्थ-यात्रां नरो गच्छेत् संयतो भक्ति-नम्र-धीः ।
तीर्थ-कृत्यानि सर्वाणि कुर्यात् शक्त्या यथा-विधि ॥१३॥

तीर्थम्—पुण्य-स्थानादि ।

तीर्थ-यात्रा—तीर्थ-गमनम् । यथा शरीरस्योद्देशाः केचिन्-मेध्यतमाः स्मृताः । तथा पृथिव्यामुद्देशाः केचित् पुण्यतमाः स्मृताः ॥ प्रभावादद्भुताद् भूमेः सलिलस्य च तेजसा । परिग्राहान् मुनीनाञ्च तीर्थानां पुण्यता मता ॥ "तिस्रः कोट्योऽर्धकोटी च तीर्थानां वायुरब्रवीत् ॥" कतिपयानि तीर्थानि यथा । (१) पुष्करं—ब्रह्मणः स्थानं, तीर्थराजेति नाम्ना ख्यातम् । (२) गङ्गा ("कलौ गङ्गां समाश्रयेत् ।") । (३) नर्मदा नदी । (४) दक्षिण-सिन्धुः । (५) प्रभासः । (६) द्वारावती । (७) समुद्र-सिन्धु-सङ्गमः । (८) कुमारिका । (९) केदारम् । (१०) वदरिकम् । (११) नैमिषारण्यम् । (१२) कुरुक्षेत्रम् । (१३) गङ्गा-द्वारम् । (१४) सप्त-गङ्गम् । (१५) प्रयागः । (१६) कनखलः । (१७) गङ्गोद्भेदः । (१८) सरस्वती । (१९) लौहित्यम् । (२०) करतोया । (२१) गङ्गा-सागर-सङ्गमः । (२२) वृन्दावनम् । (२३) मथुरा । (२४) काशी । (२५) काञ्ची । (२६) पुरुषोत्तम-

क्षेत्रम् । (२७) अयोध्या । (२८) गोदावरी । (२९) दण्डकारण्यम् । (३०) चित्रकुट-पर्वतः ।

पुण्याय गम्यते यत्र तदेव तीर्थ मुच्यते ।
तीर्थे यः कुरुते पापं न तीर्थ-फल मश्नुते ॥१४॥

[ "अश्रद्दधानः पापात्मा नास्तिकोऽच्छिन्न-संशयः । हेतु-निष्ठश्च पञ्चैते न तीर्थ-फल-भागिनः ॥" (अच्छिन्न-संशयः—फलोपायेतिकर्तव्यता-सुनिश्चयशून्यः ।) इति प्रायश्चित्त-तत्त्वम् ॥ ]

यत्र जीवः कृपा-विद्धो महायोगेन निश्चलः ।
महाभक्त्या शिवो भूत्वा शिवेन सह मोदते ॥१५॥
तदेव च परं तीर्थं विशुद्धं-हृदयाम्बरम् ।
सत्त्व-पूर्णं प्रभा-जुष्टम् आध्यात्मिकं सुपावनम् ॥१६॥

यत्र प्रेम्णा महाशक्तिः शिवाभिन्ना स्वभावतः ।
विस्मृतात्मा महान्टत्ये ताल-मान-रसाश्रिते ॥१७॥
तदेव परमं तीर्थं महाशून्यं चिदम्बरम् ।
रसाधारं महानन्दं नित्य-पूर्णं शिवात्मकम् ॥१८॥

मानम्—यत्र तालं विरमति तत् । तच्चतुर्विधं यथा । (१) समम्, (२) विषमम्, (३) अतीतम्, (४) अनागतञ्च । इति सङ्गीत-शास्त्रम् ॥

चिन्मये परमे तीर्थे सुनित्ये नित्य-निर्मले ।
स्वरूपावस्थिति-स्थाने नित्य-धाम्नि परात्परे ॥१९॥

नयति सेवनं यस्य योगीन्द्रस्य शिवात्मनः ।
भक्तः स सर्वदा सेव्यो महातीर्थ-स्वरूपकः ॥२०॥

तीर्थं पूतं जगत् पूतं भक्त-पादाब्ज-रेणुना ।
सदैव मानवाः पूता भक्तानां दर्शनादिना ॥२१॥

कृष्ण-चित्तो भवेद् भक्तो भक्त-चित्तो जनार्दनः ।
यदीच्छेत् परमां शान्तिं कार्यो भक्त-समागमः ॥२२॥

भक्तानां हृदय-क्षेत्रं मुकुन्द-प्रिय-मन्दिरम् ।
भक्तानां हृदये तस्य प्रेम-लीला-विनोदनम् ॥२३॥

ब्रह्मणो महिमा भक्ते भासते च दिवा-निशम् ।
शास्त्र-व्याख्यानकं शुद्धं भक्तस्य कर्म-जीवनम् ॥२४॥

दुर्विज्ञेयं परं ब्रह्म भक्त-देहात् प्रकाशते ।
तस्मादेव सुभक्तानां सङ्गो मुक्ति-प्रदोऽनिशम् ॥२५॥

अनिशम्—सर्वदा ।

अयं निजः परो वेति नास्ति भक्ते कदाचन ।
सर्वं ब्रह्ममयं तस्य वसुधैव कुटुम्बकम् ॥२६॥

वर्षत्येव कृपां भक्तो यथा प्राज्ञे तथा जडे ।
भोक्तव्या सा कृपा नित्यं श्रद्धया नम्रया धिया ॥२७॥

यथा वै यमुना पुण्या जाह्नवी मुपतिष्ठते ।
मुक्ति-काम स्तथा विद्वान् वैष्णवानुपतिष्ठते ॥२८॥

उपतिष्ठते—[ उप+स्था (मिलने, मैत्रीकरणे, देव-पूजायाम् । ) ]

दर्शनं स्पर्शनं भक्त्या तेषा मुच्छिष्ट-भोजनम् ।
प्रणामः सेवनञ्चैव नाशयन्ति महाभयम् ॥ २९॥

उच्छिष्टम्—भुक्तावशिष्टम् । "तद् भुज्यते यद् द्विजभुक्त-शेषम् ।"

शिरसा प्रणमेद् भक्त्या चोपहारं निवेदयेत् ।
रिक्त-हस्तो न पश्येत् तु गुरुं भक्तञ्च देवताम् ॥३०॥

सेवेत श्रद्धया भक्तान् दम्भ-वर्जन-पूर्वकम् ।
भक्तानां सेवनेनैव तोषयेद् भक्त-वत्सलम् ॥३१॥

चित्तेन प्रेम-पूर्णेन सरलेन प्रयत्नतः ।
भक्तं नित्य मुपासीत मोक्षद्वार मपावृतम् ॥३२॥

उपासीत—सेवेत ।

भक्त-राज मुपासीत तत्-प्रीत्यर्थं मकुण्ठितः ।
निष्कामोऽगणयित्वा च लाभालाभौ विचारवान् ॥३३॥

विचारेण विना कर्म हानिदं पापदं भवेत् ।
सर्व-कर्मसु कर्तव्या निर्मला सुविचारणा ॥ ३४॥

कर्तव्यानि सदा कुर्यात् प्रणिधानेन यत्नतः ।
न क्षुद्रमपि हेडेत सर्वं कुर्यान्मनोरमम् ॥३५॥

हेडेत—अवहेलेत ।

आसनं वसनञ्चैव शयनं पादुका स्तथा ।
अन्यस्य व्यवहारार्थं दद्यान्नैव कदाचन ॥३६॥

गृह-भूमिं गृहारामं गृहावग्रहणीं गृहम् ।
तथा द्रव्याणि सर्वाणि रक्षेन्नित्यं सुनिर्मलम् ॥३७॥

गृह-भूमिः—वास्तु-भूमिः ।

गृहारामः—गृह-समीपस्थ-कृत्रिम-वनम् । (उपवनम्) ।

गृहावग्रहणी—[गृहम् अवगृह्यते अनया] देहली ।

गृहम्—गृह्यते धर्माचरणाय । इष्टकामृत्तिकादिरचितः गेहः ।

द्रव्याणि सन्ततं रक्षेद् यथा-स्थानं विचारतः ।
नियमेन यथा-कालं कुर्यात् कर्माण्यतन्द्रितः ॥३८॥

उच्छृङ्खलो भवेन्नैव निरङ्कुशोऽनियन्त्रितः ।
सदा संयम माश्रित्य कुर्यात् कर्म विधानतः ॥३९॥

यादृशो रोप्यते वृक्ष स्तादृशं प्राप्यते फलम् ।
यथा कर्म फलावाप्ति स्तथैवेति सुनिश्चितम् ॥४०॥

जायन्ते च म्रियन्ते च शीतका जड-बुद्धयः।
उद्यमेनैव सिध्यन्ति धर्म-कामार्थ-मोक्षकाः ॥४१॥
शीतकः—अलसः। दीर्घ-सूत्री।

---

## अष्टमोल्लासः।

नृ-जन्म दुर्लभं प्राप्य नावहेलस्व मानव।
कदापि मावजानीहि दान मेतत् परात्मनः ॥१॥
अवहेलस्व—अवहेडस्व। Disregard, neglect, slight.
अवजानीहि—अवज्ञां कुरु। Despise, treat with contempt, neglect.

मोक्षाय प्रतिजानीथा मोक्षाय त्वं यतस्व च।
जीवसि म्रियसे वा त्वं करणीय मिदन्त्वया ॥२॥
प्रतिजानीथा—प्रतिज्ञां कुरु। Promise, declare solemnly.

कोऽर्थस्य जीवितेनैव यदि शान्ति र्न लभ्यते।
कोऽर्थस्य विद्यया शक्त्या यदि मोक्षो न काङ्क्ष्यते ॥३॥

जज्ञिषे कोटि-कल्प स्त्वं कोटि-कल्पश्च मम्रिथ ।
कोटि-कल्पो भवारण्यं भ्रे मिथैव सुखं विना ॥४॥

जज्ञिषे—जातवान् ।

यावन्न विन्दसे मोक्षं भूयो भूयो जनिष्यसे ।
भूयो भूयो जरा-व्याधि-दुःखाद्यै श्च विधक्ष्यसे ॥५॥

विधक्ष्यसे—दग्धो भविष्यसि ।

दुःख-दग्धान् नरान् दृष्ट्वा पीड्यमानान् स्व-कर्म भिः ।
उत्तिष्ठस्व महामुक्तौ विलम्बस्व क्षणं न हि ॥६॥

उत्तिष्ठस्व—यतस्व ।

संसार-दाव-दाहेन दह्यमानो दिवा-निशम् ।
कथं विलम्बसे मुक्तौ विलम्बे तु भयं महत् ॥७॥

भीम-वक्त्रं करालास्यं दृष्ट्वा कालं वधोद्यतम् ।
कथं नो यतसे सद्यो विमोक्षाय सुखाय च ॥८॥

वधोद्यतः—(वध + उद्यतः) पर-वधायोद्युक्तः ।

अधुनैव शुभं योगम् आरभस्व त्वरान्वितः ।
शीघ्रं सन्तर योगेन संसारं शोक-सङ्कुलम् ॥९॥

पाश-बद्धः पशु र्जीवः पाश-मुक्तः सदाशिवः ।
योगेन बन्धनं छित्त्वा तूर्णमेव शिवो भव ॥१०॥

पाशः—संसार-बन्धनम् । ["घृणा लज्जा भयं शोको जुगुप्सा

चेति पञ्चमम् । कुलं शीलं तथा जाति रष्टौ पाशाः प्रकीर्तिताः ॥"]

निरोधेन निबोधेन लभस्व योग मुत्तमम् ।
गुरुमाश्रय योगार्थं सर्व-सिद्धि-निषेवितम् ॥११॥

निरोधः—अन्तःकरणवृत्तीनां रोधः । "ॐ निरोधस्तु लोक-वेद-व्यापार-सन्न्यासः ॥" "ॐ तस्मिन् अनन्यता तद्विरोधिषूदासीनता च ॥" इति नारद-सूत्रम् ॥ निबोधः—ज्ञानम् ।

गुह्याद् गुह्यतमो योगो दुर्लभानाञ्च दुर्लभः ।
न ज्ञेया सा शुभा विद्या सद्-गुरोः करुणां विना ॥१२॥

"विद्या—परा-विद्या—महाविद्या—परमा-विद्या ॥" इति वेदवाणी ।

गुरुं लब्ध्वा महाप्रज्ञं योग-युक्तं तपोनिधिम् ।
लभस्व योग-विज्ञानं दीप्त-बुद्धि विमुक्तिदम् ॥१३॥

वस्तु-ज्ञानं क्रिया-ज्ञानं योगार्थे द्वे प्रयोजने ।
उभे एते प्रयत्नेन लभनीये मुमुक्षुणा ॥१४॥

---

## नवमोल्लासः ।

विशेषेण सिनोतीति विषयो विनिगद्यते ।
विषयः सर्वदा बन्धो, विषयो बन्ध-कारणम् ॥१॥

सिनोति—बध्नाति ।

अर्थश्च विषयश्चोभौ नूनमेकार्थ-वाचकौ ।
विषया इन्द्रियार्थाश्च, विषयो भोग-साधनम् ॥२॥

नूनम्—निश्चितम् ।

स्थूल-सूक्ष्म-विभेदेन विषयो द्विविधो मतः ।
विषयास्तु ह्यसंख्येया ग्राह्याश्च नित्य-सेविताः ॥३॥

क्षित्यप्-तेजो-मरुद्-व्योम-नामकं भूत-पञ्चकम् ।
द्रव्याणि च समस्तानि गन्ध-स्वादादि-पञ्चकम् ॥४॥
गुणाश्च सकलाः सर्व-प्रकाराः शास्त्र-बोधिताः ।
क्रियाः सर्वविधाः सर्वाः समस्ताश्च पदार्थकाः ॥५॥
सर्वाण्येव भवन्त्यर्था अथवा बहुलेन किम् ।
तत्-सर्वं विषयः प्रोक्तं यदेव ज्ञान-गोचरम् ॥६॥

द्रव्यम्—[द्रु (गतौ, वृक्षादौ)+य] वस्तु । न्यायमते तन्नवविधं यथा । "क्षित्यप्-तेजो-मरुद्-व्योम-काला, दिग्-देहिनौ

मनः ।" [Cf. "पृथिव्याप्तेजोवायुराकाशं कालो दिगात्मा मन इति द्रव्याणि ॥" इति कणाद-सूत्रम् ॥]

स्वादः—रसः । "रसः स्वादे जले वीर्ये शृङ्गारादौ विषे द्रवे । बोले रागे देह-धातौ तिक्तादौ पारदेऽपि च ॥" इति हेमचन्द्रः ॥

गुणाः—रूप-रस-गन्ध-स्पर्शाः, संख्याः, परिमाणानि, पृथक्त्वं, संयोग-विभागौ, परत्वापरत्वे, बुद्धयः, सुख-दुःखे, इच्छा-द्वेषौ, प्रयत्नाश्च गुणाः ॥ इति कणाद-सूत्रम् ॥ न्यायमते चतुर्विंशति-गुणाः—(१) रूपम् । (२) रसः । (३) गन्धः । (४) स्पर्शः । (५) संख्या । (६) परिमाणम् । (७) पृथक्त्वम् । (८) संयोगः । (९) विभागः । (१०) परत्वम् । (११) अपरत्वम् । (१२) बुद्धिः । (१३) सुखम् । (१४) दुःखम् । (१५) इच्छा । (१६) द्वेषः । (१७) यत्नः । (१८) गुरुत्वम् । (१९) द्रवत्वम् । (२०) स्नेहः । (२१) संस्कारः । (२२) धर्मः । (२३) अधर्मः । (२४) शब्दः ॥

क्रियाः—Cf. "उत्क्षेपणमवक्षेपणमाकुञ्चनं प्रसारणं गमनमिति कर्माणि ॥" इति कणाद-सूत्रम् ॥

पदार्थः—(पद + अर्थ) पदानां घट-पटादीनाम् अर्थोऽभिधेयः । "सप्तपदार्था यथा । द्रव्यं गुण स्तथा कर्म सामान्यं सविशेषकम् । समवायस्तथाऽभावाः पदार्थाः सप्त कीर्तिताः ॥" इति भाषापरिच्छेदः ॥ एते पदार्था वैशेषिक-प्रसिद्धाः । नैयायिकानामप्यविरुद्धाः ॥ इति सिद्धान्त-मुक्तावली ॥ गौतमोक्त-षोडश-पदार्था यथा । "प्रमाण-प्रमेय-संशय-प्रयोजन-दृष्टान्त-सिद्धान्तावयव-तर्क-

निर्णय-वाद-जल्प-वितण्डा-हेत्वाभास-च्छल-जाति-निग्रहस्थानानां" [पदार्थानां] तत्त्व-ज्ञानान्निःश्रेयसाधिगमः ॥ Compare. "धर्म-विशेष-प्रसूताद् द्रव्य-गुण-कर्म-सामान्य-विशेष-समवायानां पदार्थानां साधर्म्य-वैधर्म्याभ्यां तत्त्व-ज्ञानान्निःश्रेयसम् ॥" इति कणाद-सूत्रम् ॥

विषये सन्निधिं प्राप्ते सर्वेषामेव मानसम् ।
विषयस्याकृतिं धत्ते वृत्ति स्तद्-रूप-धारणम् ॥७॥

वृत्तिः—[Comp.—"वृत्तयः पञ्चतय्यः क्लिष्टाक्लिष्टाः ।" "प्रमाण-विपर्यय-विकल्प-निद्रा-स्मृतयः ।"]

अर्थ-रूपं मनः प्राज्ञै रान्तरार्थो निगद्यते ।
स एव कथ्यते सूक्ष्मो, बाह्यार्थः स्थूल उच्यते ॥८॥

आन्तरार्थो भवत्येव बन्धनस्यैक-कारणम् ।
शिव-सृष्टि र्न बन्धाय, जीव-सृष्टि र्हि बन्धनम् ॥९॥

शिव-सृष्टिः, जीव-सृष्टिः—"ईक्षणादि-प्रवेशान्ता सृष्टिरीशेन कल्पिता । जाग्रदादि-विमोक्षान्तः संसारो जीव-कल्पितः ॥" इति वराहोपनिषत्, महोपनिषच्च ।

अर्थ-द्वयस्य पारेऽस्ति स्वरूपस्थं मनः सदा ।
विषयो दृश्यते येन वृत्ति र्यस्मिन् प्रतिष्ठिता ॥१०॥

मनो हि ग्राहकं ग्राह्यं द्विविधं मुनि-सम्मतम् ।
प्रकाशकं प्रकाश्यञ्च विषयी विषय स्तथा ॥११॥

तामसस्य यदा धत्ते विषयस्याकृतिं मनः ।
तदैव वर्धते चित्ते निश्चयेन तमो-गुणः ॥१२॥

राजसस्य यदा धत्ते विषयस्याकृतिं मनः ।
तदैव वर्धते चित्ते निश्चयेन रजो-गुणः ॥१३॥

सात्त्विकस्य यदा धत्ते विषयस्याकृतिं मनः ।
तदैव सात्त्विको भावो वर्धते मानसे ध्रुवम् ॥१४॥

रज-स्तमोमयी वृत्तीः परित्यज्य प्रयत्नतः ।
साधकः सात्त्विकी वृत्ती वर्धयत्यवधानतः ॥१५॥

आचार-पालनेनैव, तीव्रेच्छायाः प्रभावतः ।
सर्व-सङ्ग-परित्यागाद्, दोष-त्यागाद्, विचारतः ॥१६॥
प्राणायामाद्, विरागाच्च, संकल्प-कल्पना-क्षयात् ।
भक्त्याधिक्या, ज्जपाद्, ध्यानाद्, विष्णवे सकलार्पणात् ॥१७॥
ज्ञानाभ्यासात्, समाधेश्च, सर्वत्र-ब्रह्म-दर्शनात् ।
रजस्तमो लयं यातः सत्त्वं चित्ते नितिष्ठति ॥१८॥
नितिष्ठति—प्रतिष्ठितं भवति । Is established in.

शुद्ध-सत्त्व-मयो योगी गुणातीतो भवेत् ततः ।
जन्म-मृत्यु-जरातीतः सर्वोपाधि-विवर्जितः ॥१९॥
शुद्ध-सत्त्व-मयः—Cf. "विशुद्ध-सत्त्वस्य गुणाः प्रसादः, स्वात्मा

शुभूतिः परमा प्रशान्तिः। तृप्तिः प्रहर्षः परमात्म-निष्ठा, यया सदानन्द-रसं समृच्छति ॥" इति विवेक-चूडामणिः ॥

अतो हि त्रिगुणातीतो भवितुं बुद्धिमान् पुमान् ।
राजसं तामसं हित्वा सत्त्वं संसेवतेऽनिशम् ॥२०।

अनिशम्—सततम् ।

सर्व-सद्गुण-सम्पूर्णं शुद्ध-सत्त्वमयं शुभम् ।
इष्ट-देवं प्रभा-जुष्टं ध्यायत्येव स सन्ततम् ॥२१॥

Cf. "Holiest of Holy He ; Think of Him, and holy be." *Yoga and Perfection.* जुष्टम्—सेवितम् ।

देवता-चिन्तनेनैव देवरूपं भवेन्मनः ।
चिन्ताभ्यासेन तद्रूपं सुदृढं भवति स्थिरम् ॥२२॥

तदा चित्तं भवेत् शुद्धं यथा देवः सुचिन्तितः ।
शुद्धे चेतसि जायन्ते ज्ञानं भक्तिः समाधयः ॥२३॥

व्रतं दानं तपो यज्ञं त्रिदेह-शुद्धि-कारणम् ।
कुर्वन्ति मानवा नित्यं धर्म-शास्त्र-परायणाः ॥२४॥

मनो वै सर्व-जीवानां जड-चैतन्य-मिश्रितम् ।
तमाधिक्ये जडाधिक्यं सत्त्वाधिक्ये जडाल्पता ॥२५॥

मनसो जड-भागाद्धि मोहमयो जगद्-भ्रमः ।
मनसो जड-भागाद्धि विषयाणां परिग्रहः ॥२६॥

चित्तं पवित्रतां याति जडत्वेऽपगते सति ।
चित्तं निर्विषयं शुद्धं काम-विद्ध मशुद्धकम् ॥२७॥

वृत्ति-हीनं निरालम्बं शान्तं निर्विषयं स्थिरम् ।
मनो रजस्तमो-हीनं शुद्ध मित्यभिधीयते ॥२८॥

अपवित्र-मना जीवो जाग्रदादि-दशा-त्रये ।
स्थूलादि-त्रि-शरीरेषु कर्तृतां भोक्तृतां गतः ॥२९॥
देश-काल-परिच्छिन्नः स्वल्प-ज्ञान-समन्वितः ।
कामार्तः स्वल्प-शक्तिश्च वर्तते दुःखितोऽस्थिरः ॥३०॥
दशा—अवस्था । जाग्रत्, स्वप्नः, सुषुप्तिः ॥

शुद्धतां मनसि प्राप्ते जीव स्तुर्य-स्थितो भवेत् ।
महामायानुभावेन प्राप्य भागवतीं तनुम् ॥३१॥
भागवतीं तनुम्—अष्टादश-महादोष-विरहितां सर्व-सुलक्षण-युक्तां चिदानन्दमयीं तनुम् ।

तदा तत्र समाधिस्थो विज्ञानं लभते शुभम् ।
द्वैताद्वैत-स्वरूपञ्च क्षेमदं पाश-हानिदम् ॥३२॥—
"शिवोऽहं, खल्विदं सर्वं बोधमय मसंशयम् ।
अहञ्चेदं मयेदं हि ममेदञ्च सुनिश्चितम् ॥" ३३॥

'इदं'-भावं ततस्त्यक्त्वा 'शिवोऽहं'-ज्ञान-तत्परः ।
निष्प्रपञ्चो भवेद् योगी ब्रह्म-योग-परायणः ॥३४॥

ततो योग-प्रभावेण कृत्वा शुद्धतरं मनः ।
परमानन्द-सम्पन्न स्तुर्यातीतो भवेदरम् ॥३५॥

'अहमस्मी'ति भावे स शुद्धेऽद्वैते चिदात्मके ।
अवस्थितो भवत्येव प्रसन्नधी रनाकुलः ॥३६॥

ततोऽपि निर्मलो भूत्वा निर्मलादपि निर्मलः ।
सुप्रशान्तो महामौनो चित्-स्वरूप स्तदा भवेत् ॥३७॥

ततः स जित्वरो योगी योगान्तगो निरामयः ।
सुख-रूपः सदा-पूर्णो राजते परमः-शिवः ॥३८॥

जित्वरः—जेता ।

धन्यो धन्यः सदा धन्यो जीवन्मुक्तो मुनीश्वरः ।
धन्यो धन्यो महामान्यः स्वरूपावस्थितः परः ॥३९॥

जीवन्मुक्तः—जीवन्नेव मुक्तः । जीवत्येवात्म-ज्ञानेन बन्ध-रहितः ॥ "जीवन्मुक्तो नाम स्व-स्वरूपाखण्ड-ब्रह्म-ज्ञानेन तद-ज्ञानबाध-द्वारा स्व-स्वरूपाखण्ड-ब्रह्मणि साक्षात्कृते अज्ञान-तत्-कार्य-सञ्चितकर्म-संशय-विपर्ययादीनामपि बाधितत्वाद् अखिल-बन्ध-रहितो ब्रह्म-निष्ठः ॥"

सदा तस्य गुरु र्धन्यो धन्यं तस्य कुलं सदा ।
धन्या वसुन्धरा देवी तत्-पादाब्ज-पवित्रिता ॥४०॥

---

## दशमोल्लासः ।

निष्कलस्याद्वितीयस्य पूर्णस्य चिन्मयात्मनः ।
जीवन्मुक्तस्य नास्त्येव जीवत्वं बन्धनं भयम् ॥१॥

तस्य देह-विहीनस्य नास्ति दार-धनादिकम् ।
न तस्य सर्व-शून्यस्य कार्यं किञ्चिदपि ध्रुवम् ॥२॥

द्वेष्यं नास्ति प्रियं नास्ति नास्ति पुण्यं न पातकम् ।
जन्म मृत्यु जरा नास्ति नास्ति तस्य शुभाशुभम् ॥३॥

न तस्य ब्रह्मणो मोहः शौच-माङ्गल्य-नाशनः ।
नैव तस्य सुतृप्तस्य चिन्ता-दुःख-महाऽऽमयः ॥४॥
आमयः—रोगः ।

नैव तस्य परिच्छेदो वागुरा-बद्ध-जीवनम् ।
सर्वदा सच्चिदानन्दो राजते स महा-हरिः ॥५॥
परिच्छेदः—सीमा । अवधिः ।
वागुरा—मृग-बन्धनार्थ-जाल-विशेषः ।

ब्रह्म-भूतस्य तस्यैव नियमै र्न प्रयोजनम् ।
ब्रह्म-रूपस्य तस्यैव विश्वै र्नास्ति प्रयोजनम् ॥६॥

गति र्न दृश्यते यद्वत् समुद्रे जल-चारिणाम् ।
ज्ञायते न गति स्तद्व ज्जीवन्मुक्तस्य योगिनः ॥७॥

नाना रूपेण वेशेन नाना भावेन सर्वदा ।
जीवन्मुक्तो महातेजा विचरत्येव भूतले ॥८॥

आश्रमाणां यथा भिक्षु ज्योतिषां भास्करो यथा ।
तथा श्रेष्ठो मनुष्याणां जीवन्मुक्तो नरोत्तमः ॥९॥

कदापि स जडो भूत्वा सुनिश्चलो विराजते ।
कदाचिद् वा चरत्येव नाना-कर्म-परायणः ॥१०॥

भवन्ति तस्य कर्माणि लोक-कल्याण-हेतवे ।
किञ्चनापि स योगी नो कुरुते स्वार्थ-काङ्क्षया ॥११॥

यथा स्पर्श-मणिं स्पृष्ट्वा लौहो भवति काञ्चनम् ।
निर्दोषः स भवत्येव प्राप्य निर्दोष मीश्वरम् ॥१२॥

दोष-हीने सदा-शान्ते निष्कामे ब्रह्म-रूपके ।
स्वार्थ-हीने समे मुक्ते कुकर्म नैव सम्भवेत् ॥१३॥

दिशि यस्या मुदेत्यर्कः सा पूर्वाशा, न संशयः ।
सत्-कर्म तत्र सन्देहो जीवन्मुक्तेन यत् कृतम् ॥१४॥

पूर्वाशा—पूर्व-दिक् ।

सर्व-बन्धन-पारे स स्व-स्वरूपे सदा-स्थितः ।
ज्ञान-नेत्र-युतो नित्यं सदैव प्रकृतेः परः ॥१५॥

कृत्वाऽपि सर्व-कर्माणि कर्मभि र्नैव बध्यते।
तण्डुल स्तुष-हीनश्च कदापि नाङ्कुरायते ॥१६॥

कदापि कुरुते कर्म जानन्नपि स मूढवत्।
अन्धवद् वा चरत्येव पश्यन्नपि कदाचन ॥१७॥

देह-बुद्धि-युता लोका दृष्ट्वैव बाह्य-लक्षणम्।
तस्य भावं सुगम्भीरं बुध्यन्ते न कदाचन ॥१८॥

दुर्विज्ञेय-स्वरूपः स दुर्विज्ञेय-गतिः सदा।
मोदते स सदा लब्ध्वा सर्व-ज्ञानोत्तमोत्तमम् ॥१९॥

ब्रह्म-भावः सदा तस्य प्रयत्नेन विना स्वतः।
जीवन्मुक्तः स योगीन्द्रः सेवनीयः सदा नरैः ॥२०॥

स एव त्रिगुणातीत श्चाक्षरः पुरुषो महान्।
मायातीतो महासत्त्वो ब्रह्म-भावे सुनिश्चलः ॥२१॥

मायाधीशः स वै सत्यं सर्व-पूर्णत्व-मण्डितः।
महाशक्ति-प्रभावेण सदा गुप्तो यथेश्वरः ॥२२॥

कदापि भिन्नता नास्ति जीवन्मुक्ते परेश्वरे।
जीवन्मुक्तो महायोगी ब्रह्मैव नात्र संशयः ॥२३॥

जलोत्पन्ना यथा वीचिः पुन र्जले विलीयते।
तस्मात् प्रजायते विश्वं तथा तस्मिन् विलीयते ॥२४॥

सर्व-देह-विहीनः स चराचर-विवर्जितः ।
सर्वोपाधि-विहीनः स द्वैताद्वैत-विवर्जितः ॥२५॥

सर्व-विश्व-विहीनः स सर्व-विश्व-स्वरूपकः ।
स एव चन्द्रमाः सूर्यः पर्वताः सागरा द्रुमाः ॥२६॥

दानवा मानवा देवा स्तच्छरीर-विहारिणः ।
ईश्वरः सर्व-विश्वानां धारयेत् स जगत्त्रयम् ॥२७॥

प्रलये स स्वयञ्ज्योति रादिदेवः परात्परः ।
आत्म-तृप्तो महानन्दः स्वात्मन्येव विराजते ॥२८॥

स एव सर्वथा मुक्तो भुवनैक-गुरुः परः ।
स एव परमं ब्रह्म चिदानन्दो महाशिवः ॥२९॥

---

## एकादशोल्लासः ।

जीवन्मुक्ति-पद-प्राप्त्यै प्रतियत्नं सदा कुरु ।
दुःखं दृष्ट्वा न वेपस्व बाधा माभीलकं व्यथाम् ॥१॥

प्रतियत्नः—उद्योगः । Preparation.
आभीलकम्—दैहिकं दुःखम् ॥ व्यथाम्—मानसिकं दुःखम् ।

प्रियेण प्रेम-पूर्णेन कारुण्य-सागरेण च ।
दुःख-वेशः सुहृद् दूतः प्रेरितः करुणा-वशात् ॥२॥

शिवः क्षेमङ्करश्चेति विश्वस्य सुदृढं ध्रुवम् ।
तत्-प्रेरित ममानस्यं प्रीणीष्व भावमाश्रितः ॥३॥
अमानस्यम्—दुःखम् । पीडा । व्यथा ।

अकिञ्चन-धनं ब्रह्म चानुगृह्णाति यं नरम् ।
तच्छुद्ध्यर्थं सुधा-धारां दुःख-रूपेण वर्षति ॥४॥

संनियम्य सदा कामान् शोधयित्वा भ्रमान् सदा ।
दुःख-मित्रं भयात् पापात् त्रायते दुर्वलं नरम् ॥५॥

स्मरन्त्येव भये दुःखे सर्वे श्रीमधुसूदनम् ।
दुःखं विकासयत्येव बलं वीर्यं गुहाहितम् ॥६॥

मधु-सूदनः—[मधु+सूद+अन] "मधु क्लीवञ्च माध्वीके कृतकर्मशुभाशुभे । भक्तानां कर्मणाञ्चैव सूदनं मधु-सूदनः ॥ परिणामाशुभं कर्म भ्रान्तानां मधुरं मधु । करोति सूदनं यो हि स एव मधुसूदनः ॥" इति ब्रह्म-वैवर्ते ॥ महाविपत्तौ संसारे यः स्मरेन्मधुसूदनम् । विपत्तौ तस्य सम्पत्ति र्भवेदित्याह शङ्करः ॥ तत्रैव प्रकृतिखण्डे ॥

दुःखं वर्धयते ज्ञानं वैराग्यञ्च तितिक्षणम् ।
दुःखात् सञ्जायते योगी दुःखादेव विनम्रता ॥७॥

दुःखेन हन्यते दुःखं दुःखात् सौख्यं प्रजायते।
दुःखं ददाति शान्तिञ्च निर्वाण-परमां शुभाम् ॥८॥

स्वल्पं परिमितं दुःखं योगार्थं भोग्यमेव यत्।
आद्रियस्व सदा तद्धि भूमानन्द-प्रदायकम् ॥९॥

नाना-रूपं महद्दुःखं नाना-वेशं सुपावनम्।
आवाहय शिवापत्यं श्रद्धान्वितः शिवान्वितम् ॥१०॥

आवाहय—आह्वय॥ शिवापत्यम्—शिवस्य अपत्यम्। शिवाज्जातम् (दुःखम्)।

'कृतार्थोऽनुगृहीतोऽस्मि' चेति सुस्वागतं वद।
सन्तोषेण पवित्रेण पाद्यं तस्मै प्रकल्पय ॥११॥

ब्राह्मी-भावासने शुद्धे सर्वदैवोपवेशय।
यन्त्र-पुष्पैस्तितिक्षाद्यै र्नक्तन्दिवं प्रपूजय ॥१२॥

सर्वेषु शङ्करं ज्ञात्वा कारुण्य-द्रव-चेतसम्।
पश्य दुःखेऽपि कृष्णस्य प्रसन्नं मुख-पङ्कजम् ॥१३॥

सेवमानः सदात्मानं विश्वमूर्तिमनामयम्।
आमानस्येऽपि पश्य त्वं चिन्मयानन्द-रूपिणम् ॥१४॥

आमानस्यम्—दुःखम्। पीडा।

तृष्णार्तो धावमान स्त्वं सुधा-प्रस्रवणं प्रति ।
कथं लज्ञयसे रेणुं पदलग्न मणूपमम् ॥१५॥

अणूपमम्—अणु-वत् ।

यदि दुःख-भयाद् भीरो त्यजसि त्वेमदं तपः ।
कदा यास्यसि दुःखान्तं कथं दुःखं तरिष्यसि ॥१६॥

संप्राप यद् यदाभीलं हरिदासो हरि-प्रियः ।
तेन सार्धं समिच्चस्व तवाभीलं नगण्यकम् ॥१७॥

समिच्चस्व—तोलय । Compare.

अतीतानागतं कष्टं युत्वा चाद्यतनैः सह ।
मन्यसे तां त्वदीयार्तिं दारुणा मतिदारुणाम् ॥१८॥

अद्यतनः—काल-विशेषः । स च दुर्गसिंहादिमते पूर्व-रात्रि-शेष-दण्डचतुष्टयावधिक पर-रात्रि-सार्धयामपर्यन्तः ॥ पूर्व-रात्रि-शेषार्धावधि पर-रात्रिप्रथमार्धपर्यन्तो वा ॥ भर्तृहरि-क्रमदीश्वर-मते पूर्वरात्रिशेषप्रहरावधि पर-रात्रि-प्रथम-प्रहर-पर्यन्तः ॥

त्यज्यतां त्यज्यतां शीघ्रं मोहोऽयं शक्ति-हारकः ।
वर्तमान-व्यथां सोढुं समर्थ स्त्वं सुनिश्चितम् ॥१९॥

सहसे सर्वदैव त्वं, म्रियसे न कदाचन ।
'हा हतोऽस्मि' कथं कृत्वा कुरुषे बल-लाघवम् ॥२०॥

सर्वाणि यानि दुःखानि प्रदातुं वसुधा क्षमा ।
तृणाय तानि मन्यस्व ह्यमृते बद्ध-दर्शनः ॥२१॥

शिवोपनेत्र-योगेन द्रक्ष्यसि त्वं जगद् यदा ।
दुःखं दुःखाकृतिं हित्वा शिव-रूपं भविष्यति ॥२२॥

यदि देहादिकं सर्वं निवेदयसि विष्णवे ।
सम्प्राप्तेऽपि महादुःखे रोष स्त्वयि न शोभते ॥२३॥

त्वयाऽपलपितं विश्वं त्वया देह मुपेक्षितम् ।
दुःखात् पुनः कथं भीरो रोरुद्यसे न लज्जसे ॥२४॥

अपलपितम्—अस्वीकृतम् । Denied.

असङ्गोऽसि निराकारो निर्विकारो निरञ्जनः ।
गुणातीतः कथं नु त्वं दुःख-स्पृष्टो भविष्यसि ॥२५॥

दुःख-त्रासं परित्यज्य स्थैर्य-धैर्य-समन्वितः ।
सोढ्वा सर्व-विधं दुःखं नित्यं योगं समाचर ॥२६॥

---

## द्वादशोल्लासः ।

योग-योग्यत्व-सिद्ध्यर्थं सर्वादौ मोक्ष-कामिणा ।
स-यमा नियमा नित्यम् उपसेव्याः प्रयत्नतः ॥१॥

"अहिंसा-सत्यास्तेय-ब्रह्मचर्यापरिग्रहा यमाः ।" "शौच-सन्तोष-तपः-स्वाध्यायेश्वर-प्रणिधानानि नियमाः ॥" इति पातञ्जले ॥ उपसेव्याः—[उप+सेव् (to practise)]

रजस्तमोमयाहारं धातु-साम्य-विनाशनम् ।
बीज-क्षय-करं खाद्यं जह्यात् सर्वं मशेषतः ॥२॥

धातुः—[धा+तुन्] शरीर-धारक-वस्तु । तद् यथा । (१) कफः । (२) वातः । (३) पित्तम् ॥ "शरीर-दूषणाद् दोषा मलिनीकरणान्मलाः । धारणाद् धातव स्ते स्यु र्वात-पित्त-कफास्त्रयः ॥"

धातु-साम्य-विनाशनम्—"कषाय-कटुतिक्ताम्ल-रूक्षाहाराद भोजनात् । चिन्ता-व्यवाय-व्यायाम-भय-शोक-प्रजागरात ॥ उच्चैर्भाषातिभावाच्च कर्म योगातिकर्षणात् । वायुः कुप्यति पर्जन्ये जीर्णान्ने दिन-संक्षये ॥ उष्णाम्ल-लवण-क्षार-कटुकाजीर्ण-भोजनात् । तीक्ष्णातपाग्नि-सन्ताप-मद्य-क्रोध-निषेवणात् ॥ विदाहकाले भुक्तस्य मध्याह्ने जलदागमे । ग्रीष्मकालेऽर्ध रात्रेऽपि पित्तं कुप्यति देहिनः ॥ स्वाद्वम्ललवणस्निग्धगुरुशीतातिभोजनात् ।

नवान्न-पिच्छलानूपमाषाभिस्यन्दि-सेवनात्॥ अव्यवायो दिवा-स्वप्न-शय्याशन-सुखादिभिः। कफः प्रदोषे भुक्ते च वसन्ते च प्रकुप्यति॥ दोषधातुमलाधारो देहिनां देह उच्यते। तेषां समत्वमारोग्यं क्षयवृद्धी विपर्ययः॥" इत्यादि गारुडे॥

बीज-क्षय-करम्—शुक्र-क्षय-करम्। शुक्र-क्षय-कर-द्रव्याणि यथा। (१) सार्षप-तैलम्। (२) पटोल-वास्तूक-काकमाची-पुनर्नवा-शाक-भिन्न-सर्वशाकम्। (३) तावदम्ल-द्रव्यम्। (४) शुष्क-मरिचम्। (५) पिप्पली-शुण्ठी-भिन्न-कटुरसः। (६) अत्यम्बु। (७) बहु-तिक्तकम्। (८) वादामम्। इत्यादीनि॥ ताम्रायः-स्वर्ण-सीसानां पात्रस्थं तोयं शुक्र-वृद्धि-करम्॥ शुक्र-वर्धक-द्रव्याणि। यथा। (१) पानीयम्। (२) विशेषतः हैमन्तिकं जलम्। (३) चन्दनादि-द्रव्यानुलेपनम्। (४) रक्त-शालि-धान्यम्। (५) हैमन्तिक-षष्टिक-धान्यम्। (६) गोधूमः। (७) माषः। (८) कलम्बीशाकम्। (९) काकमाची-शाकम्। (१०) वार्ताकुः। (११) पक्वाम्रम्। (१२) दुग्धान्नम्। (१३) पक्व-तालम्। (१४) पक्व-कदलम्। (१५) चम्पक-कदलम्। (१६) द्राक्षा। (१७) खर्जूरम्। (१८) धात्री। (१९) कुष्माण्ड-मज्जा। (२०) मत्स्यः (विशेषतः रोहित-मत्स्यः, मद्गुर-मत्स्यः, चिङ्गट-मत्स्यः, बृहन्मत्स्यः)। (२१) मांसम्। (२२) हंस-बीजम्। (२३) समस्त-क्षीरम्। (२४) गो-दुग्धम्। (२५) माहिष-दधि। (२६) दधि-सरः। (२७) नवनीतम्। (२८) तावद् घृतम्। (२९) शुष्क-

पिप्पली । (३०) शुण्ठी । (३१) आर्द्रकम् । (३२) सैन्धवम् । (३३) अन्नम् । (३४) मांस-रसः । (३५) घृत-पूरः । (३६) भू-शय्या । (३७) अश्वगन्धा । (३८) शिलाजतु···॥

समये च समाहारी संयतात्मा सदा भवेत् ।
आलस्यं देह-जाड्यञ्च मनोरथं परित्यजेत् ॥३॥

शास्त्र-युक्ति-महाकूपे निपतेन्न कदाचन ।
शास्त्र-युक्ति-महारण्यं योग-विघ्न-करं ध्रुवम् ॥४॥

मतानि सन्त्यसंख्यानि पन्थानो बहव स्तथा ।
आश्रयेत् तं पथं नित्यं य एको गुरु-सम्मतः ॥५॥

मृद्-भस्म-मृच्छणैनैव योगी जातु न लभ्यते ।
मनोयोग-सहायेन ज्ञानं लब्ध्वा सुखी भवेत् ॥६॥

जातु—कदाचित् ।

मन्त्र-योगी लयो योगी राज-योग स्तथाऽपराः ।
सर्वे योगा भवन्त्येव मनोयोगस्य साधकाः ॥७॥

सर्वे योगा मनोयोगे सर्वदैव प्रतिष्ठिताः ।
योगेन सच्चिदानन्दे कुर्यात् संयोजितं मनः ॥८॥

सदानन्दं परित्यज्य प्राणायामादिकं कृतम् ।
निष्फलं निश्चितं सर्वं,—तेन धर्मो न लभ्यते ॥९॥

प्राणायामं जपं होमं स्नानं दानञ्च पूजनम् ।
कीर्तनञ्च सदा कुर्यात् समुद्दिश्य नरायणम् ॥१०॥

नरायणः—नरा अयनमस्य । "नराणामयनं यस्मात् तेन नरायणः स्मृतः ॥" नारायणः ॥

नारायणं समाश्रित्य मोक्ष-मार्ग-परायणः ।
चापल्यानि सदा त्यक्त्वा योगं कुर्यादकातरः ॥११॥

प्रयोजनानुसारेण षट्-कर्माणि समाचरेत् ।
धौत्यादीनि मनुष्याणां देह-शुद्धिं प्रकुर्वते ॥१२॥

षट्-कर्म—"धौति र्वस्ति स्तथा नेति नौलिकी त्राटकस्तथा । कपालभातिश्चैतानि षट्कर्माणि समाचरेत् ॥" घेरण्ड-संहिता ॥

आसनानि विधानेन नियमेन समभ्यसेत् ।
आसनं हरते रोगं, कुरुते सुदृढां तनुम् ॥१३॥

आसनम्—( स्थितौ ) आस्यतेऽनेन—देह-स्थैर्य-साधकः कर-चरणादिबन्धभेदरूपो योगाङ्ग-भेदः । पद्म-स्वस्तिकादि ॥

एकासन-दृढाभ्यासाद् देह-स्थैर्यं प्रजायते ।
देह-स्थैर्यं विना पुंसां मनः-स्थैर्यं न सम्भवेत् ॥१४॥

मुद्रां समभ्यसेन्नित्यं स्थैर्याय च विशेषतः ।
नाडीनां शोधनं कुर्याद् योग-तत्पर-मानसः ॥१५॥

मुद्रा—[मुद (हर्षे)+रक्] "महामुद्रा नभोमुद्रा उड्डीयानं

जालन्धरम्। मूलबन्धं महाबन्धं महावेधश्च खेचरीं ॥ विपरीतकरी योनि र्वज्रोली शक्तिचालनी। ताडागी माण्डवी मुद्रा शाम्भवी पञ्चधारणा ॥ अश्विनी पाशिनी काकी मातङ्गी च भुजङ्गिनी। पञ्चविंशति मुद्राणि सिद्धिदानीह योगिनाम् ॥" "सुप्ता गुरु-प्रसादेन यदा जागर्ति कुण्डली। तदा सर्वाणि पद्मानि भिद्यन्ते ग्रन्थयोपि च। तस्मात् सर्व-प्रयत्नेन प्रबोधयितुमीश्वरीम्। ब्रह्म-रन्ध्र-मुखे सुप्तां मुद्राभ्यासं समाचरेत् ॥" इति ग्रहयामले ॥

नाडी—[ नड्+णिच् (=नाडी—बन्धने)+इ ( कर्तरि ) ] शिरा। धमनिः। [कायनाडी त्रिविधा। एका—वायु-वहा। अपरा—मूत्र-विडस्थिरस-वाहिनी। अपरा—आहार-वाहिनी ॥ सार्धत्रिकोट्यो नाड्यो हि स्थूलाः सूक्ष्माश्च देहिनाम्। नाभि-कन्दनिबद्धास्तास्तिर्यगूर्ध्व मधः स्थिताः ॥ द्विसप्तति सहस्रन्तु तासां स्थूलाः प्रकीर्तिताः देहे धमन्यो धन्यास्ताः पञ्चेन्द्रियगुणा-वहाः ॥ तासाञ्च सूक्ष्म-शुषिराणि शतानि सप्त स्यु स्तानि यै रसकृदन्नरसं वहद्भिः। आप्याय्यते वपुरिदं हि नृणाममीषामम्भः स्रवद्भिरिव सिन्धुशतैः समुद्रः ॥] "अवसव्येन रेच्येत सव्येनैव तु पूरयेत्। नाडीनां शोधनं ह्येतन्मोक्षमार्ग-पथस्य च ॥" "नादा-भिव्यक्ति रारोग्यं जायते नाडि-शोधनात्।" इति शाण्डिल्योप-निषत् ॥ तत्परम्—आसक्तम्।

प्राणायाम मतः कुर्यात् सावधानः शनैः शनैः।
अध्यारोहे च्छनैरेव योग-शैलाधिरोहिणीम् ॥१६॥

अधिरोहिणी—अधिरुह्यतेऽनया । काष्ठ-वंशादि-निर्मितम् उच्च-स्थानारोहण-साधनं सोपान-वृन्दम् ॥

प्राणायामो रुजं हन्ति हन्ति जाड्यादिकं तमम् ।
सर्वेन्द्रिय-कृतान् दोषान् विनिहन्ति सुनिश्चितम् ॥१७॥
प्रददाति मनः-स्थैर्यं ध्यानञ्च देह-लाघवम् ।
आरभेत वसन्ते वा शरत्-काले यथा-यथम् ॥१८॥

अनुकूले शुभे रम्ये कीटादि-परिवर्जिते ।
भवने वेदिकां कुर्यात् स्थिरां दृढां सुशोभनाम् ॥१९॥

विस्तारे वेदिका पुण्या यावती परिमाणतः ।
तदर्धन्तु प्रकर्तव्यम् उच्चतायां प्रयत्नतः ॥२०॥

तथैव वेदिकां कृत्वा नात्युच्चां नाति-नीचिकाम् ।
गोमयादि-प्रलिप्ता न्तां कुर्याद् विशुद्धि-हेतवे ॥२१॥

कम्बलाद्यासने तत्र चोपविश्य सुकोमले ।
पद्मं वा स्वस्तिकं किंवा सिद्धासनं समाचरेत् ॥२२॥

सम-काय-शिरो-ग्रीवो भूत्वा प्रसन्न-मानसः ।
प्राणायामं ततः कुर्यात् प्राङ्मुखो व्याप्युदङ्मुखः ॥२३॥

वाम-नासिकया वायुं पूरयेच्च शनैः शनैः ।
प्रणवस्य चतुर्वार-जापेन सह साधकः ॥२४॥

नासा-पुटौ ततो धृत्वा धारयेत् पवनं स्थिरम् ।
वार-षोडश-जापेन कुम्भकेन समाहितः ॥२५॥

कुम्भकः—कुम्भ इव कायति प्रकाशते, निश्चलत्वात् । वायु-स्तम्भनम् ।

रेचयेन्मारुतं प्राज्ञ स्ततो दक्षिण-नासया ।
अष्ट-वार-जपेनैव शनैः शनै रनाकुलः ॥२६॥

अनाकुलः—स्थिरः । अव्याकुलः । एकाग्रः ।

एवमेव चतुर्जापैः पूरयेद् दक्ष-नासया ।
उभाभ्यां कुम्भयेद् विद्वान् यथा पूर्वं कृतं तथा ॥२७॥

तदन्ते रेचयेद् वायुम् अष्टभि र्वाम-नासया ।
अनुलोम-विलोमेन भृशमेवं समभ्यसेत् ॥२८॥

अभ्यसेत् सर्वदा विज्ञो विनिर्दिशेद् यथा गुरुः ।
परिवर्त्य यथा-कालं योग-क्रियां यथोचितम् ॥२९॥

ध्यानं कुर्यात् प्रयत्नेन सदैव स्थिर-मानसः ।
भ्रू-मध्ये हृदये किंवा सहस्रार-सरोरुहे ॥३०॥

गणेशं वा दिनेशं वा वह्निं विष्णुं शिवं शिवाम् ।
इष्टं प्रियं सदा ध्यायेत् तृष्णा-क्रोध-पराङ्मुखः ॥३१॥

प्रणवं वा सदा ध्यायेत् संसार-दुःख-भेषजम् ।
किंवा ध्यायेत् सदाऽऽत्मानं प्रदीप-कलिका-निभम् ॥३२॥

अथवा सर्वदा ध्यायेत् परं बिन्दुं शिवात्मकम् ।
किंवा तेजोमयं ब्रह्म येनेदं सर्व माद्वतम् ॥२३॥

ध्यानोपाया ह्यसंख्येयाः, सर्वदा सिद्धि-काङ्क्षिणा ।
कर्तव्यं यत्नतो ध्यानं यथा श्रीगुरु-भाषितम् ॥२४॥

भवति ध्यानतो योगी जित-दोषो जितामयः ।
ध्याना न्नश्यन्ति पापानि प्रजायन्ते समाधयः ॥२५॥

ध्यानं ददाति विज्ञानं ज्ञानं भक्तिं शुभां मतिम् ।
श्रद्धां वीर्यं महानन्दं शक्तिं सिद्धिं स्मृतिं धृतिम् ॥२६॥

ध्यानेन दृश्यते पुंसा सूक्ष्मात् सूक्ष्म मतीन्द्रियम् ।
ध्यानेन लभ्यते सत्यं देवानां पुण्य-दर्शनम् ॥२७॥

देव-ध्याना न्महायोगी देवत्वाय प्रकल्पते ।
ब्रह्म-ध्यानेन योगीन्द्रो गच्छति ब्रह्मणः पदम् ॥२८॥

यद् यद् ध्यायति वेगेन तीव्रेण कोऽपि मानवः ।
तत् तदेव भवेत् तूर्णं स ध्रुवं ध्यान-योगतः ॥२९॥

विषयान् मानसे ध्यायन् याति ना यम-सादनम् ।
विश्वेशं मानवो ध्यायन् लभते गति मुत्तमाम् ॥४०॥

अतएव समाहृत्य सर्वेन्द्रियाणि सर्वतः ।
स्थापयेद् यत्नत स्तानि ध्येये विष्णौ पुनः पुनः ॥४१॥

प्रत्याहार-बलेनैवं सदैवाभ्यास-योगतः ।
भवत्येव स्थिरं चित्तं ध्येये नित्ये तपस्विनः ॥४२॥
प्रत्याहारः—स्व-स्व-विषयेभ्य इन्द्रियाकर्षणम् ॥

इन्द्रियाणि स्थिरीकुर्या न्मानसेन निरन्तरम् ।
मानसं सुस्थिरं कुर्याद् बुद्धि-शक्ति-सहायतः ॥४३॥
अभ्यासेन स्थिरीकृत्य बुद्धिं ध्येये सनातने ।
लभेत योग-शुद्धात्मा समाधिं भव-नाशनम् ॥४४॥

परम स्तु समाधिः स पूर्णं ज्ञानं ददाति यः ।
येन ज्ञानेन युक्तेन निर्वाण मधिगम्यते ॥४५॥

'जीवो नाम न वै कश्चि ज्जातु कुत्रापि वर्तते ।
एकमेव परं ब्रह्म नित्यमेव विराजते ॥४६॥
खल्विदं सकलं ब्रह्म'—ज्ञानञ्चेदं परं मतम् ।
इदं लब्ध्वा महायोगी संसारे न पुन र्विशेत् ॥४७॥

पूर्ण-विज्ञान-लाभाय परमेण समाधिना ।
गुरु-साहाय्य-संयुक्तो मोक्ष-योगं समाचरेत् ॥४८॥

दुःखदो हि भवेद् योगी गुरु-साहाय्य-वर्जितः ।
अज्ञात-योग-मार्गेषु गुरु रेको हि बान्धवः ॥४९॥

नोच्चरेत गुरो र्वाक्यं, तस्मिन् सुमङ्गलालये ।
धुरं सर्वां विनिक्षिप्य भवे न्निश्चिन्त-मानसः ॥५०॥

उल्लंघेत—लङ्घेत् । Transgress. धुरम्—भारम् ।

साधको न विजानाति मोहान्धः स्वं प्रयोजनम् ।
ज्ञायते गुरुणा सर्वं गुर्वधीनो भवेदतः ॥५१॥

विदधाति तु यां शास्तिं गुरुर्देवो विचक्षणः ।
तां मन्येत प्रसादञ्च सर्व-पापापनोदनम् ॥५२॥
प्रसादः—प्रसन्नता । अनुग्रहः । नैर्मल्यम् ।

गुरु-सन्तोष-हीनानां तथा वै बहु-सङ्गिनाम् ।
श्रद्धा-भक्ति-विहीनानां योग-सिद्धिर्भवेन्न हि ॥५३॥

आत्मानं मन्यते दम्भाद् वरिष्ठं सर्व-योगिनाम् ।
अभिमानवत स्तस्य योग-सिद्धिर्भवेन्न हि ॥२५॥
वरिष्ठम्—श्रेष्टम् । प्रधानतमम् ।

ज्ञानिवद् ये भ्रमन्त्येव भ्रमयन्ति जनानपि ।
वञ्चकानां ध्रुवं तेषां योग-सिद्धिर्भवेन्न हि ॥५५॥

यस्य प्रवर्तते चेष्टा कुटिला लोक-रञ्जने ।
तस्य त्याग-विहीनस्य योग-सिद्धिर्भवेन्न हि ॥५६॥

धर्मात् सत्याद् दमाद् यस्य भवति स्खलितं मनः ।
असंयमवत स्तस्य योग-सिद्धिर्भवेन्न हि ॥५७॥

सिद्धिं कांचन संप्राप्य तां प्रदर्शयितुं सदा ।
चेष्टते यो ध्रुवं तस्य योग-सिद्धि र्भवेन्न हि ॥५८॥

अन्विष्यति सुखं भोगं सिद्धिं शक्तिं यशः सदा ।
तस्य प्रेम-विहीनस्य योग-सिद्धि र्भवेन्न हि ॥५९॥
अन्विष्यति—Seeks after.

नान्यत्र सर्व-सन्त्यागाद् योगः केनापि लभ्यते ।
कु-सङ्गं वर्जयेदादौ सर्व-त्याग-सुसिद्धये ॥६०॥

मित्रता नैव कर्तव्या मूढेन पापिना सह ।
खल-सङ्गो न कर्तव्यो दुष्टञ्च दूरत स्त्यजेत् ॥६१॥
["मनस्येकं वचस्येकं कर्मण्येकं महात्मनाम् । मनस्यन्यद् वचस्यन्यत् कर्मण्यन्यद् दुरात्मनाम् ।" इति पाद्मे क्रियायोगसारे ॥]
बुद्धिश्च हीयते पुंसां नीचैः सह समागमात् । इति शान्तिपर्वणि ॥

धर्म-वैतंसिको यस्तु पापेनार्जति सम्पदम् ।
शाठ्येन गूहते पापं तं दुष्टं दूरत स्त्यजेत् ॥६२॥
धर्म-वैतंसिकः—[मृग-पक्ष्यादिबन्धनोपायो वीतंसः । तेन चरतीति वैतंसिकः ।] पापकर्मणा धनमासाद्य आत्मनो धार्मिकत्व-ख्यापनाय दान-कर्ता ।

प्रच्छन्नं कुरुते पापं धर्म-कर्म-विवर्जितः ।
दुश्चिन्तानल-दग्धो यः पापिनं तं सदा त्यजेत् ॥६३॥

स्वं, पौष्यं, धर्म-कृत्यञ्च पीडयित्वा सदैव यः ।
सञ्चिनोति धनं लोभात् तं कदर्यं सदा त्यजेत् ॥६४॥

कदर्यं किम्पचं क्षुद्रं निर्दयं व्यय-कातरम् ।
क्षुद्र-चित्तं त्यजेन्मन्दं स्वार्थान्धं मानव-ब्रुवम् ॥६५॥
किम्पचः—कृपणः ॥ क्षुद्रः—कृपणः । अधमः, क्रूरः । [अल्पः ।]
मन्दः—मूर्खः । मद-रतः । खलः । कृपणः ।

अगम्यागामिनं मत्तं कामुकं स्त्री-परायणम् ।
स्त्री-जितं मद्यपं क्रुद्धं नराभासं सदा त्यजेत् ॥६६॥
अगम्या—अमैथुनार्हा नारी । "स्व-स्त्री गम्या च सर्वेषा-मिति वेद-निरूपिता । अगम्या च तदन्या या इति वेद-विदो विदुः ॥" इति ब्रह्मवैवर्ते ॥

पठित्वा बहु-शास्त्राणि भवत्येव कु-तार्किकः ।
धर्मं न कुरुते किन्तु 'शिवोऽहं' भाषते भृशम् ॥६७॥
वञ्चकः कुरुते नित्यं स्वार्थाय पर-पीडनम् ।
देहासक्तं धनासक्तं तं दुष्टं दूरत स्त्यजेत् ॥६८॥
कु-तार्किकः—ॐ वादी नावलम्ब्यः ॥ ॐ बाहुल्यावकाश-वत्त्वादनियतत्वात् ॥ नाः सूः ॥

कु-कार्ये निरतं धूर्तं हिंसकं बक-धार्मिकम् ।
निन्दकं पाप-वृत्तिस्थम् असत्-प्रतिग्रहे रतम् ॥६९॥

नास्तिकं दुर्जनं लुब्धं रक्षो-यक्षादि-सेविनम् ।
कृतघ्नं कोपनं नित्यं त्यजेन्मिथ्या-परायणम् ॥७०॥

बक-धार्मिकः—"पाषण्डिनो विकर्मस्थान् बैडाल-व्रतिकान् शठान् । हैतुकान् बक-वृत्तींश्च वाङ्मात्रेणापि नार्चयेत् ॥" इति विष्णुपुराणे ॥ "अधोदृष्टि र्नैकृतिकः ( =शठः, नीचः ) स्वार्थ-साधन-तत्परः । शठो मिथ्या-विनीतश्च बक-व्रत-धरो द्विजः ॥" इति दान-सागरे मनुः ॥

असत्-प्रतिग्रहः—असतः निसिद्धस्य द्रव्यस्य ( तिलादेः ) असद्भ्यो वा नीचजनेभ्यः प्रतिग्रहः । निषिद्ध-द्रव्य-प्रतिग्रहः । नीचजनेभ्यः प्रतिग्रहश्च ॥

नास्तिकः—नास्ति परलोकस्तत्-साधनमदृष्टं तत् साक्षीश्वरो वा इति मतिरस्य ॥ यक्षादि-सेविनम्—"यक्षाणां यक्षिणीनाञ्च पैशाचीनाञ्च साधनम् । भूत-वेताल-गान्धर्वं मारणोच्चाटनानि च । अधोगमनमेतेषां साधने ऐहिकं हितम् ॥" इति वाराही-तन्त्रम् ॥

बहु-वादी वृथा-वादी वृथा-रेता दुरोदरः ।
ऋणोपजीविनश्चैव शुक्र-विक्रयिण स्तथा ॥७१॥
परान्न-लोलुपा नित्यं सदा-सन्दिग्ध-मानसाः ।
सर्वथैव परित्याज्याः संसारासक्त-मानवाः ॥७२॥

दुरोदरः—द्यूतकृत् ॥ शुक्र-विक्रयिणः—सन्तान-विक्रयिणः ॥

संसार-गहने घोरे हिंस्र-जन्तु-समाकुले ।
आत्मानं सततं रक्षेत् पापिनः पाप-कर्मिणः ॥७३॥

सर्वदैव प्रयत्नेन पुण्यापुण्यं विवेचयेत् ।
सावधानो विचारेण कार्यं कर्म समाचरेत् ॥७४॥

विवेक-लोचनं लब्ध्वा चरेद् विश्वं चराचरम् ।
विदधीत क्रियां नैव सहसा तु कदाचन ॥७५॥

काम-क्रोध-वतां नित्यम् अन्धं विवेक-लोचनम् ।
यावदेतौ शरीरे स्त स्तावत् सौख्य मसम्भवम् ॥७६॥

एताभ्यामेव दह्यन्ते पशु-पक्षि-नरादयः ।
कामी-क्रोधी, न सन्देहो, दहतश्च परानपि ॥७७॥

अतन्द्रितः सदा हन्यात् काम-क्रोधौ महाद्विषौ ।
पाप-मूलौ सदैवैतौ संसार-बन्ध-कारकौ ॥७८॥

एतौ त्यक्त्वा भवेत् शान्तः सुखी च सुस्थ-मानसः ।
एतौ त्यक्त्वा भवेत् शुद्धो निर्मलो गलित-स्पृहः ॥७९॥

हृत्-पद्मं निर्मलं स्वच्छं शङ्करस्य प्रियासनम् ।
चित्त-संशोधनार्थाय कुर्याद् योग मनारतम् ॥८०॥

---

## त्रयोदशोल्लासः ।

विदुषां प्रणति र्भूषा, शक्तानां भूषणं क्षमा ।
गिरां भूषा प्रसादो हि, नृणां भूषा पवित्रता ॥१॥

प्रसादः—ग्राम्यशब्दभिन्न-व्यक्तार्थ पद-वत्त्वम् ॥ नैर्मल्यम् ॥ "व्यक्तार्थ पदमग्राम्यं प्रसादः परिकीर्तितः ।" इति काव्य-चन्द्रिका ॥

सत्त्वं गुणं सुसंसेव्य भवेत् शुद्धो जितेन्द्रियः ।
सत्त्वं गुणं सुसंसेव्य गुणातीतो भवेन्नरः ॥२॥

सदा सत्त्व-समायुक्तः कार्यं कुर्वन् जित-श्रमः ।
आशुतोष-प्रसादेन लभेत चित्त-शुद्धताम् ॥३॥

भवेत् तदैव संशुद्ध श्चित्त-रूपी सरोवरः ।
स्वप्नेऽपि भासते नैव यदा रजस्तमो-मलः ॥४॥

भवेत् तदैव संशुद्ध श्चित्त-रूपी शिवालयः ।
अविच्छिन्नं भवेत् शम्भु-स्मरणं मुदया यदा ॥५॥

चित्ते निर्मलतां प्राप्ते तत्र देवालये शुभे ।
ज्ञान-दीपं जगन्नाथो ज्वालयत्येव भास्वरम् ॥६॥

ज्ञान-दीप-सहायेन यदा दृष्टं चराचरम् ।
तदा विनश्वरं सर्वं मायामयं विभासते ॥७॥
विषयाकाङ्क्षणं सर्वं पलायते समन्ततः ।
तदैव जायते चित्ते विचारोऽयं सुपावनः ॥८॥—

"केन बन्धेन बद्धोऽहं कुतो बन्धः समागतः ।
केनोपायेन मुच्येऽहं संसार-कर्म-बन्धनात् ॥९॥
किं कार्यं किमकार्यं वा, तत्त्वं को मे वदिष्यति ।
संसार-सागरे घोरे त्राता को मे भविष्यति ॥" १०॥

तदोत्कण्ठ-मना नित्यं निःसङ्गो रहसि स्थितः ।
एवं चिन्तयति प्राज्ञो धर्म-शास्त्रार्थ-कोविदः ॥११॥—

"अद्वितीयो महेशानो विश्वरूपो विराजते ।
विश्वात्मा विश्व-कर्ता स सदेवात्मनि मोदते ॥१२॥

नयनानि समस्तानि कृत्वा तैश्च स पश्यति ।
चरणानि समस्तानि कृत्वा तैश्च स गच्छति ॥१३॥
मानसानि समस्तानि कृत्वा तैश्च स मन्यते ।
शरीराणि समस्तानि कृत्वा तैश्च स दीव्यति ॥१४॥
दीव्यति—(दिव्—द्युतौ, क्रीडायाम्) Shines and plays.

एवं सति कथं कर्ता कथं भोक्ता भवाम्यहम् ।
कथं गर्वो महा-बन्धो मामेव संहनिष्यति ॥१५॥

कारके जीविते शम्भौ किं कर्तव्यं मयाऽधुना ।
सर्वदैव परेशस्य स्मरणं कीर्तनं विना ॥१६॥

दधाति शासनं यस्य सन्ततं भुवन-त्रयम् ।
कथं सिंहासने तस्य स्थापयिष्येऽभिमानकम् ॥१७॥

वर्जयित्वा नदी-कान्तं नान्यं गच्छति जाह्नवी ।
वर्जयित्वा सदात्मानं कुत्र जीवो गमिष्यति ॥१८॥

नदी-कान्तम्—समुद्रम् ॥ जाह्नवी—गङ्गा । ["जानु-द्वारा पुरा दत्ता जह्नुः संपीय कोपतः । तस्य कन्या स्वरूपा च जाह्नवी तेन कीर्तिता ॥" इति ब्रह्मवैवर्ते ॥]

शिव-स्मृतिः शिवं राति विषयो राति बन्धनम् ।
कथं शिवं परित्यज्य संसेवे विषयानहम् ॥१९॥

सङ्ग-त्यागं विना ब्रह्म लभ्यते न कदाचन ।
विषयासङ्गितां कुर्वन् गमिष्यामि कथं शिवम् ॥२०॥

एकमेव पराणुञ्च समुपासे यदा मुदा ।
लक्षं व्यात्ताननं भूत्वा ग्रसते मां विमार्गगम् ॥२१॥

सन्तोषो विषये यावत् तावन्न ब्रह्म-दर्शनम् ।
भूमानन्दं परित्यज्य स्वल्पानन्दे कथं रमे ॥२२॥

संसार-सागरे यस्य कृपाऽवलम्बनं मम ।
कृपाऽमृतं शुभं यस्य मया पीतं पुनः पुनः ॥२३॥

विना यस्य कृपां नैव जीवानां मोक्ष-सम्भवः ।
कथं तं शङ्करं त्यक्त्वा भजेऽहं विषयं विषम् ॥२४॥

प्रत्येकस्य क्रिया-चिन्ते विश्वं रञ्जयतोऽखिलम् ।
परमार्थं परित्यज्य कथं स्वार्थं भजाम्यहम् ॥२५॥

चिन्ता या मृत्यु-कालीना भविष्यं रच्यते तया ।
अस्थिरं जीवनं प्राप्य विस्मरामि कथं शिवम् ॥२६॥

चिदानन्द-स्वरूपोऽहं, नाहं देहः कदाचन ।
कथं देह महं मत्वा यास्यामि काल-मन्दिरम् ॥२७॥

असङ्गोऽहं निराकारो निर्विकारो निरञ्जनः ।
क एव मम सम्बन्धी मायीय-जगता सह ॥२८॥

ब्रह्म सत्यं जगन्मिथ्या ब्रह्मैवाहं, न संशयः ।
सत्यं नित्यं परित्यज्य कथं मिथ्यामयं भजे ॥२९॥

भवाम्यहं यमाश्रित्य महीयान् वीर्यवान् सदा ।
यत्त्यक्त्वाऽहं भविष्यामि दुर्बलादपि दुर्बलः ॥३०॥
भगवान् यो महाशम्भु र्मङ्गलैक-निकेतनः ।
कथं तं शङ्करं त्यक्त्वा मोहजं दुःखदं भजे ॥३१॥

येनैव संनियम्यन्ते मनो-बुद्धीन्द्रियाणि च ।
यस्येच्छया जगत् सर्वं घूर्णमान महर्निशम् ॥३२॥

यो नित्यः परमो देवः सृष्टि-स्थित्यन्त-कारणम् ।
कथं तमीश्वरं त्यक्त्वा क्षुद्रं सृष्ट मह भजे ॥३३॥

यस्य सत्ता ददात्येव चास्तित्वं जगते सदा ।
यस्य चित्ता ददात्येव चैतन्यं जगते सदा ॥३४॥
यस्यानन्दो ददात्येव सुखानि जगते सदा ।
सच्चिदानन्द-रूप न्तं त्यक्त्वा कथं मृषा भजे ॥३५॥

यस्याभासो जगत् कृत्स्नं नाम-रूपादिकञ्च यत् ।
यस्य प्रकाश-बाहुल्यं प्राकृताः शक्तयोऽखिलाः ॥३६॥
यस्याभिव्यक्ति-मात्रं हि चेतनानि जडानि च ।
तं विश्व-जीवनं त्यक्त्वा कथं मृतं जडं भजे ॥३७॥

अभिव्यक्तिः—प्रकाशः । सूक्ष्म-रूपेण स्थितस्य ( कारणात्मना स्थितस्य ) कारणस्य कार्य-रूपेण आविर्भावः ॥

यो हि ज्ञान-स्वरूपश्च सर्व-शक्ति-समन्वितः ।
यो हि प्रेममयो नित्यं सर्व-मङ्गल-दायकः ॥३८॥
पूर्णानन्दो य एको हि तापत्रय-विनाशकः ।
तं ब्रह्माण्ड-गुरुं त्यक्त्वा कथं मोहमयं भजे ॥३९॥

सन्त्यक्तोऽपि मया यो मां नैव मुञ्चति कर्हिचित् ।
संस्थाप्याङ्के निजे यो मां सन्ततं पालयत्यसौ ॥४०॥
कृपया यस्य चाहं तं क्षम श्चिन्तयितुं मुदा ।
सन्त्यज्य तं कृपा-सिन्धुं कथं मायामय भजे ॥४१॥

यस्मि न्नात्माहुतिः पूर्णा यथार्थमेव पौरुषम् ।
विस्मृति र्यस्य देवस्य भवत्येवात्म-घातनम् ॥४२॥
चिन्त्यमानः शिवो यो मां नयत्येव सुधा-नदम् ।
निर्दोष न्तं महानन्दं त्यक्त्वा दुष्टं कथं भजे ॥४३॥

यस्मिल्लँब्धे भवेल्लब्ध मिदं सर्व मभीप्सितम् ।
यस्मिन् प्राप्ते भवेत् प्राप्तम् अमरत्व मनामयम् ॥४४॥
यस्मिन् ज्ञाते भवेज् ज्ञातं विश्वं स्थावर-जङ्गमम् ।
तृप्ति-रूपञ्च तं हित्वा कथं दुःखमय म्भजे ॥४५॥

यस्मि न्नलभ्यमाने तु भव-बन्धो न कृत्यते ।
यस्मि न्न लभ्यमाने तु काम-ग्रन्थि र्न भिद्यते ॥४६॥
यस्मि न्नलभ्यमाने च दुःखान्तो नैव गम्यते ।
अमृतं तं परित्यज्य कथं मृत्युमय म्भजे ॥४७॥

त्रैलोक्य-नमिता गङ्गा सर्वस्याकाङ्क्षिता परा ।
निकटस्था महोदारा सुलभा पुण्य-जीवना ॥४८॥—
तां तथापि त्यजत्येव सारङ्गो मेघ-जीवनः ।
पयोधरामृताभावे मृत्यु-ग्रस्तोऽपि तृष्णया ॥४९॥
एवं गते कथं हित्वा जगज्जीवन-कारणम् ।
याचे दुःखाश्रितं क्षुद्रं भङ्गुरं पार्थिवं सुखम् ॥५०॥
एवं गते कथं नाहं भूत्वा ब्रह्मणि निष्ठितः ।
वर्जयामि महोत्साहः सर्व-सङ्गं सुदूरतः ॥५१॥

गङ्गा—"दृष्टा तु हरते पापं स्पृष्टा तु त्रिदिवं नयेत् । प्रसङ्गे-नापि वा गङ्गा मोक्षदा ह्यवगाहिता ॥" इति प्रायश्चित्त-तत्त्वम् ॥ "मुक्ति-स्थानं सुख-स्थानं वास-स्थानं तदेव तु । अशोक मभयञ्चैव यत्र गङ्गा प्रतिष्ठिता ॥" इति बृहद्धर्म-पुराणम् ॥ सारङ्गः—चातकः ।

छेदनीयो मया नित्यं सर्व-बन्धो ह्यशेषतः ।
वेदनीयो मया नित्यं संसारार्णव-तारकः ॥५२॥
लभनीयो मया नित्यं परानन्दः परात्परः ।
करणीयो मया नित्यं योगार्थं जीवन-व्ययः ॥५३॥

वेदनीयः—वेदितव्यः ॥

पिबाम्यहं सदा भक्त्या राम-नाम-कथाऽमृतम् ।
भजाम्यहं भवाधीशं मन्द-स्मित-मुखाम्बुजम् ॥५४॥
स्मराम्यहं परात्मानं सर्वभूत-गुहाशयम् ।
मन्येऽहं जगतां नाथं निष्कलं विश्व-रूपिणम् ॥५५॥
स्तवीम्यहं महेशानं भक्त्या गद्गदया गिरा ।
ध्यायाम्यहं परं देवं कुण्डली-योग माश्रितः ॥५६॥
पश्याम्यहं महादेवं सहस्रार-सरोरुहे ।
विशाम्यहं परं ब्रह्म समाधि-विजितेन्द्रियः ॥५७॥

वर्जयामि जगत् सर्वं सर्वदैव तप स्वरन् ।
कर्तव्यं नैव मे किञ्चिद् विना ब्रह्म-सुचिन्तनम् ॥५८॥

सत्यं युगं सदा तत्र चित्ते यस्मिन् सदाऽच्युतः ।
कले युँगं सदा तत्र चित्ते यस्मिन् न चाच्युतः ॥५९॥

देवत्वं सन्ततं तत्र शिवो यस्मिन् हृदि स्थितः ।
पशुत्वं सन्ततं तत्र कामो यस्मिन् हृदि स्थितः ॥६०॥

दुग्ध-पानं भुजङ्गानां निश्चितं विष-वर्धनम् ।
सुखं भोगो मनुष्याणां निश्चितं काम-वर्धनम् ॥६१॥

कामो रिप्रो महावैरी हननीयोऽधुना मया ।
हननीयं मनो नित्यं कामेन पूरितं सदा ॥६२॥

रिप्रः—अधमः ।

तदा मनो भवेद् वश्यं यदा त न्निपतिष्यति ।
अतएव हनिष्यामि मनोऽवश्य मतन्द्रितः ॥६३॥

विषयालोचनं मुञ्च मौनत्वं रसने भज ।
सुरूपाणां कुरूपाणां दर्शनं नेत्र मे त्यज ॥६४॥
चिन्तां वैषयिकीं चित्त त्वरित न्त्वरित न्त्यज ।
सर्वेन्द्रिय-समायुक्त-मनो भवेश्वरं भज ॥६५॥

Cf. "Don't thou think or hear or see, Touch or do what poisons thee," *Yoga and Perfection.*

संसार-पङ्किलं नेत्रं कथं द्रक्ष्यति शङ्करम् ।
संसार-पङ्किले चित्ते कथं स्थाप्यं शिवासनम् ॥६६॥

सर्वगं श्रीमहादेवं विश्व-राजं परेश्वरम् ।
निकषाऽस्मि कु-वेशेन, लज्जितोऽहं धिगस्तु माम् ॥६७॥

मूलं समस्त-पापानां संसारं वर्जयाम्यहम् ।
अधुनैव भविष्यामि निर्मलादपि निर्मलः ॥६८॥

भोगानां वासनां त्यक्त्वा त्यक्त्वा च भेद-भावनाम् ।
अधुनैव भविष्यामि योगेन मुक्त-मानसः ॥" ६९॥

भोगः—सुखम् । स्वगादि-भृतिः । हस्त्यश्वादि कर्मकराणाञ्च भृतिः ॥ "कर्ता च देही भोक्ता च आत्मा भोजयिता सदा । भोगो विभव-भेदश्च निष्कृति र्मुक्तिरेव च ॥"

एवञ्च चिन्तनं कृत्वा युक्तिभिश्च पुनः पुनः ।
साधकः स विवेकेन वैराग्यं लभते दृढम् ॥७०॥

तत श्चाधिगता तेन तितिक्षा लोक-दुर्लभा ।
आकाङ्क्षति परं योगं निर्वाणं येन गम्यते ॥७१॥

---

## चतुर्द्दशोल्लासः ।

यतः कुतश्चिदुत्पन्नं भवत्वेवाखिलं जगत् ।
एतद् भवतु यत् किञ्चि न्नात्र कार्यं विचारणम् ॥१॥

दुःख-लेशं न वाञ्छामि काङ्क्षेऽहं परमं सुखम् ।
स्वरूपावस्थितिं याचे मोक्ष-कामी भवाम्यहम् ॥२॥

सामर्थ्यं जीवनं वित्तं विद्यां बुद्धिं तपो बलम् ।
सर्वं नियोजयिष्यामि केवले लक्ष्य-साधने ॥३॥

अनुकूलं समस्तञ्च ग्रहीष्याम्यति-सादरम् ।
प्रतिपक्षान् समस्तांश्च पादेन दलयाम्यहम् ॥४॥

प्रतिपक्षः—शत्रुः ।

विग्रहः केवलं कार्यो न सन्धि वैरिणा मम ।
विचरामि सदा मार्गं सत्येनैवानुमोदितम् ॥५॥

आत्मीयो न भवेत् कोऽपि नैव कोऽप्युपकारकः ।
यदि नो स भवेद् योगी क्षेम्ये पुण्ये सहायकः ॥६॥

Cf. "गुरु र्न स स्यात् स्वजनो न स स्यात्, पिता न स स्याज्जननी न सा स्यात् । दैवं न तत् स्या न्न पतिश्च स स्या न्न मोचयेद् यः समुपेत-मृत्युम् ॥" श्रीभागवतम् ।

नैव कार्या सुखापेक्षा कस्यचिद् बान्धवस्य च ।
बान्धवं बन्धनं नित्यं वर्जयामि महोद्यमः ॥७॥

वर्जयामि धनं वित्तं शुभ-बुद्धि-विनाशनम् ।
वर्जयामि सुखं भोगं मुनीनामपि मोहनम् ॥८॥

जड-संसर्गिणी तृष्णा परमालोक-रोधिनी ।
तृष्णाया जायते दीर्घ-संसार-दुःख-यामिनी ॥९॥

नाना-भोग-विलासेन काम-लोभेन मोहिताः ।
पतन्ति धर्म-सोपानाद् उन्नता अपि योगिनः ॥१०॥

रिपुभि स्तपसो भ्रष्टः पुराऽभूद् गाधि-नन्दनः ।
जित-कामो जित-क्रोधो जित-दोषो भवाम्यहम् ॥११॥

सर्वं मे मानसं रोगं नाशयामि शिवायनः ।
वर्जयामि सुखं दुःखं हेयाहेय मगर्धनः ॥१२॥

अगर्धनः—अलुब्धः ।

सेन्द्रियं चेतनं द्रव्यं निरिन्द्रिय मचेतनम् ।
वर्जयामि ह्यशेषेण मनो-वाक्-काय-कर्मभिः ॥१३॥

वर्जयामि महाविघ्नं भावित्र मकुतोभयः ।
वर्जयामि निराकाङ्क्षी देहासक्ति मकम्पितः ॥१४॥

भावित्रम्—त्रैलोक्यम् । स्वर्ग-मर्त्य-पातालम् ।

सर्वं हित्वा शिवो भूत्वा भजामि परमं शिवम् ।
निवसामि हरे धाम शोक-हीनं निरन्तरम् ॥१५॥

पश्याम्यहं परं ज्योति र्नासाग्रारोपितेक्षणः ।
पश्याम्यहं परं देवं सदा संहृष्ट-मानसः ॥१६॥
पश्याम्यहं परं शम्भुं भक्त्युत्कण्ठित-लोचनः ।
पश्याम्यहं जगन्नाथं घन-रोमाञ्च-कञ्चुकः ॥१७॥
पश्याम्यहं महादेवं जगदालोक-कारकम् ।
पश्याम्यहं महाविष्णुं सर्वैश्वर्य-समन्वितम् ॥१८॥
पश्याम्यहं परं ब्रह्म जन्म-मृत्यु-जरा-हरम् ।
पश्याम्यहं परं पूर्णं परिनिर्वाण-रूपकम् ॥१९॥

कञ्चुकः—देहः ।

देहोऽहमिति भावे तु परिच्छिन्ने लयं गते ।
ब्रह्माह मिति भावस्य शुद्धे चित्ते प्रजायते ॥२०॥

चित्तायत्तं जगत् सर्वं मोह-दुःख-निवेशनम् ।
चित्तं निर्वासनं कृत्वा परमेशो भवाम्यहम् ॥२१॥

निवेशनम्—आलयः ।

न विद्येते सुखं दुःखं विषयेषु कदाचन ।
प्रत्येकं प्रीतये भूत्वा पुनः क्लेशाय जायते ॥२२॥

सर्वमेव सुखं दुःखं विकारो मनसो ध्रुवम् ।
नाशयित्वाऽधुनाऽनङ्गं महादेवो भवाम्यहम् ॥२३॥

अनङ्गम्—मनः । कामम् ।

असङ्गो विचरिष्यामि शिवोऽहं वसुधा-तले ।
शिवोऽहं विचरिष्यामि तपने चन्द्र-मण्डले ॥२४॥

प्रलये सर्व-विश्वेषु विलीनेषु चिदर्णवे ।
राजिष्यामि सुगम्भीरः स्वात्मानन्दे परात्परः ॥२५॥

सर्वमेव ममैश्वर्यं स्थलं जलं चराचरम् ।
दृश्य-वातायनान्नित्यं मां हि प्रकाशयाम्यहम् ॥२६॥

मदभिन्नं जगद्-दृश्यं परिधाय सुचेलकम् ।
प्रकाशयामि चात्मानम् एकोऽपि बहुधाऽनिशम् ॥२७॥

सुचेलकम्—शोभन-वस्त्रम् ।

अवतारावली-बीजं विश्व-बीजं सदातनम् ।
मायाधीश श्चिदानन्दः सर्व-वेशी नटोऽस्म्यहम् ॥२८॥

अवतारः—ईश्वरस्य अंशावेश-वशेन प्रादुर्भावः । Comp. "सर्वेषामवताराणां बीज-रूपः सनातनः ।" इति ब्रह्मवैवर्ते ॥

विषयो बन्धनं नैव विषयत्वं हि बन्धनम् ।
शिवं मां सर्वतः पश्यन् कथं बद्धो भवाम्यहम् ॥२९॥

मलिनीकुरुते धूमो नो कदापि यथाऽम्बरम्।
मलिनीकुरुते विश्वं न तथा मां परात्परम्॥२०॥

आत्म-स्वरूप-योगाग्नौ सर्व-द्वैतं जुहोम्यहम्।
सर्व-द्वैतं परित्यज्य परमात्मा भवाम्यहम्॥२१॥

अक्रिया मे परा पूजा मौनत्वं मे परो जपः।
स्वरूपावस्थिति र्नित्यं ध्यानं ज्ञानं समाधयः॥२२॥

अक्रिया—क्रिया-राहित्यम्।

मुमुक्षूणां तपो-भङ्गो मरणा दतिरिच्यते।
कर्तव्यं विद्यते नान्यद् यतीनां ब्रह्म-चारिणाम्॥२३॥

यतिः—यतते मोक्षाय यः। परिव्राजकः सन्न्यासी।

आदौ श्रीगुरु मासाद्य सर्वज्ञं सर्व-दर्शिनम्।
कर्तव्यं मम पृच्छामि भक्ति-नम्रात्म-मानसः॥२४॥

योग-तत्त्वं ततो लब्ध्वा साङ्गोपाङ्गं शमान्वितः।
शुभाशुभं विनिक्षिप्य तस्मिन् मम महाश्रये॥२५॥
महत्तपः करिष्यामि सदैव शास्त्र-चारणः।
महावैराग्य-संयुक्तो धृत्युत्साह-समन्वितः॥२६॥

हिमाचले महापुण्ये ज्ञान-धर्म-निकेतने।
गङ्गा-मन्दाकिनी-तीरे भक्ति-वैराग्य-मन्दिरे॥२७॥

करिष्यामि महायोगं परब्रह्म-परायणः ।
करिष्यामि महायोगम् अविच्छिन्न मकातरः ॥३८॥

योगासने महाध्याने शुष्यता न्मे शरीरकम् ।
न कदापि विमोक्ष्यामि समाधिं परमेश्वरे ॥३९॥

["इहासने शुष्यतु मे शरीरं, त्वगस्थि-मांसं प्रलयञ्च यातु । अप्राप्य बोधिं बहुकल्प-दुर्लभां, नैवासनात् काय मत स्वलिष्यते ॥" इति श्रीबुद्धदेवोक्तिः ॥

नाशयित्वा तपो-विघ्नान् काम-ध्वंसी भवाम्यहम् ।
मृत्युञ्जयो भविष्यामि सच्चिदानन्द-विग्रहः ॥४०॥

"आलस्यं व्याधय स्तीव्राः प्रमादः स्थान-संशयः । अनवस्थित-चित्तत्व मश्रद्धा भ्रान्ति-दर्शनम् ॥ दुःखानि दौर्मनस्यञ्च विषयेषु च लोलता । दशैते युञ्जतां पुंसा मन्तरायाः प्रकीर्तिताः ॥" इति शिव-पुराणे ॥

---

# अपराह्णः ।

## प्रथमोल्लासः ।

सविकारो भवे ज्जीवो निर्विकारः सदाशिवः ।
योगाभ्यास-बलेनैव जीवत्वं परिवर्जयेत् ॥१॥

योग-साफल्य-लाभाय निर्दोषत्व मपेक्ष्यते ।
तस्मादादौ प्रयत्नेन दोषान् सर्वान् परित्यजेत् ॥२॥

पर-द्रव्येषु या लिप्सा स्तेय न्तत् परिह्रापयेत् ।
परस्यानिष्ट-चिन्ता या सा हिंसा तां सदा त्यजेत् ॥३॥
क्षति-बोध-विहीनत्वं क्षमा तां नियतं भजेत् ।
अनाविद्धं छलेनैव सत्य न्तत् परिपालयेत् ॥४॥
*परिह्रापयेत्—परित्यजेत् ।

आत्मार्थे वा परार्थे वा परिहासेऽपि वा नरः ।
वदेन्नैवानृतं वाक्यम् आर्जवे निरतो भवेत् ॥५॥

श्रद्धां भक्तिं दयां दानं संसेवेत महामनाः ।
पथ्य-स्त्री-वह्नि-सेवा न्तु वर्जयेद् गत-लालसः ॥६॥

निद्राऽल्पत्वं मिताहारो वाक्य-संयमनं तथा।
यथा-लाभेन सन्तोष औदासीन्यं विचारणा ॥७॥—
इत्यादीनि भजेन्नित्यं निर्वाण-गत-मानसः।
सङ्ग-दर्प-परित्यागो शौचाचार-परायणः ॥८॥
विचारणा—विचारः।

सम्मानाद् गौरवा न्नित्यम् उद्विजेत महातपाः।
अपमानं तिरस्कारं सहेत शान्त-मानसः ॥९॥
तिरस्कारः—भर्त्सना। अवज्ञा। निन्दा।

शास्त्र-चक्षुः सु-गम्भीरो मानदो विनयान्वितः।
जितेन्द्रियो भवे न्नित्यं मुमुक्षु र्विमलाशयः ॥१०॥

वर्जयेत् सर्व-संसर्गं सर्व-भोगा नशेषतः।
तिष्ठेद् देहे प्रवासीव देहासक्ति-विवर्जितः ॥११॥

नियच्छे न्मानसं नित्यं मानसेनाति-चञ्चलम्।
सर्वदैकान्त-शीलः सन् योगं कुर्याद् विमुक्तिदम् ॥१२॥

अनुकूले प्रदेशे च सुभक्ष्ये निरुपद्रवे।
निर्जने शोभने रम्ये कुट्टिमं कारये च्छुभम् ॥१३॥
कुट्टिमः—कुटीरः।

तत्रोपवेशनं कृत्वा स्वभ्यस्ते तु सुखासने।
प्रणम्य श्रीगुरुं विष्णुं कुण्डली-योग माचरेत् ॥१४॥

कुण्डली-योग-सिद्ध्यर्थं सृष्टे ज्ञान मपेक्षितम् ।
प्रकृतीश्वर-जीवानां लभेत ज्ञान मुत्तमम् ॥१५॥

अपेक्षितम्—अपेक्षा-विषयभूतम् । आकाङ्क्षितम् ।

---

## द्वितीयोल्लासः ।

अद्वयः सर्वदा-पूर्णः स्वतन्त्रो राजते शिवः ।
चिदानन्दो निराकारो निर्विकारः सनातनः ॥१॥

सामरस्य-स्वरूपेण तेनैकेन प्रकाशिता ।
जड-रूपा महामाया सदैव त्रिगुणात्मिका ॥२॥

त्रिगुणम्—सत्त्व-रज-स्तमांसि॥ सत्त्वम्—प्रकाशक-ज्ञानं, सुख-हेतुः । तस्य धर्माः—(१) प्रसादः । (२) हर्षः । (३) प्रीतिः । (४) असन्देहः । (५) धृतिः । (६) स्मृतिः ॥ रजः—राग-द्वेषात्मकं, दुःख-हेतुः । तस्य धर्माः—(१) कामः । (२) क्रोधः । (३) लोभः । (४) मानः । (५) दर्पश्च ॥ तमः—आवरकं, मोह-हेतुः । तस्य धर्माः—(१) प्रमादः । (२) मोहः । (३) भयम् । (४) क्लान्तिः । (५) विषादः । (६) शोकः । (७) अरतिः । (८) अनार्यता । (९) श्रमः । (१०) तन्द्रा ।

आकाशं पवनं तेजो जलं पृथ्वीं चकार सा ।
एतेभ्यः पञ्चभूतेभ्यो दृश्यं विश्व मजायत ॥३॥

प्रत्येकं गठितं भूतं सुसूक्ष्मैः परमाणुभिः ।
इन्द्रियागोचरैः किन्तु योग-नेत्र-सुगोचरैः ॥४॥

प्रत्येकस्मिन् पराणौ तु रजः-सत्त्व-तमो-गुणाः ।
त्रय एव सदा-कालं बसन्त्यव्यभिचारतः ॥५॥

क्वचित् सत्त्वस्य बाहुल्यं, क्वचिद् वा रजस स्तथा ।
कुत्रचिद् वा तमाधिक्यं, गुण-साम्यं न कुत्रचित् ॥६॥

यत्र सत्त्वस्य बाहुल्यं सात्त्विकः स निगद्यते ।
एवमेव हि विज्ञेयो राजस स्तामस स्तथा ॥७॥

सत्त्वं प्रकाश-शीलञ्च, क्रिया-शीलं रज स्तथा ।
स्थिति-शीलं तमो ज्ञेयम् अन्योऽन्य-मिथुना गुणाः ॥८॥
अन्योऽन्यम्—उभयतः । परस्परम् ।

बध्यन्ते त्रिगुणै जींवा, गुणै र्यथैव दन्तिनः ।
गुण-पाशं समादाय घूर्णन्ते परमाणवः । ॥९॥

नित्य-भ्रमण-शीलाश्च चञ्चलाः परमाणवः ।
तिर्यग्-गत्या महाकाशे भ्रमन्त्येव निरन्तरम् ॥१०॥

निर्मितानि शरीराणि तै र्जडैः परमाणुभिः ।
अतएव शरीराणि समस्तानि जडानि वै ॥११॥

जड-चैतन्य-संयोगा न्मानसञ्च प्रकाशितम् ।
तदेकं मानसं प्राज्ञै र्नाना-नामभि रुच्यते ॥१२॥

प्राणाना मिन्द्रियाणाञ्च चेतना ज्जीवनात् तथा ।
कर्त्तृ-रूपं चिदोपेतं तदेव जीव उच्यते ॥१३॥

चेत्योन्मुखतया तद्धि चित्त मित्यभिधीयते ।
निश्चय-वृत्ति-रूपत्वात् तद् बुद्धि रिति गीयते ॥१४॥

संकल्प-कल्पना-वृत्ति-वशात् तत् कथितं मनः ।
अस्मिता-धारणेनैव तदहङ्कार उच्यते ॥१५॥

चैतन्यात् स्फुरितं विश्वं ज्ञान-दृष्ट्या चिदात्मकम् ।
जीव-रूप श्चिदाभासः सर्वदैव चिदात्मकः ॥१६॥

अपां-नाथे यथा तोयं वीचि-रूपेण नृत्यति ।
ब्रह्म-सिन्धौ तथा चिद्धि जीव-रूपेण नृत्यति ॥१७॥

अपांनाथः—समुद्रः ॥ वीचिः—तरङ्गः । स्वल्प-तरङ्गः ।

यावन्न लभ्यते ज्ञानं तावदेव हि नर्तनम् ।
तावदेव सुखं दुःखं यातायातं पुनः पुनः ॥१८॥

पञ्च-भूत-मयं चैतं मांसास्थ्यादि-विनिर्मितम् ।
शरीरं सर्व-जीवानां नश्वरं भोग-मन्दिरम् ॥१९॥

अत्याश्चर्य मिमं देहं भक्ता जानन्ति यत्नतः ।
किञ्चिज्जानन्ति विद्वांस स्तदप्यत्यन्त-दुःखतः ॥२०॥

यानि यानि च वस्तूनि सन्ति विश्वे चराचरे ।
तानि तान्येव सर्वाणि सन्ति जीव-कलेवरे ॥२१॥

प्रत्येकः परमाणुस्तु जीव-देहो न संशयः ।
प्रत्येकस्मिन् पराणौ च भुवनानि चतुर्दश ॥२२॥

ससीमं देहिनो ज्ञानं पूर्णज्ञानं न विद्यते ।
ज्ञानाधिक्यं क्वचिद् देहे ज्ञानाल्पत्वं तथाऽपरे ॥२३॥

स्थावरा ज्जङ्गमो ज्ञानी, मर्कटा न्मानव स्तथा ।
बद्धाच्च साधको ज्ञानी, ज्ञान-साम्यं न विद्यते ॥२४॥

यज् ज्ञान मस्ति कस्यापि वर्तमाने नरस्य तु ।
अतीते वा भविष्ये वा न्यूनाधिक्यं भवेत् ततः ॥२५॥

परिवर्तन-शीलेभ्यः खण्ड-ज्ञानेभ्य एव च ।
एतेभ्यः परमा प्रोक्ता निर्विकारा चिदद्वया ॥२६॥

चैतन्यात्मा निराकारो द्वैत-हीनः सदा-समः ।
निष्कलो यः सदा-पूर्णः सर्व माव्रत्य तिष्ठति ॥२७॥
स एव सर्वगः शान्तो निरवद्यो निरंशकः ।
सर्वदा पूर्ण-रूपेण प्रति-देहेऽपि वर्तते ॥१८॥
निरवद्यः—निर्दोषः । विशुद्धः ॥

काष्ठ-मध्ये यथा वह्नि दुंग्धे च मन्यजं यथा ।
देह-मध्ये यथा देवः सूक्ष्म-रूपेण राजते ॥२९॥

अमृतं प्रोत्थितं पुण्यं यथा सागर-मन्थनात् ।
योगेन मथिते देहे लभ्यते परमामृतम् ॥३०॥

लभ्यते तु यदा ब्रह्म तदा माया निवर्तते ।
तदा वै भेद-बुद्धिश्च माया-कार्यं विलुप्यते ॥३१॥

माया-शक्त्या भवे जीवो बद्धो देह-त्रयेऽशिवे ।
ब्रह्मणः करुणा-शक्त्या जीवो मुक्तो भवेत् पुनः ॥३२॥

महती सा कृपा-शक्ति र्देहे देहे व्यवस्थिता ।
तामेव कुण्डलीं देवीं बोधयेद् योग्य-योगतः ॥३३॥

सर्वेषामेव योगानां शरीरं साधनं यतः ।
देह-पिण्डं विजानीयात् कुर्यात् तं साधन-क्षमम् ॥३४॥

साधनम्—साध्यते कर्म निष्पाद्यते अनेनेति साधनम् ॥

---

## तृतीयोल्लासः ।

प्रकृत्या गुण-मय्याश्च जातमेत च्छरीरकम् ।
सत्त्वं रज स्तमश्चेति त्रिगुणैः सर्वदाऽन्वितम् ॥१॥

क्वचित् सत्त्वस्य बाहुल्यं क्वचिद् वा रजस स्तथा ।
क्वचिद् देहे तमाधिक्यं गुण-साम्यं न विद्यते ॥२॥

प्रसक्तं परिवर्तन्ते देह-पिण्ड-पराणवः ।
केचिद् देहाद् बहि र्यान्ति देह मायान्ति केचन ॥३॥

प्रसक्तम्—नित्यम् ॥ आसक्तम् । अनुरक्तम् ॥

अलक्ष्येण गतायाताद् देहैकत्वञ्च मन्यते ।
कदाचिद् वस्तुतः क्वापि देहैकत्वं न वर्त्तते ॥४॥

एकदैव न गच्छन्ति बहिः सर्वे पराणवः ।
तस्मादेव हि सिध्यन्ति द्रव्यं कर्म गुण स्तथा ॥५॥

यथैव सन्निकर्षन्ति मद्यपा मद्यपं सदा ।
सदाचार-रता लोका यथा त्यजन्ति मद्यपम् ॥६॥
तथा साधोः शरीरे च सात्त्विकाः परमाणवः ।
आयान्ति सर्व-दिग्-देशाद् आकृष्टा स्तद्-गुणैः सदा ॥७॥
राजसा स्तामसाः सर्वे तथैव परमाणवः ।
साधो र्देहं परित्यज्य धावन्त्यसात्त्विकं प्रति ॥८॥

एवमेव नराणाञ्च चिन्ता-कर्म-प्रभावतः ।
उत्थानं पतनं नित्यं भवती नात्र संशयः ॥९॥

तीव्र-चेष्टा-प्रभावेण लभ्यते द्रुत मुन्नतिः ।
तीव्रया चिन्तया शीघ्रं कीटोऽपि भ्रमरायते ॥१०॥

समासाद्य सुरा-भाण्डं सात्त्विको मानवो यथा ।
अनिच्छन्नपि दुर्गन्धं भुङ्क्ते चान्य-जनैः सह ॥११॥

तथा दुर्जन-संसर्गात् पापं संक्रमते ध्रुवम् ।
तथा सज्जन-संसर्गात् पुण्यं भवति निश्चितम् ॥१२॥

सत्-कर्म-चिन्तनाभ्याच्च सर्वदा सात्त्विको भवेत् ।
नियच्छेत् सत्त्व-पाशेन राजसं तामसं सदा ॥१३॥

सत्त्वाज् ज्ञानं सुखं भक्तिः शुभेच्छा च दयाऽऽर्जवम् ।
रजसः कर्म-बाहुल्यं दुःखं चञ्चलताऽनिशम् ॥१४॥
तमसो जाड्य मज्ञानं हिंसा-दर्पादिभि र्युतम् ।
योगेन शोधये न्नित्यं शरीरं ब्रह्म-मन्दिरम् ॥१५॥

"प्रभूतञ्च यदा सत्त्वं मनोबुद्धीन्द्रियाणि च । तदा कृत-युगं विद्याद् दाने तपसि यद् रतिः ॥ यदा कर्मसु कार्येषु शक्ति र्यशसि देहिनाम् । तदा त्रेता रजोवृत्ति रिति जानीहि शौनक ॥ यदा लोभ स्त्वसन्तोषो मानी दम्भोऽथ मत्सरः । कर्मणाञ्चापि काम्यानां द्वापर स्तद् रज स्तमः ॥ यदा सदाऽनृतं तन्द्रा निद्रा हिंसादि-साधनम् । शोक-मोह-भयं दैन्यं स कलि स्तु तदा स्मृतः ॥"

---

## चतुर्थोल्लासः ।

शरीरे नियतं वान्ति पञ्च मुख्य-समीरणाः ।
देहस्थं मातरिश्वानं निर्जये मोक्ष-वाञ्छनः ॥१॥

समीरणाः—[सम्+ईर् (गमने)+अन् ( कर्तरि )] वायवः । प्राणापान-व्यानोदान-समानाः—पञ्च शारीर-वायवः ॥ प्राणो नाम प्राग्-गमनवान् नासाग्रस्थानवर्ती । अपानो नाम अवाग्-गमनवान् पाय्वादि-स्थानवर्ती । व्यानो नाम विश्वग्गमनवानखिल-शरीरवर्ती । उदानः कण्ठस्थानीय-ऊर्ध्वगमनवानुत्क्रमण-वायुः । समानः—शरीरमध्यगताशितपीतान्नादि-समीकरणकरः । समीकरणन्तु परिपाक-करणं रस-रुधिर-शुक्र-पुरीषादि-करणम् । केचित् तु नाग-कूर्म-कृकर-देवदत्त-धनञ्जयाख्याः पञ्चान्ये वायवः सन्तीत्याहुः । तत्र नागः उद्गीरणकरः । कूर्मः निमीलनादिकरः । कृकरः—क्षुधाकरः । देवदत्तः—जृम्भनकरः । धनञ्जयः—पोषणकरः । एतेषां प्राणादिषु अन्तर्भावात् प्राणादयः पञ्चैवेति केचित् । इदं प्राणादि-पञ्चकम् आकाशादिगत-रजोऽंशेभ्यो मिलितेभ्य उत्पद्यते । इदं प्राणादिपञ्चकं कर्मेन्द्रियसहितं सत् प्राणमयकोशो भवति । अस्य क्रियात्मकत्वेन रजोऽंशकार्यत्वम् । एतेषु कोशेषु मध्ये विज्ञानमयो ज्ञानशक्ति-

मान् कर्तृरूपः । मनोमयः—इच्छाशक्तिमान् करणरूपः । प्राण-मयः—क्रियाशक्तिमान् कार्यरूपः ॥ इति वेदान्तसारः ॥

मातरिश्वा—[ मातरि ( आकाशे ) + श्वि ( गमने ) + अन् ( कर्तरि ) ] वायुः ।

देहे नाड्य स्त्वसंख्येया स्तासां तिस्रोहि मुख्यकाः ।
इडा च पिङ्गला चेति सुषुम्णा च मनोरमा ॥२॥

पिङ्गलेडा बहिर्मेरोः सुषुम्णा मेरु-मध्यतः ।
पिङ्गलेडा सुषुम्णा च प्राण-मार्गा स्त्रयो मताः ॥३॥

मेरुः—पृष्ठ-वंशः ।

इडा वामे सुषुम्णायाः पिङ्गला दक्षिणे स्थिता ।
पिङ्गलेडे धनुर्वक्रे सुषुम्णा प्रगुणा मता ॥४॥

प्रगुणा—अवक्रा ।

मूलाधारात् शिराब्जस्थ-द्वादशारान्तमेव हि ।
सुषुम्णाऽवस्थिता नाडी मोक्ष-मार्ग-स्वरूपिणी ॥५॥

इडा वै वर्तते कन्दाद् वाम-नासा-पुटावधि ।
पिङ्गला वर्तते कन्दाद् दक्ष-नासा-पुटावधि ॥६॥

कन्दः—"कन्द-स्थानं मुनिश्रेष्ठ मूलाधारान्नवाङ्गुलम् ॥ चतुर-ङ्गुलमायामविस्तारं मुनिपुङ्गव । कुक्कुटाण्डवदाकारं भूषितं तु त्वगादिभिः ॥" इति जाबालदर्शनोपनिषत् ॥

इडायां सोम-रूपेण वहत्येव समीरणः ।
पिङ्गलायां वहत्येव भानु-रूपेण मारुतः ॥७॥

"देहिनो दक्षिणे भागे पिङ्गला नाडिका स्मृता । पितृयोणि रिति ख्याता भानुस्तत्राधिदैवतम् ॥ दक्षिणेतरगा या च इडा सा नाडिका स्मृता । देवयोनि रिति ख्याता चन्द्र स्तत्राधिदैवतम् ॥" इति सौर-पुराणम् ॥

शक्ति-रूपी सुधाधारो देहमाप्यायतेऽनिशम् ।
रौद्र-रूपी सहस्रांशु र्देहं शोषयते भृशम् ॥८॥

सुधाधारः—चन्द्रः ।

आप्यायते—पोषयति । Strengthens, makes full, enlarges. सहस्रांशुः—सूर्यः ॥ भृशम्—अत्यन्तम् ।

सुषुम्णाऽग्निमयी दीप्ता पापानां काल-रूपिणी ।
विज्ञानालय-रूपा सा संसेव्या वीत-रागिणा ॥९॥

इडा वै शङ्ख-चन्द्राभा सित-रक्ता तु पिङ्गला ।
सुषुम्णा लोहिता रम्या योग-गम्या सुलक्षणा ॥१०॥

सितः—शुक्ल-वर्ण-युक्तः ।

शक्ति-चैतन्य-केन्द्राणि सन्त्यनेकानि कायके ।
कथ्यन्ते तानि चक्राणि पद्मानि च सुतान्त्रिकैः ॥११॥

तान्त्रिकः—शास्त्र-तत्त्वज्ञः ।

आधारं प्रथमं चक्रं शोणित-वर्णं चतुर्दलम् ।
लिङ्गाधस्य गुदोर्ध्वस्य पद्म मेतद् व्यवस्थितम् ॥१२॥

मूलं निर्वाण-मार्गस्य कुण्डल्याधारक स्तथा ।
मूलाधार इति प्रोक्तं चक्रमेतन्मनीषिभिः ॥१३॥

मूलम्—[ मूल् ( स्थितौ, प्रतिष्ठायाम् ) + अ ] स्थापयति यत् । आदि-कारणम् । प्रधान-हेतुः । उत्पत्ति-स्थानम् । आरम्भ-स्थानम् ।

लिङ्गे द्वितीयकं चक्रं स्वाधिष्ठानं मनोहरम् ।
षड्-दलं पङ्कजं दीप्रं सिन्दूर-वर्ण मुज्ज्वलम् ॥१४॥

स्वाधिष्ठान मिदं पद्मं प्राण-स्थान मनारतम् ।
हंस-स्थानं महाचक्रं विद्युल्लेखेव भास्वरम् ॥१५॥

नाभौ तृतीयकं चक्रं मणिपूरं मणि-प्रभम् ।
पद्मं दश-दलं स्वच्छं मेघ-नीलं समुज्ज्वलम् ॥१६॥

हृत्स्थं चतुर्थकं चक्रं द्वादशार मनाहतम् ।
शब्द-ब्रह्ममयं पद्मं बन्धूक-कुसुमोपमम् ॥१७॥

पद्म मष्ट-दलं शुभ्रम् अनाहते व्यवस्थितम् ।
सर्व-काम-प्रदं नित्यं जीव-स्थानं शिवान्वितम् ॥१८॥

पञ्चमन्तु विशुद्धाख्यं चक्रं कण्ठे महाप्रभम् ।
मनो-विशुद्धिदं धूम्रं दल-षोडश-पङ्कजम् ॥१९॥

धूम्रम्—कृष्ण-लोहित-वर्ण-विशिष्टम् ।

तालौ षष्ठं कला-चक्रं द्वादशारं सुलोहितम् ।
ललनेति च संप्रोक्तं मनः-स्थानं मनोहरम् ॥२०॥

द्वादशारम्—द्वादश-दल-विशिष्टम् ।
मनः-स्थानम्—संकल्प-विकल्प-स्थानम् ।

आज्ञाख्यं सप्तमं चक्रं भ्रुवो र्मध्ये विराजितम् ।
गुर्वाज्ञा लभ्यते यत्र परमात्म-प्रकाशकम् ॥२१॥

मोक्ष-प्रदं परं तीर्थं द्वि-दलं श्वेत मुत्तमम् ।
प्रणवाख्यं महाबीजं भास्वरं यत्र राजितम् ॥२२॥

अस्मिंश्चक्रे महत्तत्त्वं प्रकृतिश्च विराजिते ।
शुद्ध-बुद्धान्तरात्मा च चक्रोर्ध्वांशे विराजते ॥१३॥

अन्तरात्मा—[ अन्तर + आत्मन् ] ( शरीर-मध्य-स्थित ) जीवात्मा ॥

अन्तरात्मा लसत्यत्र प्रदीप-कलिका-निभः ।
सुषुम्णा-विवरं सम्यग् भासयन्नात्म-तेजसा ॥२४॥

लसति—क्रीडति । भाति ।

अष्टमञ्च मनश्चक्रं द्वि-दलोर्ध्वं विराजितम् ।
शब्दादीना मवस्थानं षड्-दलं पङ्कजं शुभम् ॥२५॥

सुषुम्णा-विवरस्थानि चक्राण्येतानि भावयेत् ।
गुर्वादेशानुसारेण संभेद्यानि यथा-क्रमम् ॥२६॥

एतदूर्ध्वं शिरो-देशे सहस्रारं विराजितम् ।
ब्रह्म-धाम महापद्मं महारहस्य-मण्डितम् ॥२७॥

उद्यदादित्य-संकाशं श्वेत-वर्णं मधोमुखम् ।
महानन्दमयं पद्मं महामोक्ष-प्रदायकम् ॥२८॥

कर्णिकायां तदब्जस्य सोम-चक्रं सु-पावनम् ।
स्निग्ध-ज्योतिर्मयं पद्मं षोडशारं सुनिर्मलम् ॥२९॥

सोम-चक्रे निरालम्बं पुरं शुद्धञ्च मञ्जुलम् ।
पश्यत्यत्रेश्वरं योगी निर्वाण-भाव-संस्थितम् ॥३०॥

मञ्जुलम्—सुन्दरम् ।

निरालम्ब-पुरोर्ध्वेऽब्जं दल-द्वादश-संयुतम् ।
ज्ञानदं श्रीगुरु-स्थानं मणि-पीठादि-मण्डितम् ॥३१॥

तदूर्ध्वे तु सहस्रारे राजते चन्द्र-मण्डलम् ।
निर्मलं भास्वरं शुभ्रं परमाद्भुत-दर्शनम् ॥३२॥

चन्द्र-मण्डल-मध्यस्था परा शक्ति रमा कला ।
ऊर्ध्व-शक्ति-स्वरूपा सा नित्योदिता सुनिर्मला ॥३३॥

अमा—न माति परिच्छिनत्ति क्षयोदय-विशेषम् । सर्व-कला-व्यापकतया स्थिता चन्द्रस्य षोडशी कला। "अमा षोडश-भागेन देवि ! प्रोक्ता महाकला । संस्थिता परमा माया देहिनां देह-धारिणी ॥" "महामाया आधारशक्तिरूपा देहिनां देह-धारिणी । सा चन्द्र-मण्डलस्य षोडश-भागेन परिमिता चन्द्र-देह-धारिणी अमा-नाम्नी महाकलेति प्रोक्ता क्षयोदयरहिता नित्या ॥ तिथि-संज्ञिकैव इतरा अपि पञ्चदशकला दिवस-व्यवहारोपयोगिन्यः क्षयोदयवत्यः पञ्चदशतिथयो भवन्तीति तिथयः षोडशैव एवञ्चात्र सामान्य-विशेषरूपेण तिथिद्वैविध्यमुक्तं भवति । तत्र येयं अमेत्युक्ता क्षयोदय-वर्जिता ध्रुवा षोडशी कला तद्व्याप्तः काल स्तिथिसामान्यम् । यास्त्ववशिष्टा वृद्धि-क्षयोपेताः पञ्चदश-कला स्ताभिः विशिष्टकालविभाग स्तिथि-विशेष" इति ॥

अधो-मुखा सुसूक्ष्मा सा लोहिता षोडशी कला ।
तस्या नित्यं सुधा-धारा स्यन्दते विश्व-मङ्गला ॥३४॥

स्यन्दते—[स्यन्द्—to flow out.] स्रवति ।

अर्ध-चन्द्राकृति स्तत्र वह्नि-रूपा निबोधिका ।
अव्यक्त-नाद-रूपा सा तत्त्व-ज्ञान-प्रदायिका ॥३५॥

तस्योपरि त्वमा-मध्ये निर्वाणाख्या कला शुभा ।
इष्ट-देव-स्वरूपा सा सहस्रार्क-प्रभान्विता ॥३६॥

निर्वाणाख्य-कला-मध्ये निर्वोधिकोपरि स्थितः ।
पर-बिन्दु रिति ख्यातः शिवः शक्ति-समन्वितः ॥३७॥

पर-बिन्दौ तु या शक्ति र्निर्वाण-शक्ति रुच्यते ।
जीव-भूता जगन्माता महामाया चिदात्मिका ॥३८॥
सूर्य-कोटि-प्रभा-युक्ता शिवाभेद-मयी शिवा ।
प्रेम-धारां क्षरन्ती सा निर्वाण-दायिनी परा ॥३९॥

बिन्दु-मध्ये स्थितं शून्यं ब्रह्मणः पद मव्ययम् ।
शुद्धाद्वैत-स्वरूपञ्च योगि-गम्यं चिदात्मकम् ॥४०॥
निर्विकल्पं निरालम्बं निर्विकारं विनिष्क्रियम् ।
मुक्ति-रूपं परं-ब्रह्म निष्कलञ्च निरन्तरम् ॥४१॥
देश-काल-विहीनञ्च मायातीतं निरञ्जनम् ।
सत्य-रूपं सदानन्दं सदा-तृप्तं सदातनम् ॥४२॥

इदं प्रोक्तं समासेन, ज्ञातव्यानि बहूनि तु ।
सरहस्यानि सर्वाणि जानीयाद् गुरु-वक्त्रतः ॥४३॥
समासः—संक्षेपः ।

---

## पञ्चमोल्लासः ।

आधारे या स्थिता देवी कुण्डली विश्व-पावनी ।
शब्द-ब्रह्म-स्वरूपा सा शिवाभिन्ना सनातनी ॥१॥
मातृका-सुन्दरी नित्या चिदानन्द-स्वरूपिणी ।
प्रकृत्यष्टक-रूपा सा सर्व-भूत-प्रकाशिनी ॥२॥

प्रकृत्यष्टक-रूपा—"भूमिरापोऽनलो वायुः खं मनो बुद्धि रेव च। अहङ्कार इतीयं मे भिन्ना प्रकृति रष्टधा ॥" इति गीतायाम् ॥

तिरस्करोति या दीप्त्या प्रोत्थाने लोक-लोचनम् ।
यस्यार्चनं भवेत् सत्यं सर्व-क्षुद्रत्व-वारणम् ॥३॥
या ददाति महानन्दं प्राप्य शीर्ष-नले शिवम् ।
दहत्येव महामोहं देवैरपि दुरासदम् ॥४॥
प्रबुद्धा या भवेद् योगे योगिनां ब्रह्म-चारिणाम् ।
सुषुप्ता या भवेन्मूले विषयानन्द-सेविनाम् ॥५॥
विधातु यां कृपा-शक्ति मोचनायास्ति पञ्जरे ।
भजेत् तां कुण्डलीं देवीं राज-योग-स्थिराशयः ॥६॥

महानन्दः—मुक्तिः ॥ अतिशयाह्लादः ॥
शीर्ष—शिरः ॥ नलम्—पद्मम् ॥

दुरासदम्—दुर्जयम् । Unconquerable.
मूले—मूलाधारे ॥ पञ्जरः—शरीरम् ॥

योगाग्निना यदा तप्ता योगिनोऽक्लिष्ट-कर्मणः ।
देवी सा भुजगाकारा प्रबोधं याति कुण्डली ॥७॥
प्राप्नोति च सहस्रारं महायोग-प्रभावतः ।
तदा योगी भवेन्मुक्तः सर्व-संसार-दोषतः ॥८॥
आत्मान मन्तरात्मानं ज्ञानात्मानं स पश्यति ।
तुर्यात्मानं विजानाति परमात्मान मव्ययम् ॥९॥
दिव्य-नेत्रः स जानाति तत्त्वानि प्रलयोदयौ ।
सर्व-दर्शी भवत्येव सर्वज्ञो भ्रम-वर्जितः ॥१०॥
सर्व-शक्ति-समापन्नः सर्वोपाधि-विवर्जितः ।
ब्रह्म-रूपः प्रसन्नात्मा राजते मोदते सदा ॥११॥

आत्मा—जीवात्मा ॥ अन्तरात्मा—मनो-देवता । मनोऽवच्छिन्न-चैतन्यम् ॥ ज्ञानात्मा—बुद्धि-देवता । बुद्ध्यवच्छिन्न-चैतन्यम् ॥ तुर्यात्मा—तुर्य-दशास्थ-आत्मा ।

या शान्ति र्मुक्त-चित्तानां यत् सुखं विदितात्मनाम् ।
नैव तस्य परार्धांशं लभन्ते विषयैषिणः ॥१२॥

संसारासक्त-चित्ता ये माया-मोहित-मानसाः ।
भ्रमन्त्येव भवारण्ये शोक-दुःखेन कर्षिताः ॥१३॥

कर्माण्येव हि जीवानां संसार-प्राप्ति-हेतवः ।
स्नेहतो विषयं कश्चित् सेवमानः पतत्यधः ॥१४॥

सद्यः प्राण-हरं भोग्यं येन विह्वलितं जगत् ।
लब्ध्वा विषय-वैरस्यं त्रायेतात्मान मात्मना ॥१५॥

सद्यः प्राणहरम्—सद्यः प्राणमायु र्बलं वा हरति ।

मनो-वृत्तिं सुसंयम्य शीलवान् नियतेन्द्रियः ।
मोक्ष-योग मुपागम्य बोधयेत् कुण्डलीं नरः ॥१६॥

नरः—[ नृ (प्राप्तौ) + अ ] यः क्रमेण वृद्धिमाप्नोति । यस्यात्मा क्रमशः उत्कर्षं प्राप्नोति ।

प्राणायामा ज्जपाद् ध्यानात् सर्वत्र-ब्रह्म-दर्शनात् ।
भक्ति-योगादिकाच्छुद्धात् प्रबोधं याति कुण्डली ॥१७॥

योग्यो योगः परिग्राह्यो गुर्वादेशानुसारतः ।
स्वेच्छानुसारतो योगो नैव कार्यः कदाचन ॥१८॥

गुरुं योग-विदं लब्ध्वा सर्वज्ञं ज्ञान-निर्मलम् ।
प्राप्त-योगोपदेशः सन् प्राणायामं समाचरेत् ॥१९॥

---

## षष्ठोल्लासः ।

सर्व-शक्ति-स्वरूपञ्च सर्व-शक्ति-समन्वितम् ।
सर्व-शक्तीश्वरं ब्रह्म पूर्णमेकं विराजितम् ॥१॥

तस्यैव प्राण-शक्त्या च धृतं विश्वं चराचरम् ।
तस्यैव प्राण-शक्त्या च धृतं जीव-कलेवरम् ॥२॥

भूते भूते यथा ज्ञानं तारतम्येन लक्ष्यते ।
भूते भूते तथा शक्ति स्तारतम्येन दृश्यते ॥३॥

वशीकरोति यो योगी प्राण-शक्तिं महाबलाम् ।
तस्य वै वर्धते शक्ति रन्तश्च बहिरेव च ॥४॥
इच्छा-शक्तिः क्रिया-शक्ति र्ज्ञान-शक्ति रशेषतः ।
चिच्छक्तिश्च विवर्धन्त आनन्दश्च समन्ततः ॥५॥
शुभ-शक्ति-समावेशाद् अभयं याति सर्वतः ।
विशत्येव परं ब्रह्म चिदानन्द-निकेतनम् ॥६॥

इच्छा-शक्तिः—सर्वातिशायो शक्ति-विशेषः [ यद् वा परस्य प्रमातुः सिसृक्षात्मा परामर्शः । ] [निखिल-शक्ति-गर्भिणी इच्छा-शक्तिः सर्वत्र परिपुर्णस्वातन्त्र्यरूपा । ]

क्रियाशक्तिः—विश्वाकार-वैचित्र्यधारित्व-योग्यता ।

ज्ञान-शक्तिः—आमर्शात्मता ।

आनन्दः—आनन्द-शक्तिः, आह्लाद-शक्तिः ।

सर्वेषां प्राणिनां देहे देवी कुण्डलिनी स्थिता ।
प्राण-शक्तिं शरीरे तां वशीकुर्या दुपायतः ॥७॥

वशे कुण्डलिनी यस्य, वशे तस्य जगत्त्रयम् ।
न कुतोऽपि भयं तस्य नास्ति संसार-बन्धनम् ॥८॥

येनोपायेन जीवस्य प्राण-शक्ति र्वशीकृता ।
येनोपायेन वर्धन्ते शक्तयश्चाप्यशेषतः ॥९॥
उपायं तं सदा विद्यात् प्राणायामं शुभ-प्रदम् ।
योगं तं सन्ततं कुर्यात् प्राणेन मनसा मुदा ॥१०॥

मनसः प्राण-वायोश्च निरोधादेव निश्चितम् ।
सिध्यत्येष परो योगः सत्वरं चाति-सत्वरम् ॥११॥

यत्र प्राण-मरुत् तत्र तिष्ठत्येव ध्रुवं मनः ।
यत्र वै मानसं तत्र तिष्ठत्येव समीरणः ॥१२॥

प्रशान्ते मानसे सम्यक् प्रशाम्यति समीरणः ।
प्रशान्ते पवने सम्यक् प्रशाम्यति सदा मनः ॥१३॥

कश्चित् शमयते चित्तं ध्यानादिभि र्विशेषतः ।
कश्चित् शमयते प्राणं कुम्भकेन प्रयत्नतः ॥१४॥

उभाभ्यामेव योगाभ्यां प्राण-शक्ति र्वशीकृता ।
अधिकारानुसारेण योग मेकं समाचरेत् ॥१५॥

---

## सप्तमोल्लासः ।

स्यन्दनोऽयं चिते र्जीवो, जीवस्य मानसं रथः ।
मानसस्य रथः प्राणः, प्राणः स्पन्दमयो मतः ॥१॥

स्यन्दनः—रथः ।

तावद् भवति जीवस्य भ्रमणं मोह-कानने ।
यावन्न संक्षयं यान्ति स्पन्दनानि ह्यशेषतः ॥२॥

प्राण-स्पन्द-निरोधेन कुम्भकेन यतात्मनाम् ।
कुण्डली वश्यतां याति राति मोक्ष मनामयम् ॥३॥

प्राणो हि देहगो वायु रायामः कुम्भकः स्मृतः ।
प्राण-वायो र्जयः सम्यक् प्राणायामो निगद्यते ॥४॥

"पूरकं पूरणं वायोः, कुम्भकः स्थापनं क्वचित् । बहि र्निःसारणं तस्य रेचकः परिकीर्तितः ॥"

सर्व-शक्तीश्वरी देवी कुण्डली चिन्मयी परा ।
आधारे वर्तते सूक्ष्मा सार्ध-त्रिवलयान्विता ॥५॥

"सच्चिदानन्द-विभवात् सकलात् परमेश्वरात् । आसीच्छक्ति स्ततो नादो नादाद् बिन्दु-समुद्भवः ॥" "बिन्दुः शिवात्मको बीजं शक्ति र्नाद स्तयो र्मिथः । समवायः समाख्यातं सर्वागम-

विशारदैः ॥" इति सारदा-तिलकः ॥ "बिन्दुः शिवात्मक स्तत्र बीजं शक्त्यात्मकं स्मृतम् । तयो र्योगे भवेन्नाद स्ताभ्यो जाता स्त्रिशक्तयः ॥" इति क्रियासारः ॥ "आसीद् बिन्दु स्ततो नादो नादाच्छक्तिः समुद्भवा । नादरूपा महेशानी चिद्रूपा परमा कला ॥ नादाच्चैव समुत्पन्नो ह्यर्धबिन्दु र्महेश्वरि । सार्ध-त्रितय-बिन्दुभ्यो भुजङ्गी कुल-कुण्डली ॥" इति कुब्जिका-तन्त्रे ॥

प्राणाना मिन्द्रियाणाञ्च चालिका सा जव-प्रदा ।
जीवानां परमा शक्ति र्बन्ध-मोक्षैक-कारणम् ॥६॥

जवः—वेगः ।

मूलाधारे प्रसुप्ता सा भुजङ्गी शक्ति-रूपिणी ।
भवत्येव विमूढस्य बन्धनायाशिवाय च ॥७॥

प्रबुद्धा कुण्डली देवी प्राप्य मस्तक-पङ्कजम् ।
भवत्येव ध्रुवं पुंसो विमोक्षाय सुखाय च ॥८॥

प्राणायामाग्नि-योगेन प्राणवित्-साधकस्य च ।
प्रबोधं कुण्डली प्राप्य गच्छत्यूर्ध्वं सुषुम्णया ॥९॥

यथा हिंस्रो महाव्याघ्रो भवेद् वश्यः शनैः शनैः ।
तथैव सेवितो वायु रन्यथा हन्ति साधकम् ॥१०॥

संशयं भय मालस्यं दिवा-स्वप्नादिकञ्च यत् ।
विषमाशन-दोषञ्च भ्रान्तिञ्च विरति स्तथा ॥११॥
विचारेण प्रयत्नेन सन्ततं सन्त्यजेद् बुधः ।
प्राणायामं ततः कुर्यात् कुण्डल्या जागराय च ॥१२॥

---

## अष्टमोल्लासः ।

कुम्भको द्विविधः प्रोक्तः सहितः केवल स्तथा ।
केवलस्य सुसिद्ध्यन्तम् आश्रयेत् सहितं पुमान् ॥१॥

सहितः—रेचक-पूरक-युक्तः (कुम्भकः) ॥ केवलः—रेचक-पूरक-विवर्जितः (कुम्भकः)। "केवल-कुम्भके सिद्धे त्रिषु लोकेषु न तस्य दुर्लभं भवति। केवल-कुम्भकात् कुण्डलिनी-बोधो जायते ॥" इति शाण्डिल्योपनिषत् ॥

सूर्य-भेदादिका नन्यान् कुम्भकांश्च समभ्यसेत् ।
बन्ध-त्रयं यथा-कालं प्रयत्नेन समाचरेत् ॥२॥

कुम्भकाः—"सूर्य-नाड्या समाकृष्य वायुमभ्यास-योगिना। विधिवत् कुम्भकं कृत्वा रेचयेत् शीत-रश्मिना ॥ उदरे बहु-रोगघ्नं क्रिमिदोषं निहन्ति च। मुहुर्मुहुरिदं कार्यं सूर्यभेद मुदाहृतम् ॥

(२) नाडीभ्यां वायुमाकृष्य कुण्डल्याः पार्श्वयोः क्षिपेत् । धारये-दुदरे पश्चाद् रेचयेद् इडया सुधीः ॥ कण्ठे कफादि-दोषघ्नं शरीराग्नि- विवर्धनम् । नाडीजलापहं धातुगत-दोष-विनाशनम् ॥ गच्छत स्तिष्ठतः कार्यं उज्जाय्याख्यं तु कुम्भकम् । (३) मुखेन वायुं संगृह्य घ्राण-रन्ध्रेण रेचयेत् ॥ शीतलीकरणं चेदं हन्ति पित्तं क्षुधां तृषम् ॥ (४) स्तनयो रथ भस्त्रेव लोहकारस्य वेगतः । रेचयेत् पूरयेद् वायु माश्रमं देहगं धिया ॥ यथा श्रमो भवेद्देहे तथा सूर्येण पूरयेत् ॥ कण्ठ-संकोचनं कृत्वा पुनश्चन्द्रेण रेचयेत् । वात-पित्त-श्लेष्म-हरं शरीराग्निविवर्धनम् ॥ कुण्डली-बोधकं वक्त्र-दोषघ्नं शुभदं सुखम् । ब्रह्म-नाडी-मुखान्तःस्थ-कफाद्यर्गल-नाशनम् । सम्यग्बन्ध-समुद्भूतं ग्रन्थित्रय-विभेदकम् । विशेषेणैव कर्तव्यं भस्त्राख्यं कुम्भकं त्विदम् ॥" इति योगशिखोपनिषत् ॥

बन्ध-त्रयम्—उड्डीयान-जालन्धर-मूल-बन्धान् । "बन्धत्रय मथेदानीं प्रवक्ष्यामि यथाक्रमम् । नित्यं कृतेन तेनासौ वायो र्जय मवाप्नुयात् ॥ चतुर्णामपि भेदानां कुम्भके समुपस्थिते । बन्धत्रय मिदं कार्यं वक्ष्यमाणं मया हि तत् ॥ प्रथमो मूल-बन्धस्तु द्वितीयोड्डीयनाभिधः । जालन्धर स्तृतीयस्तु लक्षणं कथयाम्यहम् ॥ गुदं पार्ष्ण्या तु संपीड्य पायु माकुञ्चयेद् बलात् । वारंवारं यथा चोर्ध्वं समायाति समीरणः ॥ प्राणापानौ नाद-बिन्दू मूलबन्धेन चैकताम् । गत्वा योगस्य संसिद्धिं यच्छतो नात्र संशयः ॥ कुम्भकान्ते रेचकादौ कर्तव्य स्तूड्डियानकः ।

बन्धो येन सुषुम्णायां प्राणस्तूड्डीयते यतः ॥ तस्मादुड्डीयनाख्यो-ऽयं योगिभिः समुदाहृतः । उड्डीयानं तु सहजं गुरुणा कथितं सदा ॥ अभ्यसेत् तदतन्द्रस्तु वृद्धोऽपि तरुणो भवेत् । नाभे-रूर्ध्वमधश्चापि त्राणं (ताणम्—इति पाठान्तरम्) कुर्यात् प्रयत्नतः ॥ षाण्मासमभ्यसेन्मृत्युं जयत्येव न संशयः । पूरकान्ते तु कर्तव्यो बन्धो जालन्धराभिधः ॥ कण्ठ-संकोचरूपोऽसौ वायुमार्ग-निरो-धकः । कण्ठ माकुञ्च्य हृदये स्थापयेद् दृढ मिच्छया ॥ बन्धो जालन्धराख्योऽय ममृताप्यायकारकः । अधस्तात् कुञ्चनेनाशु कण्ठसंकोचने कृते ॥ मध्ये पश्चिमतानेन स्यात् प्राणो ब्रह्म-नाडिगः । वज्रासनास्थितो योगी चालयित्वा तु कुण्डलीम् ॥ कुर्यादनन्तरं भस्त्रीं कुण्डली माशु बोधयेत् । भिद्यन्ते ग्रन्थयो वंशे तप्तलोहशलाकया ॥ तथैव पृष्ठवंशः स्याद् ग्रन्थिभेदस्तु वायुना ॥" इति योगशिखोपनिषत् ॥ "पूरकान्ते च कर्तव्यो बन्धो जालन्धराभिदः । कुम्भकान्ते रेचकादौ कर्तव्य स्तूड्डि-याणकः ॥ अधस्तात् कुञ्चनेनाशु कण्ठसंकोचने कृते । मध्ये पश्चिमतानेन स्यात् प्राणो ब्रह्मनाडिगः ॥" इति शाण्डिल्योप-निषत् ॥ ध्यानबिन्दूपनिषदपि द्रष्टव्या ॥

एवमभ्यसनेनैव प्राणायामाग्नि-योगतः ।
उत्तिष्ठति हृदाकाशे नागरूपा महोज्ज्वला ॥३॥

प्राण-स्पन्द-निरोधाय कुण्डल्या बोध-हेतवे ।
उपाया बहवः सन्ति गुर्वादेशं प्रपालयेत् ॥४॥

येन केन प्रकारेण कुम्भकाविष्ट-मानसः।
मोक्ष-द्वारं तदन्ते च ब्रह्म-ग्रन्थिं प्रभेदयेत् ॥५॥

मोक्ष-द्वारम्—सुषुम्णाद्वारम्।

ततः कुण्डलिनी देवी पवनेनैव चालिता।
प्राप्नोत्यनाहतं पद्मं शब्द-ब्रह्मान्वितं परम् ॥६॥

पश्यत्यत्र स योगीन्द्रः स्वेष्ट-देवं मनोहरम्।
पश्यत्येव ततः स्वेष्टे नाना देवान् महाप्रभान् ॥७॥
पश्यत्येव स देवेषु स्वेष्ट-देवं सुखावहम्।
तदा सञ्जायते तस्मिन् परं प्रेम सुदुर्लभम् ॥८॥

विष्णु-ग्रन्थिं ततो भित्त्वा साकं जीवेन कुण्डली।
विशुद्धं कमलं याति रंहसा योग-चालिता ॥९॥

साकम्—सह॥ रंहसा—वेगेन।

हंस-रूपी महाज्योतिरर्ध-नारीश्वरः स्वयम्।
वितनोति सदा तत्र विशुद्धिं योगिनः पराम् ॥१०॥

तदेव भारती-स्थानं संप्राप्य स्वर-भूषितम्।
त्रिकालज्ञो भवेद् योगी योगाभ्यास-विपाकतः ॥११॥

विपाकः—पक्वता Ripening ; ripeness ; maturity ; development.

तत स्तन्नारती-स्थानाद् द्विदलं प्राप्यते वरम् ।
आज्ञा-चक्रं परं तीर्थं योगि-गम्यं सुपावनम् ॥१२॥

तत्र सन्दृश्यते ज्योति र्भास्वरादपि भास्वरम् ।
पश्यत्यत्र प्रभा-जुष्टं भगवन्तं भवेश्वरम् ॥१३॥

अभ्यासाद् योगिन श्चित्तम् अत्रैव प्रविलीयते ।
अद्वैतं निर्मलं ज्ञानं तदा तेनात्र लभ्यते ॥१४॥

रुद्र-ग्रन्थिं दृढं भित्त्वा सार्धं जीवेन कुण्डली ।
सहस्रारं महापद्मं याति सा वायु-चालिता ॥१५॥

कुल-कुण्डलिनी देवी ब्रह्माण्डेन समं शिवा ।
निःशेषं विलयं याति शिराब्जे परमे-शिवे ॥१६॥

सहस्रारे यदा चित्तं योगिनः प्रविलीयते ।
स-रहस्य मिदं पद्मं ज्ञात्वा मुक्तो भवत्यसौ ॥१७॥

निरालम्बं पुरं प्राप्य दृष्ट्वेश्वरं निरञ्जनम् ।
शुद्ध-सत्त्व-मयो योगी दोष-हीनो भवत्यरम् ॥१८॥

शिराब्ज-कर्णिका-मध्ये द्वादशारं महोत्पलम् ।
मुनिभिः सेवितं स्थानं पूर्णानन्द-रसाश्रयम् ॥१९॥
महोत्पलम्—पद्मम् ।

पश्यत्यत्र महायोगी मणि-पीठं महाप्रभम् ।
गुह्याद् गुह्यतमं रम्यं नाद-बिन्दु-समन्वितम् ॥२०॥

पश्यत्यत्र महाभागः कृपाऽऽलोक-सहायवान् ।
कृपा-शक्ति-समायुक्तं श्रीगुरुं श्रीजगद्‌-गुरुम् ॥२१॥
'गुरुरेव परं ब्रह्म'—सत्यं सत्यं स पश्यति ।
सत्यं पश्यति स ब्रह्म गुरु-रूपेण संस्थितम् ॥२२॥

नादः—[नद् (शब्दे)+घञ्] शब्दः ॥ अर्धचन्द्राकृति वर्णः । स च अनुस्वारवदुच्चार्यः । तत्पर्यायः—अर्धेन्दुः । अर्ध-मात्रा । सदाशिवः । अनुच्चार्या । तुरीया । विश्वमातृ-कला । परा । इति बीज-वर्णाभिधानम् ॥ ब्रह्म-स्वरूप-घोष-विशेषः । यथा—सच्चिदानन्दविभवात् सकलात् ( =मूर्तात् ) परमेश्वरात् । आसीच्छक्तिस्ततो नादो नादाद् बिन्दु-समुद्भवः ॥ नादो बिन्दुश्च बीजश्च स एव त्रिविधो मतः । भिद्यमानात् पराद् बिन्दो रुभयात्मा रवोऽभवत् ॥ स रवः श्रुति-सम्पन्नः शब्द-ब्रह्माभवत् परम् ॥ नादो घोषः । बिन्दुः प्रणवः । स च बीजञ्च । सर्व-वर्ण-प्रभवत्वात् । तथा च । समाहितात्मनो ब्रह्मन् ब्रह्मणः परमेष्ठिनः । हृद्याकाशादभून्नादो वृत्तिरोधाद् विभाव्यते ॥ ततोऽभूत् त्रिविदोङ्कारो योऽव्यक्तः प्रभवः स्वराट् । इति श्रीभागवतम् । नाभेरूर्ध्वं हृदिस्थानान्मारुतः प्राणसंज्ञकः । नदति ब्रह्मरन्ध्रान्ते तेन नादः प्रकीर्तितः ॥ अपि च आकाशाग्निमरुज्जातो नाभेरूर्ध्वं समुच्चरन् । मुखेऽभिव्यक्तिमायाति यः स नाद इतीरितः ॥ स च प्राणिभवोऽप्राणिभवश्चोभय-सम्भवः । आद्यः कायभवो वीणादिभवस्तु द्वितीयकः । तृतीयोऽपि च वंशादिभव इत्थं त्रिधा मतः । यदुक्तं ब्रह्मणः

स्थानं ब्रह्म-ग्रन्थिश्च यो मतः। तन्मध्ये संस्थितः प्राणः प्राणाद् वह्नि-समुद्भवः॥ वह्नि-मारुत-संयोगान्नादः समुपजायते। न नादेन विना गीतं न नादेन विना स्वरः। न नादेन विना राग स्तस्मा-न्नादात्मकं जगत्॥ न नादेन विना ज्ञानं न नादेन विना शिवः। नाद-रूपं परं ज्योति र्नादरूपी परो हरिः॥ इति सङ्गीत-दामोदरः॥ अपि च। नादरूपा महेशानी चिद्रूपा परमा कला॥ नादाच्चैव समुत्पन्नो अर्ध बिन्दु र्महेश्वरि। सार्ध त्रितय बिन्दुभ्यो भुजङ्गी कुल-कुण्डली॥ इति कुब्जिका-तन्त्रे॥ "बिन्दुः शिवात्मक स्तत्र बीजं शक्त्यात्मकं स्मृतम्। तयो र्योगे भवेन्नाद स्ताभ्यो जाता स्त्रिशक्तयः॥ इति क्रियासारः॥

अमा या षोडशी सौम्या कला कलङ्क-वर्जिता।
आप्लावयति योगीन्द्रं परमामृत-धारया॥२३॥

तत्त्व-ज्ञानं ततो लब्ध्वा निर्मलादपि निर्मलम्।
इष्ट-देवं मुदा पश्येत् सहस्रार्क-प्रभान्वितम्॥२४॥

इष्ट-देवे तदा दृष्टं ज्योति र्ब्रह्म निरामयम्।
इष्ट-देवे तदा दृष्टं सर्वं विश्वं चराचरम्॥२५॥
प्रत्येकं लोमकूपे तु विश्वानि लक्षकाणि च।
प्रति-विश्वे विराजन्ते ब्रह्म-विष्णु-शिवादयः॥२६॥
प्रति-विश्वे विराजन्ते भुवनानां चतुर्दश।
प्रत्येकं भुवने रम्ये शैलाश्च सागरा द्रुमाः॥२७॥

तदा पश्यति स ब्रह्म विश्व-रूपं सुखावहम् ।
विश्व-सृष्ट्यन्त-कर्तारं विश्वेशं विश्वतोमुखम् ॥२८॥
नाना-लीला-मयं देवं पूर्ण-प्रेम-स्वरूपकम् ।
स्व-प्रकाशं सदात्मानं सर्व-स्थानेषु गोपितम् ॥२९॥

पश्यतीशं प्रभूं देवं रोमाञ्चित-कलेवरः ।
अनन्य-भक्ति-संयोगात् शरणागति-भावतः ॥३०॥

संपश्यति तदाऽऽत्मानं जीवाख्यं प्रभया युतम् ।
तं जानाति शिवाभिन्नं जन्म-मृत्यु-विवर्जितम् ॥३१॥

सर्व-सङ्गं परित्यज्य तदा मौनं समाश्रितः ।
निरालम्बं मनः कृत्वा योगी योग-परायणः ॥३२॥
परबिन्दु-स्थिते शून्ये चिन्मये ब्रह्मणः पदे ।
विलापयति-कुण्डल्या सहात्मानं झटित्यसौ ॥३३॥

ततो दृष्टं परं ब्रह्म निर्गुणं निरुपाश्रयम् ।
निर्विकारं निराकारं निर्विकल्पं सनातनम् ॥३४॥
द्वैत-हीनं चिदानन्दं शान्त मेकं निरंशकम् ।
हेयोपादेय-हीनञ्च मोक्ष-रूप मनामयम् ॥३५॥

अनन्तरं महायोगी सदा सत्य-परायणः ।
शिरोबद्धं महावायुम् आनीय हृदयाम्बुजम् ॥३६॥

सुदृढ-ध्यान-योगेन पश्यति ज्ञान-चक्षुषा ।
गुणातीतं परं ब्रह्म तदेवामृत मव्ययम् ॥३७॥

पश्यत्येव बहिर्देशे तदेव निर्गुणं विभुम् ।—
यद् दृष्टं हि सहस्रारे हृदये तद् बहिश्च तत् ॥३८॥
तदेव वर्णितं सत्यं वेदानाञ्च चतुष्टये ।
तदेव गुरुणा स्पष्टम् अनुभूतं मुहुर्मुहुः ॥३९॥

तदा स गत-सन्देहो योग-निष्ठो धृतोद्यमः ।
पर-बिन्दु-स्थिते शून्ये समाधिं कुरुतेऽनिशम् ॥४०॥

शिवं दृष्ट्वा शिवं ज्ञात्वा भवत्येव शिव स्तदा ।
शिवोऽहं कुरुते नित्यं नान्यत् किञ्चित् स पश्यति ॥४१॥

सोऽहं-वृत्ति महं-वृत्तिं त्यक्त्वा प्रशान्त-मानसः ।
शून्यादूर्ध्वं महाशून्यं सुगम्भीरं स गच्छति ॥४२॥

वशीकृत-समाधिः स भवत्यानन्द-विग्रहः ।
चित्-स्वभावः सदा-पूर्णः स्वतन्त्रः परमेश्वरः ॥४३॥
अद्वितीयोऽपरिच्छिन्नो मायातीतः परात्परः ।
सर्वोपाधि-विनिर्मुक्तः प्रशान्तः परमः-शिवः ॥४४॥

कृत-कृत्य स्तदा भूत्वा जीवन्मुक्तः स केवलः ।
पूर्ण-ब्रह्म-स्वरूपेण स्वात्मन्येव विराजते ॥४५॥

पूर्ण-ब्रह्म-पदं नित्यम् एवं प्राप्नोति मानवः ।
प्राणायाम-सहायेन ज्ञान-वैराग्य-मण्डितः ॥४६॥

प्राणायाम-बलेनैव समुत्थाप्योरगाङ्गनाम् ।
ब्रह्म-रन्ध्रं समानीय कृत्वा समाधि मुत्तमम् ॥४७॥
प्रापयेद् ब्रह्म-मार्गेण मूलाधार मतः-परम् ।
कुण्डलीं तां परां देवीं परानन्द-प्रदायिनीम् ॥४८॥

उरगाङ्गना—कुण्डली । भुजङ्गी ।

शिराब्ज-गमने दीप्ता द्वादशादित्य-सन्निभा ।
शिवा प्रति-प्रयाणे सा परमामृत-विग्रहा ॥४९॥

लय-क्रमेण सा देवी गच्छत्यूर्ध्वं सु-योगतः ।
सृष्टि-क्रमेण तां नित्यं मूलाधारं समानयेत् ॥५०॥

एवं समभ्यसेद् धीमान् अहन्यहनि मारुतम् ।
एव मभ्यसनेनैव कृन्तेत् संसार-बन्धनम् ॥५१॥

---

## नवमोल्लासः ।

मानसस्य समीरस्य विलयो यः परात्मनि ।
समाधिना, स एव स्यान्निर्वाणस्यैक-कारणम् ॥१॥

यदा ते विलयं यातो योगाभ्यास-प्रभावतः ।
तदा जीव श्चिदानन्दे ब्रह्मणि प्रविलीयते ॥२॥

मानसे शङ्करे लीने प्राणश्च नैव वेपते ।
मानसे शङ्करे लीने जीवो भवति मुक्ति-भाक् ॥३॥

वेपते—कम्पते ।

काम-संकल्प-रूपेण वर्तते मानसं नृणाम् ।
काम-त्यागाद् भवेदेतत् शुद्धं ब्रह्म निरामयम् ॥४॥

ऐहिकामुष्मिकं सर्वं काम-भोग-सुखादिकम् ।
त्यागिनः शिव-भक्तस्य सुखस्य नो शतांशकम् ॥५॥

ऐहिकम्—इह भवम् ॥ आमुष्मिकम्—[अमुष्मिन् + इक् (ष्णिक) (भवार्थे)] पारलौकिकम् । लोकान्तरिकम् ।

सर्व-भूतेषु यः पश्येत् शिवमेकं परात्परम् ।
शिवे यस्य परा प्रीतिः स एव भक्त उच्यते ॥६॥

शिवे यस्य परा भक्ति रनन्या ममता शुभा ।
प्राणायामादिभि र्योगै र्नास्ति तस्य प्रयोजनम् ॥७॥

भक्ति र्याऽविकृता नित्यं सुदिने दुर्दिने समा ।
काम-गन्ध-विहीना च, मता सा भक्ति रुत्तमा ॥८॥

भक्तार्थं क्रियते भक्तिः सर्वाभिसन्धि-वर्जिता ।
स्वाभाविकी तु या भक्ति, र्मता सा भक्ति रुत्तमा ॥९॥

यदा विष्णौ त्रिलोकेशे भक्ति र्भवति नैष्ठिकी ।
सर्वान् कामां स्तदा हित्वा चित्तं सत्त्वे प्रसीदति ॥१०॥

नैष्ठिकी—[निष्ठा (दृढता)+इक् (अस्त्यर्थे) किंवा ष्णिक् (युक्तार्थे)] निष्ठायुक्ता। सर्वथा स्थितिशीला।

हित्वा—त्यक्त्वा।

सर्वेभ्यो मोक्ष-विघ्नेभ्यो भगवान् भक्त-वत्सलः ।
पालयत्येव सदा भक्तान् मोक्षं प्रापयति ध्रुवम् ॥११॥

अनायासेन भक्तेन तत्त्व-ज्ञानं प्रलभ्यते ।
तस्मात् सर्वं परित्यज्य भक्ति-निष्ठः सदा भवेत् ॥१२॥

प्रलभ्यते—विशेषेण लभ्यते।

प्रेम-भक्ति-युतो नित्यं मन्त्रं ध्यानं समभ्यसेत् ।
जपाद् ध्यानाद् भवेन्मुक्तिः सत्यं सत्यं सुनिश्चितम् ॥१३॥

अप्रमादाद् भवेत् सिद्धि र्मन्त्रराज-प्रसादतः ।
चैतन्य-सहितो मन्त्रः सर्व-सिद्धि-करः परः ॥१४॥

शर्करायाश्च माधुर्यं यथा ज्योत्स्ना तमोहरे ।
सब्रह्माण्डं तथा मन्त्रे पूर्ण-ब्रह्म विराजते ॥१५॥
तमोहरः—चन्द्रः ।

योग्य-साधन-संयोगाद् बीजा न्निर्गच्छति द्रुमः ।
योग्य-साधन-संयोगात् प्रकटेन्मन्त्रतः शिवः ॥१६॥
प्रकटेत्—प्रकाशितो भवेत् ।

मनुष्यः प्राणिनां मध्ये मन्तुं शक्नोति केवलः ।
मन्तव्यः सर्वदा मन्त्रो मन्तुना मोक्ष-कामिणा ॥१७॥
मन्तुना—मनुष्येण ।

"मन्त्रं वा साधयिष्यामि देहं वा पातयाम्यहम् ।'—
एवं भावं समाश्रित्य जपेन्मन्त्रं निरन्तरम् ॥१८॥

अभ्यास-योगतो मन्त्रः स्वाभाविको भविष्यति ।
स्वप्नेऽपि योगिन श्चित्ते मन्त्र-धारा प्रवक्ष्यति ॥१९॥
रक्ते च प्राण-वायौ च मन्त्रो नर्तिष्यति ध्रुवम् ।
मन्त्र-मया भविष्यन्ति देहस्थाः परमाणवः ॥२०॥
सदा गास्यति तन्मन्त्रं सिन्धुः सागर-गामिनी ।
कीर्तयिष्यति तन्मन्त्रं कादम्बानां कल-ध्वनिः ॥२१॥
कूजिष्यन्ति महामन्त्रं विहगा व्योम-चारिणः ।
घोषयिष्यति तन्मन्त्रं जगत्-प्राणः समीरणः ॥२२॥

कीर्तयिष्यति तन्मन्त्रं प्रकृति विश्व-मातृका ।
जगन्मयो भवे न्मन्त्रो भवे न्मन्त्रमयं जगत् ॥२३॥
कादम्बः—कल-हंसः ॥ कलः—मधुराव्यक्त-ध्वनिः ।

एवं मन्त्र-प्रभावेण राम-प्रेम लभेत च ।
रामे विगलितो भूत्वा रामः सर्वमयो भवेत् ॥२४॥

नाम जेगीयतां शम्भोः संगृह्य करतालिकाम् ।
सङ्कीर्तन-सुधा-धारां पेपीयतां प्रशान्तिदाम् ॥२५॥
दाध्यायतां हरे रूपं यम-भीति-निवारणम् ।
मन्मन्यतां गुणं विष्णो र्बाह्यान्तः-शुद्धिदं परम् ॥२६॥
नंनम्यतां महादेवं भूते भूते व्यवस्थितम् ।
प्रदरीदृश्यतां विष्णुं सर्वत्र सर्व-वस्तुषु ॥२७॥

नाम—"हरिनाम-महामन्त्रै र्नश्येत् पाप-पिशाचकः ।" "हरे रग्रे स्वरै रुच्चै र्नृत्यंस्तन्नाम-कृन्नरः । पुनाति भुवनं विप्रा गङ्गादि-सलिलं यथा ॥" "हरिनाम-महावज्रं पाप-पर्वत-दारणम् ॥" इति पाद्मे ॥

जेगीयताम्—[गै (गाने) + यङ् (आतिशय्ये, पौनः-पुन्ये)] ॥ पेपीयताम्—[पा (पाने) + यङ्] ॥ दाध्यायताम्—[ध्यै(ध्याने) + यङ्] ॥ मन्मन्यताम्—मन् (मनने, चिन्तायाम्) + यङ्] ॥ नंनम्यताम्—[नम् (नमस्कारे) + यङ्] ॥ प्रदरीदृश्यताम्—[प्र + दृश् (दर्शने) + यङ्] ।

पश्येद् विश्व-नटेश न्तं हसन्तं चन्द्र-मण्डले ।
पश्ये लीलामयं सौम्यं नृत्यन्तं तटिनी-जले ॥२८॥
धावन्तं मारुते पश्येद् गायन्तं निर्झरे शिवम् ।
दीव्यन्तं बालके पश्येद् गच्छन्तं पथिके हरम् ॥२९॥
हिंसन्तं श्वापदे पश्येत् तपन्त न्तं विकर्तने ।
हरिं पश्येत् सदा रुग्ने रोगे रोग-विनाशने ॥३०॥
श्वसन्तं सर्व-जीवेषु पश्येत् तं सर्व-जीवनम् ।
वहमानं हरिं पश्येत् शोणिते लोक-शङ्करम् ॥३१॥
दीव्यन्तम्—क्रीडन्तम् ॥ विकर्तनः—सूर्यः ॥

निर्मांति कुसुमं रम्यम् अत्रारण्ये मनोरमे ।
वर्णयत्यम्बुदं तत्र निर्मले गगनाङ्गणे ॥३२॥
वर्णयति—[वर्ण (colour, शुक्लादि-क्रियायाम्) ]

द्यौ मूर्धा तस्य देवस्य चन्द्रादित्यौ विलोचने ।
चरणौ धरणी तस्य पश्येत् तं सर्व-लोचनम् ॥३३॥

ब्रह्माण्डं जठरे तस्य ब्रह्मणः परमात्मनः ।
सर्वं तं सर्वगं पश्येत् सर्वान्तर्यामिणं विभुम् ॥३४॥

तमेकं सर्वदा पश्येद् अनन्तञ्चापराजितम् ।
अन्तर्बहिश्च तं पश्येत् चिन्मयानन्द-रूपिणम् ॥३५॥

सर्वेन्द्रियैः सदा पश्येद् आनन्दायतनं शिवम् ।
सर्वेन्द्रियैः पिबेन्नित्यं रसालं रस-नायकम् ॥३६॥

पिबन् पिबन् सदा पश्येत् जगदाह्लाद-कारकम् ।
पश्यन् पश्यन् पिबेन्नित्यम् अमृतानन्द-रूपकम् ॥३७॥

सर्वाङ्गे स्वं परिध्यानम् आसेवेत निरन्तरम् ।
प्रत्येकस्मिन् पराणौ च पश्येत् तं विश्व-रूपिणम् ॥३८॥

सर्व-मङ्गल-मङ्गल्यं सर्व-पावन-पावनम् ।
आनन्द-सिन्धु-संमग्नः पश्येत् तम् अतिशोभनम् ॥३९॥

एवं सन्दर्शनेनैव लीयते च चराचरम् ।
अद्वये सच्चिदानन्दे पूर्णे शान्ते परात्मनि ॥४०॥

ज्ञात्वा सम्यक् परं ब्रह्म समाधौ तदनुग्रहात् ।
ब्रह्मैव भवति प्राज्ञो ध्रुवं ब्रह्म-विचिन्तयन् ॥४१॥

अतः सर्व-प्रयत्नेन ध्यान-योगं समाश्रयेत् ।
ध्यान-योग-प्रसादेन तरेन्मायां सुदुस्तराम् ॥४२॥
ध्यानयोगः—ध्यानमेव योगः । ध्यान-रूपो योगः ॥

ध्येयासक्तं मनो ध्येयं यदा पश्यति केवलम् ।
वेत्ति नो किञ्चिदप्यन्यद्—ध्यानमेत न्निगद्यते ॥४३॥

यथा ध्यान-प्रभावेण कीटोऽपि भ्रमरायते ।
तथा ध्यानस्य सामर्थ्यात् जीवो भवति केवलः ॥४४॥

चेष्टा-सहकृतं योगं कुर्वन्नभ्यासतः पुमान् ।
चेष्टा-हीनं सदा-भानं ब्रह्मणो लभते स्थिरम् ॥४५॥

नारण्य-संश्रयाद् योगी न नासाग्र-विलोकनात् ।
न बहु-श्रवणाच्चैव न बाह्योपाय-सेवनात् ॥४६॥

सिध्यत्येव सदा योगः पर-ब्रह्म-सुचिन्तनात् ।
सिध्यत्येव सदा ध्यानं स्मरणाभ्यास-गौरवात् ॥४७॥

दानवा मानवा देवाः पशवश्च द्रुमादयः ।
ग्रहाश्च सागराः शैला मनो-बुद्धीन्द्रियाणि च ॥४८॥
भूतानि सर्व-कर्माणि भावाश्च चिन्तितानि च ।
सर्वमेव हरे रूपं हरि रेको हि वर्तते ॥४९॥

यत्र यत्र मनो याति तत्र पश्ये न्निरञ्जनम् ।
निष्कलं परमं ब्रह्म सच्चिदानन्द-लक्षणम् ॥५०॥

सदा ध्यायेत् सदानन्दं स्वेष्ट-देवं महोज्ज्वलम् ।
अविचिन्त्य-महाशक्तिं कृत्वैकाग्रमनङ्गकम् ॥५१॥
अनङ्गकम्—मनः । चित्तम् ।

इत्थं ध्यानादिकं कर्म यदि नाभिमतं भवेत् ।
भ्रू-मध्ये वा शिराब्जे वा हृदि तेजोऽवलोकयेत् ॥५२॥

सूर्यव च्चन्द्रवत् किंवा प्रदीप-कलिका-निभम् ।
सच्चिदानन्द-तेजश्च सर्वदैवावलोकयेत् ॥५३॥

अथवा परमाकाशं प्रकाशानन्द-लक्षणम् ।
व्यापकं मोक्षदं पश्येत् सर्वदा भव-तारकम् ॥५४॥

किंवा नादानुसन्धानं कुर्यान्ना लय-साधनम् ।
किंवा योगं निरालम्बम् आश्रयेद् विजने वसन् ॥५५॥

नादानुसन्धानम्—"नादो दशविधो जायते। चिणीति प्रथमः। चिञ्चिणीति द्वितीयः। घण्टानाद स्तृतीयः। शङ्खनाद श्चतुर्थः। पञ्चम स्तन्त्रीनादः। षष्ठस्तालनादः। सप्तमो वेणुनादः। अष्टमो मृदङ्गनादः। नवमो भेरीनादः। दशमो मेघनादः। नवमं परित्यज्य दशममेवाभ्यसेत्। प्रथमे चिञ्चिणी गात्रं द्वितीये गात्र-भञ्जनम्। तृतीये खेदनं याति चतुर्थे कम्पते शिरः॥ पञ्चमे स्रवते तालु षष्ठेऽमृत-निषेवणम्। सप्तमे गूढविज्ञानं परा वाचा तथाष्टमे॥ अदृश्यं नवमे देहं दिव्यं चक्षु स्तथामलम्। दशमे परमं ब्रह्म भवेद् ब्रह्मात्मसन्निधौ॥ तस्मिन् मनो विलीयते मनसि संकल्पविकल्पे दग्धे पुण्यपापे सदाशिवः शक्त्यात्मा सर्वत्रावस्थितः स्वयं-ज्योतिः शुद्धो बुद्धो नित्यो निरञ्जनः शान्तः प्रकाशत इति॥" इति हंसोपनिषत्॥ "सिद्धासने स्थितो योगी मुद्रां सन्धाय वैष्णवीम् ('अन्तर्लक्ष्यं बहिर्दृष्टि र्निमेषोन्मेषवर्जिता। एषा सा वैष्णवी मुद्रा सर्वतन्त्रेषु गोपिता॥' इति शाण्डिल्योपनिषत्॥) शृणुयाद् दक्षिणे कर्णे नादमन्तर्गतं सदा॥ अभ्यस्यमानो नादोऽयं बाह्यमावृणुते ध्वनिः। पक्षाद्विपक्ष

मखिलं जित्वा तुर्यपदं व्रजेत् ॥ श्रूयते प्रथमाभ्यासे नादो नानाविधो महान् । वर्धमाने तथाभ्यासे श्रूयते सूक्ष्मसूक्ष्मतः ॥ आदौ जलधिजीमूतभेरीनिर्झरसम्भवः । मध्ये मर्दलशब्दाभो घण्टाकाहलज स्तथा ॥ अन्ते तु किंकिणीवंशवीणाभ्रमर-निस्वनः । इति नानाविधा नादाः श्रुयन्ते सूक्ष्मसूक्ष्मतः ॥ महति श्रूयमाणे तु महाभेर्यादिकध्वनौ । तत्र सूक्ष्मं सूक्ष्मतरं नादमेव परामृशेत् ॥ घनमुत्सृज्य वा सूक्ष्मे सूक्ष्ममुत्सृज्य वा घने । रममाणमपि क्षिप्तं मनो नान्यत्र चालयेत् ॥ यत्र कुत्रापि वा नादे लगति प्रथमं मनः । तत्र तत्र स्थिरीभूत्वा तेन सार्धं विलीयते ॥ विस्मृत्य सकलं बाह्यं नादे दुग्धाम्बुवन्मनः । एकीभूयाथ सहसा चिदाकाशे विलीयते ॥ उदासीन स्ततो भूत्वा सदाभ्यासेन संयमी । उन्मनीकारकं सद्यो नादमेवावधारयेत् ॥ सर्वचिन्तां समुत्सृज्य सर्वचेष्टाविवर्जितः । नादमेवानुसन्दध्यान्नादे चित्तं विलीयते ॥ मकरन्दं पिवन् भृङ्गी गन्धान्नापेक्ष्यते यथा । नादासक्तं सदा चित्तं विषयं न हि काङ्क्षति ॥ बद्धः सुनादगन्धेन सद्यः संत्यक्तचापलः । नादग्रहणतश्चित्तमन्तरङ्गभुजङ्गमः ॥ विस्मृत्य विश्वमेकाग्रः कुत्रचि न्न हि धावति ॥ मनो मत्तगजेन्द्रस्य विषयोद्यानचारिणः । नियामन-समर्थोऽयं निनादो निशिताङ्कुशः ॥ नादोऽन्तरङ्गसारङ्गबन्धने वागुरायते । अन्तरङ्गसमुद्रस्य रोधे वेलायतेऽपि वा ॥ ब्रह्मप्रणवसंलग्ननादो ज्योतिर्मयात्मकः । मन स्तत्र लयं याति तद्विष्णोः परमं पदम् । तावदाकाश संकल्पो

यावच्छब्दः प्रवर्तते । निःशब्दं तत् परं ब्रह्म परमात्मा समीयते ॥ नादो यावन् मन स्तावन् नादान्तेऽपि मनोन्मनी । सशब्दश्चाक्षरे क्षीणे निःशब्दं परमं पदम् ॥ सदा नादानुसन्धानात् संक्षीणा वासना तु या । निरञ्जने विलीयेते मनोवायू न संशयः ॥ नादकोटिसहस्राणि बिन्दुकोटिशतानि च । सर्वे तत्र लयं यान्ति ब्रह्मप्रणवनादके ॥ सर्वावस्थाविनिर्मुक्तः सर्वचिन्ताविवर्जितः । मृतवत् तिष्ठते योगी स मुक्तो नात्र संशयः ॥ शङ्खदुन्दुभि-नादञ्च न शृणोति कदाचन । काष्ठवज् ज्ञायते देह उन्मन्यवस्थया ध्रुवम् । न जानाति स शीतोष्णं न दुःखं न सुखं तथा ॥ न मानं नावमानं च सन्त्यक्त्वा तु समाधिना । अवस्थात्रय मन्वेति न चित्तं योगिनः सदा । जाग्रन्निद्रा-विनिर्मुक्तः स्वरूपावस्थता मियात् ॥ दृष्टिः स्थिरा यस्य विना सदृश्यं वायुः स्थिरो यस्य विना प्रयत्नम् । चित्तं स्थिरं यस्य विनावलम्बं स ब्रह्मतारान्तरनादरूपः ॥" इति नादबिन्दूपनिषत् ॥ "अक्षरं परमो नादः शब्दब्रह्मेति कथ्यते । मूलाधारगता शक्तिः स्वाधारा बिन्दु-रूपिणी ॥ तस्यामुत्पद्यते नादः सूक्ष्मबीजादिवाङ्कुरः । तां पश्यन्तीं विदु र्विश्वं यया पश्यन्ति योगिनः ॥ हृदये व्यज्यते घोषो गर्जत्पर्जन्यसन्निभः । तत्र स्थिता सुरेशान मध्यमेत्यभिधीयते ॥ प्राणेन च स्वराख्येन प्रथिता वैखरी पुनः । शाखा पल्लवरूपेण ताल्वादिस्थानघट्टनात् ॥ अकारादिक्षकारान्ताव्यक्षराणि समीरयेत् । अक्षरेभ्यः पदानि स्युः पदेभ्यो वाक्य-

सम्भवः ॥ सर्वे वाक्यात्मका मन्त्रा वेद-शास्त्राणि कृत्स्नशः । पुराणानि च काव्यानि भाषाश्च विविधा अपि ॥ सप्त स्वराश्च गाथाश्च सर्वे नाद-समुद्भवाः । एषा सरस्वती देवी सर्व-भूतगुहाश्रया ॥ वायुना वह्नियुक्तेन प्रेर्यमाणा शनैः शनैः । तद्विवर्तपदैर्वाक्यै रित्येवं वर्तते सदा ॥ य इमां वैखरीं शक्तिं योगी स्वात्मनि पश्यति । स वाक् सिद्धि मवाप्नोति सरस्वत्याः प्रसादतः ॥ वेद-शास्त्र-पुराणानां स्वयं कर्ता भविष्यति ॥ इति योगशिखोपनिषत् ॥ सौभाग्यलक्ष्म्युपनिषदपि द्रष्टव्या ॥

योगं निरालम्बम्—सालम्ब-निरालम्ब-योगौ कथमपि ब्रूहीति । सालम्बस्तु समस्तकर्मातिदूरतया करचरणादिमूर्ति-विशिष्टं मण्डलाद्यालम्बनं सालम्बयोगः । निरालम्बस्तु समस्त-नामरूपकर्मातिदूरतया सर्वकामादान्तःकरणवृत्तिसाक्षितया तदा-लम्बनशून्यतया च भावनं निरालम्बयोगः । अथ च निरालम्ब-योगाधिकारी कीदृशो भवति । अमानित्वादि लक्षणोपलक्षितो यः पुरुषः स एव निरालम्बयोगाधिकारी कार्यः कश्चिदस्ति ॥" इति त्रिपाद्विभूतिमहानारायणोपनिषत् ॥

सर्वेऽप्येते भवन्त्येव जन्म-मृत्यु-भयापहाः ।
समीहेत सदा ध्यानं गुर्वादिष्टं तपोधनः ॥५६॥

समीहेत—कुर्यात् ।

महाध्यान-बलेनैव भवेच्छुद्धः समाहितः ।
निस्पन्देन्द्रिय-देहश्च स्वात्म-लीन-मनोऽनिलः ॥५७॥

समाहितः—समाधिस्थः॥ समाधि स्तु द्विविधः। सविकल्पको निर्विकल्पश्चेति। तत्र सविकल्पको नाम ज्ञातृ-ज्ञानादि-विकल्प-लयानपेक्षया अद्वितीय वस्तुनि तदाकाराकारितायाश्चित्त-वृत्तेरवस्थानम्। तदा मृण्मयगजादि-भानेऽपि मृद्भानवत् द्वैत-भानेऽप्यद्वैतं वस्तु भासते। तदुक्त मतियुक्तैः।—दृशिस्वरूपं गगनोपमं परं सकृद्विभातं त्वजमेकमव्ययम्। अलेपकं सर्वगतं यदद्वयं तदेव चाहं सततं विमुक्त म्॥ दृशिस्तु शुद्धोऽहम् अविक्रियात्मको न मेऽस्ति बन्धो न च मे विमोक्ष इत्यादि॥ निर्विकल्पकस्तु ज्ञातृ-ज्ञानादि भेदलयापेक्षयाऽद्वितीयवस्तुनि तदाकाराकारितायाबुद्धिवृत्ते रतितरा मेकीभावेनावस्थानम्। तदा तु जलाकाराकारितलवणानवभासेन जलमात्रावभासवदद्वितीय-वस्त्वाकाराकारित-चित्तवृत्त्यनवभासेनाद्वितीयवस्तुमात्रम् एव अवभासते। तत श्चास्य सुषुप्तेश्चाभेदशङ्का न भवति उभयत्र वृत्त्यभाने समानेऽपि तत् सद्भावासद्भावमात्रेणानयोः भेदोपपत्तेः॥ इति वेदान्तसारः॥

न शृणोति न जानाति न संकल्पयते मनः।
न बुध्यते महायोगी ब्रह्मलीनो भवत्यथ॥५८॥

यथा जले जलं यद्वत् क्षीरे क्षीरं समर्पितम्।
अविशेषः शिवे जीवः सर्वथैव भवेत् तथा॥५९॥

एवं श्लाघ्य-पदं प्राप्तुं त्यक्त-संसार-वासनाः ।
अविश्रान्तं यतन्ते च मुनयो योगि-पुङ्गवाः ॥६०॥

नृ-देहं तरणिं प्राप्य कर्णधारं गुरुं तथा ।
अधुनैव तरेद् विद्वान् घोर-संसार-सागरम् ॥६१॥

भक्त्या विचरणं नित्यं ब्रह्मण्येव परात्परे ।
सर्वथा पालयेद् धीमान् ब्रह्मचर्य मविप्लुतम् ॥६२॥

अविप्लुतम्—अक्षतम् । अविनष्टम् । अबाधं प्रवर्तितम् । सम्यगाचरितम् ।

यत्र यत्र मनो याति तत्र तत्र सदाशिवः ।
त्यक्त्वा विभुं सदात्मानं मनः कुत्र गमिष्यति ॥६३॥

धर्मो ब्रह्म व्रतो ब्रह्म कर्म ब्रह्म सनातनम् ।
ज्ञाताज्ञाते तथा ब्रह्म सर्वं ब्रह्ममयं ध्रुवम् ॥६४॥

सर्वेषामेव योगानां ब्रह्म-योगः परो मतः ।
ध्यायेन्नित्यं परं ब्रह्म पापालस्यादि-वर्जितः ॥६५॥

---

## दशमोल्लासः ।

योऽय मन्नमयो ह्यात्मा स वै प्राणमये स्थितः ।
योऽयं प्राणमयो ह्यात्मा मनोमये प्रतिष्ठितः ॥१॥
योऽयं मनोमयो ह्यात्मा स वै ज्ञानमये स्थितः ।
योऽयं ज्ञानमयो ह्यात्मा सदाऽऽनन्दमये स्थितः ॥२॥
तथाऽऽनन्दमयो ह्यात्मा परमात्मनि संस्थितः ।
आत्म-संस्थः परात्मा तु नैवान्यस्मिन् प्रतिष्ठितः ॥३॥

कोषा इवात्माच्छादकत्वेन कोषाः । ते च पञ्चविधाः । यथा— (१) अन्न-विकारत्वात् स्थूल-शरीरम्—अन्नमय-कोषः ॥ (२) पञ्चकर्मेन्द्रियसहितप्राणपञ्चकं—प्राणमय-कोषः ॥ (३) पञ्च-ज्ञानेन्द्रियसहितं मनः—मनोमय-कोषः ॥ (४) पञ्च-ज्ञानेन्द्रियसहिता बुद्धिः—विज्ञानमय-कोषः ॥ (५) अहङ्कारात्मकोऽविद्यात्मको वा—आनन्दमय-कोषः ॥ इति शिवगीतामतम् ॥ अपि च । (१) पितृभुक्तान्नजाद् वीर्याज्जातोऽन्नेनैव वर्धते । देहः सोऽन्नमयो नात्मा प्राक् चोर्ध्वं तदभावतः ॥ इत्यन्नमय-कोषः ॥ (२) पूर्णो देहे बलं यच्छन्नक्षाणां यः प्रवर्तकः । वायुः प्राणमयो नासावात्मा चैतन्य-वर्जनात् ॥ इति प्राणमय-कोषः ॥ (३) अहन्तां ममतां देहे गृहादौ च करोति यः । कामाद्यवस्थाया भ्रान्तो

नासावात्मा मनोमयः ॥ इति मनोमय-कोषः ॥ (४) लीना सुप्तौ वपुर्बोधे व्याप्नुयादानखाग्रगा। चिच्छायोपेतधीर्नात्मा विज्ञान-मय शब्दभाक् । इति विज्ञानमय-कोषः ॥ (५) काचिदन्त-र्मुखावृत्तिरानन्द-प्रतिबिम्बभाक् । पुण्य-भोगे भोग-शान्तौ निद्रा-रूपेण लीयते । कादाचित्कत्वतो नात्मा स्यादानन्दमयोऽप्य-यम् ॥ इत्यानन्दमय-कोषः ॥ इति पञ्चदशी ॥

अकारणं परं ब्रह्म सर्व-कारण-कारणम् ।
सर्वाधारो निराधारं निर्गुणं गुण-भासकम् ॥४॥

सर्वदैव स्वयं भाति भासयत्यखिलं जगत् ।
तस्य भासा रविः सर्वं प्रकाशयत्यनारतम् ॥५॥

सर्वात्मा सच्चिदानन्दो नैव केनापि वार्यते ।
वार्यते येन सर्वात्मा तेन स्वात्मैव वार्यते ॥६॥

यं ज्ञात्वा नापरं ज्ञेयं स एव परमः-शिवः ।
यं लब्ध्वा नापरं लभ्यं स एव परमेश्वरः ॥७॥

दविष्ठो भोग-चित्तानां, नेदिष्ठो ज्ञानिनां हि सः ।
प्रेष्ठो नित्यं सुभक्तानां, श्रेष्ठो नित्यं विवेकिनाम् ॥८॥

दविष्ठः—दूरतमः ॥ भोग-चित्तानाम्—भोगासक्तचित्तानाम् ॥ नेदिष्ठः—अन्तिकतमः ॥ प्रेष्ठः—प्रियतमः ॥ श्रेष्ठः—सर्वोत्तमः ॥

संसारामय-तप्तानां स एव परमा गतिः ।
स एव परमो मोक्षो यस्मा न्नो विनिवर्तनम् ॥९॥

नाश्रमाः कारणं मुक्तेः शास्त्र-ज्ञानं न कारणम् ।
न जन्म कारणं मुक्ते र्न लिङ्गं मुक्ति-कारणम् ॥१०॥
न कर्म कारणं मुक्तेः सम्यग् ज्ञानं हि कारणम् ।
पूर्ण-ज्ञानाद् भवेन्मुक्ति र्नान्यथा नान्यथा ध्रुवम् ॥११॥

लिङ्गम्—चिह्नम् ["ब्रह्म-प्रकाशकं ज्ञानं भव-बन्ध-विभेदकम् । तन्नैकचित्तता योगो मुक्तिदो नात्र संशयः ॥ जितेन्द्रियान्तःकरणो ज्ञान-तृप्तो हि यो भवेत् । स मुक्तः कथ्यते योगी परमात्मन्यवस्थितः ॥ सांख्यज्ञानेन योगेन वेदान्त-श्रवणेन च । प्रत्यक्षतात्मनो या हि सा मुक्ति रभिधीयते ॥" इति गारुडे ॥]

लभ्यं मुक्ति-प्रदं ज्ञानं परमेण समाधिना ।
नान्यथा नान्यथा लभ्यं नान्यथा नान्यथा ध्रुवम् ॥१२॥

ध्यानस्य या पराकाष्ठा सा समाधि रितीर्यते ।
ब्रह्मणा सह जीवस्य पूर्णैक्यं यत्र जायते ॥१३॥
त्रिपुटी-रहितं शुद्ध-चैतन्यात्मकमेव च ।
परमानन्दरूप न्तत् सर्वोपाधि-विवर्जितम् ॥१४॥

पराकाष्ठा—( काष्ठा = सीमा ) चरमोत्कर्षः ॥ त्रिपुटी—त्रितता । इत्यमरटीकायां भरतः ॥ [ पुटम् = आच्छादनम् ॥ पुटी = आच्छादनम् । ]

तदैक्यं यत्नतो लब्ध्वा सन्त्यज्य सर्व-बन्धनम् ।
परम-ब्रह्म-रूपेण स्वरूपस्थो भवेन्नरः ॥१५॥

यावदेव स्वमात्मानं विभिन्नं मन्यते शिवात् ।
तावदेव ध्रुवं पुंसो जीवत्वं बन्धनं भयम् ॥१६॥

निर्गुणं परमं ब्रह्म निरपेक्षं निरञ्जनम् ।
प्रविशेन्निर्गुणीभूय ध्यान-योग-समाधिना ॥१७॥

यावद् देहाभिमानश्च यावत् कामा हृदि-स्थिताः ।
ध्यानं ज्ञानं समाधिश्च मोक्ष स्तावत् कथं कुतः ॥१८॥

मोक्ष-द्वार-कपाटञ्च कामं शत्रुं परित्यजेत् ।
ध्यायन्नित्यं महादेवम् औदासीन्यं सदा भजेत् ॥१९॥

प्रशान्तः स्थिरधी मौनी श्रद्धाऽऽस्तिक्य-समन्वितः ।
भक्तिमांश्च भवेन्नित्यं ब्रह्म-ध्यान-परायणः ॥२०॥

मुक्तः संसर्ग-जम्बाला न्मुक्तः सर्व-परिग्रहात् ।
तपो-ध्यान-विशुद्धाङ्गः स योगी योग-सिद्धि-भाक् ॥२१॥

जम्बालः—पङ्कः ।

यस्य प्राणो भ्रुवो र्मध्ये यस्य चित्तं परेश्वरे ।
आसने निश्चलो देह स्तस्य मुक्ति र्न दूरतः ॥२२॥

ज्ञान-दीपेन दीप्तेन यो नित्यं पश्यतीश्वरम् ।
विमुक्तः सर्व-दोषैश्च तस्य काल-भयं कुतः ॥२३॥

दौर्भाग्यं ध्रुवमेतद्धि संसारासक्त-देहिनः ।
सेवते यत् शिवं त्यक्त्वा शरीरं काम-मन्दिरम् ॥२४॥

येन केनेन्द्रियेणैव संसर्गो विषयैः सह ।
कामजः कामदो नित्यं निश्चितं काम-कारणम् ॥२५॥

प्रत्येको विषयो नूनं जाज्वल-लौह-गोलकः ।
स्पर्शनाद् दह्यते देहो जायते च विष-च्तम् ॥२६॥
नूनम्—निश्चितम् ।

विषयं विष-भाण्डञ्च विहाय चित्त-मोहनम् ।
मनो हन्या न्महाशत्रुं दुराधर्षं सुदुर्जयम् ॥२७॥
दुराधर्षः—दुर्दम्यः । दुर्धर्षणीयः । अक्षोभ्यः ।

यदैव विषयं कश्चि न्मनसा परिपश्यति ।
तदैव परमं ब्रह्म मानसं परिमुञ्चति ॥२८॥

यदा विषय-सम्बन्धः सामान्यतोऽपि वर्तते ।
तदा सुचञ्चलं चित्तं ध्येये नैवावगाहते ॥२९॥

'ध्यानान्ते तत् करिष्यामि'—निश्चित्यैवं यदा नरः ।
ध्यानमारभते विष्णोः, समाधिं स न गच्छति ॥३०॥

संसेव्यैकं मृगं मुग्धः साधको भरतोऽपतत् ।
अगण्यान् विषयान् प्राप्य यास्यतीशं कथं पुमान् ॥३१॥

अतएव परित्यज्य सर्वं सङ्गं निरन्तरम् ।
पश्येद् रूपं पराश्चर्यं ब्रह्मणो वेद-गोपितम् ॥३२॥

---

## एकादशोल्लासः ।

परं ब्रह्म सदा ध्यायेत् चित्-स्वरूपं निरंशकम् ।
जड-रूप-तमो-ध्यानं नैव कुर्यात् कदाचन ॥१॥

यस्य नाम प्रकाशश्च स्वयमेव प्रकाशते ।
यस्य नाम सदात्मा यद् अस्तित्व मेव केवलम् ॥२॥
तद्-ब्रह्मास्तित्व-सिद्ध्यर्थं प्रयत्नश्च निरर्थकः ।
प्रमाणानि तथाऽन्यानि सर्वाणि तत् प्रकाशते ॥३॥

यच्च किञ्चि ज्जगत् सर्वं सच्चिदानन्द-विग्रहम् ।
अन्त र्बहिश्च तत् सर्वं व्याप्य ब्रह्म विराजितम् ॥४॥

ब्रह्मणा भास्यते सर्वं ब्रह्म भास्यं न केन-चित् ।
जगत्-प्राणो भवेद् ब्रह्म जगज्जीवन-कारणम् ॥५॥

स्थूल-सूक्ष्म-बृहत्-क्षुद्र-सर्वेभ्यो हि विलक्षणः ।
विष्णु र्नित्यः स्वयं-ज्योतिरविकारी सदा-स्थिरः ॥६॥

संसार-नाट्य-कर्ता स चिद्रूपः परमेश्वरः ।
एक एव स जागर्ति सुप्ते विश्वे चिरन्तनः ॥७॥

आदित्य-मण्डले दीप्ते पुरुषो यो हिरण्मयः ।
यः पश्यति सदाऽऽदित्यम् आदित्यो यं न पश्यति ॥८॥
स एव सर्व-लोकेश श्चिदानन्दः प्रभामयः ।
निरञ्जनो महादेवो विज्ञानात्मा सदाशिवः ॥९॥

हृदयाम्भोरुहे दीप्ते चित्ताकाशे मनोरमे ।
प्रविभाति महानग्नि र्ज्वाला-माला-समाकुलः ॥१०॥
तस्य वह्नेः शिखा सूक्ष्मा विद्युल्लेखेव भास्वरा ।
राजते तच्छिखा-मध्ये परमात्मा परेश्वरः ॥११॥

बुद्धि-मध्ये चरन्नित्यं धृत-बुद्धि-कलेवरः ।
प्रकाशयति यो बुद्धिं बुद्धि र्जातु न वेत्ति यम् ॥१२॥
सर्व-भूतान्तरात्मा स चान्तर्यामी भवेश्वरः ।
सर्व-प्रकाशको नित्यं स्व-प्रकाश श्चिदर्णवः ॥१३॥

अनाहते महापद्मे विद्युत्-कोटि-सम-प्रभे ।
गगनं पवने प्राप्ते ध्वनि रुत्पद्यते महान् ॥१४॥

ध्वने रन्तर्गतं ज्योति र्ज्योतिरन्तर्गतं मनः ।
तन्मनो लीयते यस्मिं स्तद् विष्णोः परमं पदम् ॥१५॥

आज्ञा-चक्रे भ्रुवो र्मध्ये दिव्य-नेत्रे समुज्ज्वले ।
ओमित्येकाक्षरं ब्रह्म साधकालम्बनं परम् ॥१६॥
सूर्य-मण्डल-संकाशो ह्यकार स्तत्र राजितः ।
उकार श्चन्द्र-संकाश स्तस्य मध्ये व्यवस्थितः ॥१७॥
मकारो वह्नि-संकाश स्तस्य मध्ये विधूमकः ।
अर्ध-मात्रा ह्यनुच्चार्या स्थिता तत्-प्रणवोपरि ॥१८॥
सा प्रदीप-शिखा-तुल्या विद्युल्लेखेव भास्वरा ।
शिव-रूपा महासूक्ष्मा—मन स्तत्र विलीयते ॥१९॥
मानसे विलयं प्राप्ते भाति ब्रह्म महत्तमम् ।
अद्वयं पूर्ण-चैतन्यं द्वैत-भान-विवर्जितम् ॥२०॥

स्थिरासनस्थ-योगीन्द्रो भूत्वा प्रशान्त-मानसः ।
भावनेन क्रमादूर्ध्वम् उत्तिष्ठति सुषुम्णया ॥२१॥
ऊर्ध्वादूर्ध्वतरं गत्वा चाप-निक्षिप्त-बाण-वत् ।
विशत्येव सहस्रारं महापद्मं शिवालयम् ॥२२॥
ब्रह्म-रन्ध्रं ततो भित्त्वा भवत्येवान्तरीक्षगः ।
भिनत्ति स महातेजा नाना-लोकान् प्रभान्वितान् ॥२३॥
चन्द्र-लोकं ततो भित्त्वा भित्त्वा ब्रह्माण्ड-खर्परम् ।
प्राप्नोति स महाकाशं काल-विलास-मन्दिरम् ॥२४॥

अगण्यानि च विश्वानि ह्यूर्मिमालि-तरङ्गवत् ।
उत्तिष्ठन्ति च दीव्यन्ति प्रलीयन्ते महाम्बरे ॥२५॥

ऊर्ध्वादूर्ध्वतरं गत्वा तदूर्ध्वञ्च सुदूरतः ।
प्राप्नोति स महाशून्यम् अनाविलं निरामयम् ॥२६॥

किञ्चि न्न वर्तते तत्र न खं नैव दिनादिकम् ।
मरणामरणे न स्तो न कालो न दिशोऽपि वा ॥२७॥

तस्मिन्नेव महाशून्ये स्वयं-ज्योति र्विराजितः ।
परमात्मा सदा-पूर्णो निष्कलः परमः-शिवः ॥२८॥

एकमेव परं ब्रह्म सर्वत्रैव व्यवस्थितम् ।
तदेवेदं जगत् सर्वं नेह नानाऽस्ति किञ्चन ॥२९॥

भेद-ज्ञानाद् भयं नित्यं, भेद-ज्ञानं परित्यजेत् ।
अभेद-दर्शनं ज्ञानं सर्वदैव समाश्रयेत् ॥३०॥

अद्वितीयं महादेवं निरन्तरं विभावयेत् ।
अद्वितीये महादेवे मानसं प्रविलापयेत् ॥३१॥

संसार-नाशनं योगम् एवमाचरतः सदा ।
उदेति मानसाकाशे पर-वैराग्य-भास्करः ॥३२॥

लब्ध्वा योग-प्रभावेण साधनानां चतुष्टयम् ।
सर्वं मायामयं मिथ्या जानाति ज्ञान-गोचरम् ॥३३॥

साधनानां चतुष्टयम्—(१) आत्मानात्म-वस्तु-विवेकः । (२) इहामुत्र-फलभोग-विरागः । (३) षट् सम्पत्तिः । (४) मुमुक्षुत्वम् ।

चक्राङ्गः चीरमादत्ते वर्जयित्वा यथा जलम् ।
चैतन्यं स तथाऽऽदत्ते वर्जयित्वा जगज्जडम् ॥३४॥

चक्राङ्गः—हंसः ।

सर्वं तस्य विनिक्षिप्य देहं गेहं परात्मनि ।
दग्ध्वा मायामयं पाशं वनं गच्छति संयमी ॥३५॥

यदैव जायते शुद्धा वितृष्णा हि विवेकजा ।
तदैव प्रव्रजेद् विद्वान् सन्न्यासाश्रम माश्रयेत् ॥३६॥

प्रव्रज्या—प्रास्य पुत्रादीन् व्रज्या । पुत्रादीन् परित्यज्य गमनम् । सन्न्यासाश्रम-ग्रहणम् ।

---

## द्वादशोल्लासः ।

मायया कल्पितं सर्वं देह-गेहादि-बन्धनम् ।
उत्सारयाम्यहं मायां मनो मोक्षे निवेशयन् ॥१॥

उत्सारयामि—[ उत्+सृ+णिच् ] उत्पाटयामि । दूरीकरोमि । Expel, turn out, drive away.

मुमुक्षुः सर्व-संसाराद् राग-द्वेषादि-सङ्कुलात् ।
हनिष्यामि महामायां जगन्मोहन-कारिणीम् ॥२॥

निर्दहन्तीं गुणान् सर्वान् ग्रसन्तीं सर्व-मङ्गलम् ।
अकुण्ठितो हनिष्यामि मायां ता मविचारयन् ॥३॥

अप्रयासेन निर्वाणं लभ्यते ज्ञान-सेविना ।
निर्वाणं निश्चितं लभ्यं स्वल्पायासं महाफलम् ॥४॥

वर्तते न क्षणं यो हि वृत्तिं ब्रह्ममयीं विना ।
तस्य दूरतरा माया मुक्ति स्तस्य करे स्थिता ॥५॥

सुखं काङ्क्षन् विमूढात्मा दुःख माप्नोति सन्ततम् ।
हित्वा सर्वं विनिश्चित्तं चित्तं क्षिप्रं करोम्यहम् ॥६॥

"Mind unmind thou, make mind cease." *Yoga and Perfection.*

चित्तेनैव भवा च्चित्तम् उत्तारयाम्यतन्द्रितः ।
चञ्चलत्वं मनो-धर्मं विनाश्य ज्ञान-योगतः ॥७॥

उत्तारयामि—उद्धरिष्यामि । Deliver, rescue.

चित्तं विमुच्यते सत्यं सर्वं ब्रह्मेति निश्चयात् ।
संकल्प-कल्पना-त्यागात् पर-ब्रह्म-सुचिन्तनात् ॥८॥

चित्तमेव महाशत्रु, श्चित्त-नाशो महोदयः ।
चित्ते नष्टे महायोगी पूर्णेन्दुरिव राजते ॥९॥

सर्व मेव महासम्वि च्चिन्मात्रा न्नास्ति किञ्चन ।
विज्ञान-वारिणा चित्तं क्षालयामि प्रतिक्षणम् ॥१०॥

भाव्यते स्मर्यते नित्यं दृश्यते श्रूयते च यत् ।
ध्रुवं मिथ्यामयं सर्वं मरौ मिथ्या जलं यथा ॥११॥

अन्योन्य-संयुतं हित्वा सुख-दुःख-द्वयं द्विषम् ।
अभेदेन शिवं ध्यायन् यास्याम्यहं चितः पदम् ॥१२॥

निर्गुणं परमं ब्रह्म निराकार मखण्डितम् ।
ध्यायन् सुतीव्र-वेगेन ब्रह्म-रूपो भवाम्यहम् ॥१३॥

निर्द्वन्द्वो निर्ममो भूत्वा गत-कौतुक-विभ्रमः ।
ध्यायन् ब्रह्म निरालम्बं विचराम्येकको महीम् ॥१४॥

त्यक्त्वा भूतं भविष्यञ्च चूर्णयित्वा शुभाशुभम् ।
भोग-मोक्ष-निराकाङ्क्षो विचराम्येकको महीम् ॥१५॥

देह-बुद्ध्या धनं मित्रं, ज्ञान-दृष्ट्या मृषामयम् ।
त्यक्त्वा सर्वं शिवो भूत्वा विचराम्येकको महीम् ॥१६॥

प्रियाप्रियं सुखं दुःखं शुभाशुभं न किञ्चन ।
एकैवाहं सदा-शुद्धः सदा-बुद्धो निरञ्जनः ॥१७॥

।  पूर्ण-ज्योतिः ।

शिवोऽहं सर्वदा-मुक्तो द्वैत-भान-विवर्जितः ।
अकर्ता विचरिष्यामि नित्यं गलित-मानसः ॥१८॥

सदा स्वरूप-संप्राप्तो निष्प्रपञ्चो निरामयः ।
मृत्युञ्जय श्चरिष्यामि निषेध-विधि-वर्जितः ॥१९॥

सम मे सकलं नित्यं हेयाहेयं न विद्यते ।
आ-ब्रह्म-स्तम्ब-पर्यन्तम् अहमेवेति दर्शनात् ॥२०॥

यथा मे गहनारण्यं निर्जनं जीव-वर्जितम् ।
तथा मे पत्तनं नित्यं जनैश्वर्य-प्रपूरितम् ॥२१॥

विश्व-स्थितिं न वाञ्छामि नैव तस्य विलीनताम् ।
मरणामरणे चोभे तुल्य-मूल्ये सदा समे ॥२२॥

कृन्तनं नख-केशानां देहानां प्रलय स्तथा ।
समे नित्यं समौ मे च विश्वानां प्रलयोदयौ ॥२३॥

असङ्गोऽहं निराकारो निर्लेपो दोष-वर्जितः ।
न मे देहादिकं किञ्चि न्नाहं स्त्री न पुमानहम् ॥२४॥

अद्वयोऽहं परं ब्रह्म द्वितीयः को ममापरः ।
कुत्र गच्छामि तिष्ठामि किं त्यजामि करोमि किम् ॥२५॥
किं वदामि किमिच्छामि किं शृणोमि पराद्वयः ।
ज्योतिर्ज्योतिः परं-ज्योतिः पूर्ण-ज्योतिः शिवोऽस्म्यहम् ॥२६

एवं प्राप्तुं महानन्दम् अगौणं प्रव्रजाम्यहम् ।
अधुनैव मया त्यक्तं सर्वं विश्वं चराचरम् ॥२७॥

आत्मन्यग्नीन् समारोप्य सन्न्यसामि विधानतः ।
सर्वेभ्य श्चाभयं दत्त्वा भवामि ब्रह्म-विग्रहः ॥२८॥

अग्नयः—गार्हपत्य-आहवनीय-दाक्षिणाग्नयः ॥

---

# सायाह्नः ।

## प्रथमोल्लासः ।

शिव-सन्न्यस्त-सर्वस्वः सन्न्यासी परिकीर्तितः ।
सर्व-न्यासो महा-शम्भो धर्मः सन्न्यासिनां ध्रुवम् ॥१॥

सन्न्यासिनां विशुद्धानां यतीना मूर्ध्व-रेतसाम् ।
वास-स्थानं भवत्येव यद् विष्णोः परमं पदम् ॥२॥

ऊर्ध्व-रेताः—ऊर्ध्व-रेतो यस्य । न पतति वीर्यं यस्य ॥

ब्रह्म-रूपं सदा ध्यायन् योग-मूर्ति-समाश्रितः ।
सन्न्यासी विचरेद् विश्वं सर्वदैव समाहितः ॥३॥

स्नेहो यत्र भयं तत्र, स्नेहो योग-विघातकः ।
जित-स्नेहो निरातङ्को भवेद् विष्णौ समे स्थितः ॥४॥

मुक्ति-मार्गार्गलं सङ्गं विदुषामपि मोहनम् ।
विष-रूपं मुमुक्षूणां त्यजे न्नित्य मशेषतः ॥५॥

सन्त्यज्य विषयान् सर्वान्—सर्वान् माया-करण्डकान्—।
ज्ञान-नेत्रं समादाय विचरे देकको महीम् ॥६॥

करण्डकः—मधु-कोषः । वंशादि-रचित-भाण्ड-विशेषः ॥

एक एव शिवं ध्याये न्नास्ति ध्याने सहायता ।
अद्वयं यत्र लब्धव्यं तत्र सङ्गो भयावहः ॥७॥

एकः—एकाकी । असहायः ।

वागर्थौ भवतो यद्वत् सुसम्बद्धौ निरन्तरम् ।
ब्रह्म-ध्यान मसङ्गित्वं नित्य-युक्तौ परस्परम् ॥८॥

ध्येये निश्चलता पूर्णा यत्र नित्य मपेक्ष्यते ।
सर्व-सम्बन्ध-विच्छेद स्तत्र ध्रुव मपेक्ष्यते ॥९॥

किञ्चनापि भवेद् यावत् कर्तव्यं वसुधां प्रति ।
तावद् ध्याने समाधौ च भवेन्नैवाचला स्थितिः ॥१०॥

रजसा तमसा यावत् तिष्ठे दाकुलितेन्द्रियः ।
ध्यानं ज्ञानं समाधिश्च शान्ति स्तावत् कथं कुतः ॥११॥

आकुलितम्—व्याकुलितम् । अस्थिरम् । विक्षिप्तम् । उद्-भ्रान्तम् । आन्दोलितम् । विपर्यस्तम् ।

चित्तस्य परम-स्थैर्यं विना नैव समाधयः ।
तस्मा न्नित्यं प्रकुर्वीत सर्व-विश्व-विसर्जनम् ॥१२॥

यद् भावि तद् भवत्वेव, नित्यं सेवेत सर्वथा ।
पर-वैराग्य-मार्तण्डं कायेन मनसा गिरा ॥१३॥

यद् भावि तद् भवतु—come what may.

त्यक्त्वा देह-सुखं भोगं त्यक्त-सर्व-परिग्रहः ।
निरिच्छो विचरे न्नित्यं निर्मम: शुद्ध-मानसः ॥१४॥

अनिकेत उदासीनो निरग्नि गत-संशयः ।
ध्यायेद् ब्रह्म पराद्वैतं द्वैत-भ्रान्ति-विवर्जितः ॥१५॥

निरग्निः—अनग्निः । श्रौत-स्मार्त-कर्म-हीनः ।

भेद-भावं परित्यज्य भावाभावौ विहाय च ।
आत्मारामः प्रसन्नात्मा निर्विकल्पः सदा भवेत् ॥१६॥

आत्मारामः—आत्मा आराम मिव रतिस्थान रति-साधनं वा यस्य ।

निर्विकारो बहि र्यत्नाद् भूत्वाऽन्त र्भोग-लालसः ।
कोऽपि नो लभते ज्ञानं भव-रोग-विनाशनम् ॥१७॥

समाधि र्ज्ञानदो लभ्यो ध्यान-वैराग्य-रंहसा ।
राग-द्वेषादि-युक्तानां समाधि र्नैव सम्भवेत् ॥१८॥

रंहसा—वेगेन ।

विलापये न्मनः प्राणं ब्रह्मणि ध्यान-योगतः ।
तदा समरसत्वं यत् समाधिः स विमोक्षदः ॥१९॥

समाधि-सिद्धये नित्यं ज्ञान-निर्मल-मानसः ।
ब्रह्म-भाव-प्रपन्नः सन् द्वैत-भाव-विवर्जितः ॥२०॥

त्यजेन्मायामयं सर्वं नश्वरं जगदस्थिरम्।
त्यजेत् सर्व-विधं कर्म—सर्वमज्ञान कल्पितम् ॥२१॥

---

## द्वितीयोल्लासः।

सम्यग्-दर्शन-सम्पन्नः, शङ्करे परिनिष्ठितः।
ज्ञात्वा मायामयं विश्वं, त्यक्त्वा कर्माण्यशेषतः ॥१॥

हित्वा सर्वां सुखाकाङ्क्षां, निर्वाणे बद्ध-दर्शनः।
केवलं देह-रक्षार्थं सन्न्यासी भैक्ष माचरेत् ॥२॥

सकृदेव चरेद् भैक्षं नासकृद् भैक्ष माचरेत्।
भैक्षासक्तः पतत्येव, रक्षयेत् संयमं सदा ॥३॥

न विषीदेदलाभे तु, नैव लाभे प्रहर्षयेत्।
प्रयोजनातिरिक्तञ्च न कदापि समाहरेत् ॥४॥

स्वेच्छयैव गृहस्थेन प्रदत्तं भोजनञ्च यत्।
आददीत, वदेन्नैव "देहीदं मे" कदाचन ॥५॥

आददीत—[आ+दा (ह्वादि)] गृह्णीयात्। Take, receive.

नैकान्नादी भवेद् विद्वान्, वृत्तिं माधुकरीं भजेत्।
स्व-समीहित-लाभाय प्रयत्नं न समाश्रयेत् ॥६॥

स्व-समीहित-लाभाय—स्वाभिलषित-लाभाय ॥

न नेत्र-चपलो नैव वागङ्ग-चपलो भवेत् ।
सर्वदा संयमी भूत्वा शिष्टाचारं प्रपालयेत् ॥७॥

भुञ्जीत प्रयतो नित्यं भैषज्य मिव भोजनम् ।
केवलं देह-रक्षार्थं, न लोभेन कदाचन ॥८॥

भोजनार्थं विना जातु न गच्छेद् गृह-मेधिनम् ।
सङ्ग-दोषं त्यजे न्नित्यं वैराग्यादि-विनाशनम् ॥९॥

औदासीन्यं सदा शुद्धम् अखिलेषु च वस्तुषु ।
तन्निष्परिग्रहं नित्यं यत्नतः परिपालयेत् ॥१०॥

याचनेन प्रजायन्ते मुख-भङ्गो महाभयम् ।
दीनत्वं स्वर-भङ्गश्च शङ्का द्विधा च लाघवम् ॥११॥

दीनत्वम्—कातरता ॥ द्विधा—[ द्वि + धाच् ] संशयः ॥
लाघवम्—लघुत्वम् । अगौरवम् । क्लैव्यम् ॥

इच्छा प्रत्युपकारस्य जायते च परिग्रहात् ।
स्वातन्त्र्य मनपेक्षत्वं याचनेन विनश्यतः ॥१२॥

जिह्वा दग्धा वृथा वाचा, करौ दग्धौ प्रतिग्रहात् ।
मनो दग्धञ्च कामेन, तस्मा देतत्त्रयं त्यजेत् ॥१३॥

कौपीन-युगलं वासो वस्त्रं शीत-निवारकम् ।
कमण्डलुञ्च गृह्णीया न्नाधिकन्तु विधीयते ॥१४॥

यावता वर्धते चित्ते वैराग्य मकुतोभयम् ।
तावता संक्षयं याति द्रव्यापेक्षा भयान्विता ॥१५॥

बहु-वित्तो भवत्येव भीत श्चञ्चलतामयः ।
न क्षोभयति सन्तुष्टं वित्त-हीना दरिद्रता ॥१६॥

काम-विद्धं मनो नित्यं भवेद् दुःखमयं ध्रुवम् ।
बहु-वित्ते तथा चाल्पे तस्य दुःखं सुनिश्चितम् ॥१७॥

महामाया-प्रभावोऽयं यत् सर्व-त्यागिनः पुनः ।
कौपीनार्थं निरर्थं वा विवदन्ते परस्परम् ॥१८॥

ममत्वं दुःख-मूलं हि, निर्ममत्वं सुखप्रदम् ।
सत्यं सत्यं पुनः सत्यं सत्यं सत्यं पुनः पुनः ॥१९॥

त्यज्यतां त्यज्यतां नित्यं ममत्वं पाप-वर्धनम् ।
पत्तनं सर्व-दोषाणां, मुमुक्षूणा मवाञ्छितम् ॥२०॥

ममत्वं यदि रक्ष्येत तस्य पात्रं परात्परः ।
पतन्तं त्रायते नित्यं निश्चितं स भवेश्वरः ॥२१॥

अपात्रे खलु संसारे निःसारे दुःख-भाजने ।
नैव स्थाप्यं ममत्वञ्च स्वात्म-मङ्गल-कामिना ॥२२॥

बहवो योगिनः सन्ति योग-मार्गे समुन्नताः ।
भोगैश्वर्य-यशो-लुब्धा भूत्वा हन्त ! पतन्त्यधः ॥२३॥

पूजा-लाभेन सन्न्यासी समुन्नतोऽपि बध्यते।
कामयेत कदाचिन्नो गौरवं घोर-रौरवम् ॥२४॥
बध्यते—बद्धो भवति। Becomes bound.

अदृश्याऽपि जयत्येव नरान् दुर्बलता सदा।
सावधानो मनुष्येन्द्रो गुप्न्यादात्मानमात्मना ॥२५॥
गुप्न्यात्—रक्षेत्। Protect.

क्षुद्रोऽप्युत्तिष्ठमानोऽरि र्नैवोपेक्ष्यः कदाचन।
जायन्ते क्षुद्र-बीजेभ्यः सुविशाला महाद्रुमाः ॥२६॥
उत्तिष्ठमानः—वर्धनशीलः। Rising.

दोष-युक्तो भवेज्जीवो, दोष-मुक्तः सदाशिवः।
भवेत् सर्व-प्रयत्नेन दोष-निर्मुक्त-विग्रहः ॥२७॥

भोग-नद्यां तरस्विन्यां मज्जमानो भयाकुलः।
निकटस्थं महोदारं ज्ञान-वृक्षं समाश्रयेत् ॥२८॥

ज्ञान-दण्डः सदा धार्यो, वंश-दण्डो न मोचयेत्।
ज्ञानमेव परो धर्मो, लिङ्ग-वृत्तिः पतिष्यति ॥२९॥
लिङ्ग-वृत्तिः—"जीविकादि-निमित्तन्तु यो बिभर्ति जटादिकम्। धर्म-ध्वजी लिङ्ग-वृत्तिर्द्वयं तत्र निगद्यते॥"

दृश्यते ज्ञान-नेत्रेण परमात्मा परात्परः।
भास्वन्तमपि तं भानुं मोहान्धो नैव पश्यति ॥३०॥

देहादिषु ममत्वं यद् मोहः स ज्ञान-नाशकः ।
ममत्वं शिथिलीकृत्य नयेच्चित्तं शिवान्तिकम् ॥३१॥

ममत्वं शिथिलीकृत्य परमाद्वय-निष्ठितः ।
लाभालाभे सुखे-दुःखे प्रियाप्रिये समो भवेत् ॥३२॥

मृतो देहः सुखं दुःखं नोपभुङ्क्ते मनागपि ।
प्राण-युक्तोऽपि सन्न्यासी समत्वं तद्वदाश्रयेत् ॥३३॥

मनाक्—अल्पम् ।

सर्वदैव समो भूत्वा भूत्वा शान्तः समाहितः ।
एकाकी विजने स्थाने ध्यायेद् ब्रह्म पराद्वयम् ॥३४॥

राज-वार्तां वृथा-वार्तां भिक्षा-वार्तां परित्यजेत् ।
नित्यं वाचं-यमो भूत्वा ब्रह्म-ध्यानं समाचरेत् ॥३५॥

वाचंयमः—मुनिः । मौन-व्रती ।

शृणुयान्न वृथा-वाक्यं, जितात्मा सन्ततं भवेत् ।
दूर-यात्रां मटाट्याञ्च वृथाट्याञ्च परित्यजेत् ॥३६॥

अटाट्या—पुनः पुन र्भ्रमणम् । अतिशय-भ्रमणम् ।
वृथाट्या—वृथा-भ्रमणम् ।

नैव कौतूहलात् पश्येद् इतस्ततः कदाचन ।
तिष्ठन् व्रजञ्शयानो वा कुर्यान्नेत्रं न दूरगम् ॥३७॥

सुप्तवत् सर्वदा तिष्ठेत् शिव-संलग्न-मानसः ।
न चात्यध्ययनं कुर्या न्न व्याख्यान-परो भवेत् ॥३८॥

नाभिनन्देत सम्मानं द्विष्या न्नैवावमाननम् ।
निन्दकाय न कुप्येच्च हिंसकाय खलाय च ॥३९॥

नाभिनन्देत—न अभिनन्देत् । Don't care for ; **don't** desire ; don't delight in ; don't welcome.

कोप एव महाशत्रु र्योग-मार्ग-कवाटकः ।
हन्यादेनं प्रयत्नेन हन्यादेनं महाबलम् ॥४०॥

मानसे संयते कोपः कुतश्चै वागमिष्यति ।
असंयमं प्रति क्रोधः कथं नैव भविष्यति ॥४१॥

देह-बुद्ध्या भवेत् कोप आत्म-बुद्ध्या प्रशाम्यति ।
ज्ञान-दृष्टि र्निहन्त्येव सर्वान् दोषान् समूलतः ॥४२॥

विद्यां वित्तं कुलं जातिं ख्यापये न्न तपोधनः ।
पूर्व-स्मृतिं स्मरेन्नैव, सदा ब्रह्ममयो भवेत् ॥४३॥

देशान् ज्ञातचरान् सर्वान् सर्वदैव परित्यजेत् ।
जनान् ज्ञातचरान् सर्वान् यत्नतः परिवर्जयेत् ॥४४॥

ज्ञातचरः—ज्ञातो भूत-पूर्वः ।

हिरण्यं नैव गृह्णीया न्न कुर्याद् वित्त-सञ्चयम् ।
चिकित्साञ्च तथा शिल्पं परित्यजे दनारतम् ॥४५॥

हिरण्यम्—स्वर्णम् । इत्यमरः ॥ रजतम् । धनम् । इति शब्द-रत्नावली ॥

अन्तः-सङ्ग-परित्यागी बाह्य-सङ्गं विहाय च ।
संनियम्य मनो-वृत्तो ध्यायेन्नित्यं निरञ्जनम् ॥४६॥

स्व-स्वरूपानुसन्धानं विना सर्वं परित्यजेत् ।
स्वप्नेऽपि च भवेद् युक्तो जागरे च विशेषतः ॥४७॥

स्नानं भवतु देहस्य वैराग्य मस्तु जीवनम् ।
अभयं सर्व-भूतेभ्यो दत्त्वा समाहित श्चरेत् ॥४८॥

एव मभ्यसनेनैव भवेच्चित्तं सुनिर्मलम् ।
एक-निष्ठं तमो-हीनं रजो-हीन मचञ्चलम् ॥४९॥

शिवोऽह मिति विज्ञानं लभ्यते च तदाऽमलम् ।
तदा तीव्रं मुमुक्षुत्वं जायते च निरर्गलम् ॥५०॥
निरर्गलम्—अबाधम् ।

श्रीगुरुं सत्वरं गत्वा मृतानाममृत-प्रदम् ।
विज्ञान-ज्योतिषा नित्यं भासयन्तं चराचरम् ॥५१॥
मुग्धानां भ्रान्ति-राशीनां दहनं लोक-तारणम् ।
शिव-रूपं महायोगी साष्टाङ्गं प्रणमेन्मुहुः ॥५२॥
दहनः—अग्निः ।

लभते विरजां दीक्षां शिवावेशन-कारिणीम्।
लभते च परां विद्यां गुरोः शिवात्म-बोधनीम् ॥५३॥
यस्या श्चोत्पद्यते सम्वित् शिव-जीवैकतां प्रति।
मर्त्यत्वं स यया हित्वा ज्योती-रूपः शिवो भवेत् ॥५४॥

आवेशनम्—प्रवेशः। [परां विद्याम्—Cf. "राजपुत्रवत् तत्त्वोपदेशात् ॥" सा: प्र: सू: ॥]

विद्या—परा विद्या—महाविद्या—परमा विद्या।

---

## तृतीयोल्लासः।

त्रैलोक्यं वै गते विश्वे, सर्व-भेदे तिरोहिते।
यत्तदापि निराधारं सत्य-ज्योति र्विराजते ॥१॥
तद्धि ब्रह्म, तदेव त्वं, न त्वं पुत्तलिका जडा।
अद्वय स्त्वं पुनः कस्य करायत्तो भविष्यसि ॥२॥

विलीनाया महंतायां, जीवत्वे विनिपातिते।
यत्तदापि महासम्वि न्नित्य-ज्योति र्विभासते ॥३॥
तद्धि ब्रह्म, तदेव त्वं, न त्वं पुत्तलिका जडा।
कथं पुन र्जनी मृत्यु स्तवैव सम्भविष्यति ॥४॥

जनी—जन्म।

दिक्कालौ यत्र नो भातौ, वस्तु-च्छेदो न यत्र च ।
अखण्ड-ज्योतिषो यस्य सामरस्यं स्वरूपकम् ॥५॥
तद्धि ब्रह्म, तदेव त्वं, न त्वं पुत्तलिका जडा ।
कथं हेय मुपादेयं पुन स्ते सम्भविष्यति ॥६॥

हेयम्—त्याज्यम् ॥ उपादेयम्—ग्राह्यम् । उत्तमम् । उत्कृष्टम् । विधेय कर्म ।

स्पन्दे लीने, गते जाड्ये, भिन्ने चावरणे तमे ।
यत्तदाप्यचल-ज्योति र्भाति सुस्थिर मव्ययम् ॥७॥
तद्धि ब्रह्म, तदेव त्वं, न त्वं पुत्तलिका जडा ।
कर्म-बन्धः पुन स्ते तु कथं नु सम्भविष्यति ॥८॥

भिन्ने चावरणे तमे—(आवरण-शक्तिः—स्वल्पोऽपि मेघो बहु-योजनविस्तीर्ण मादित्यमण्डलम् अवलोकयितृ-जन-नयन-पथ-पिधायकतयाच्छादयतीव तथैवाज्ञानं परिच्छिन्नमपि आत्मान-मपरिच्छिन्नमसंसारिणम् अवलोकयितृ-बुद्धि-पिधायकतयाच्छाद-यतीव तादृशं सामर्थ्यम् ॥ इति वेदान्तः ॥)

सूक्ष्मादपि महासूक्ष्मं यद् व्योम-पञ्चकात् परम् ।
अद्वितीयं शिवं शान्तं ध्रुव-ज्योति र्विभासते ॥९॥
तद्धि ब्रह्म, तदेव त्वं, न त्वं पुत्तलिका जडा ।
कथं पुन र्गुणो दोष स्तवैव सम्भविष्यति ॥१०॥

व्योम-पञ्चकम्—(१) आकाशं (२) पराकाशं (३) महाकाशं (४) सूर्याकाशं (५) परमाकाश मिति पञ्च भवन्ति। बाह्याभ्यन्तरमन्धकारमय माकाशम्। बाह्यस्याभ्यन्तरे कालानल-सदृशं पराकाशम्। सबाह्याभ्यन्तरेऽपरिमितद्युतिनिभं तत्त्वं महाकाशम्। सबाह्याभ्यन्तरे सूर्य-निभं सूर्याकाशं। अनिर्वचनीय-ज्योतिः सर्व-व्यापकं निरतिशयानन्द-लक्षणं परमाकाशम्।" इति मण्डलब्राह्मणोपनिषत्॥

ज्योतिषां जीवनं यद्धि, तेभ्यः परं परात्परम् ।
अक्षरं यत् स्वयञ्ज्योति र्दीप्यते विश्व-भासकम् ॥११॥
तद्धि ब्रह्म, तदेव त्वं, न त्वं पुत्तलिका जडा ।
केन प्रकाश्यसे नु त्वं सुस्थिरं सर्व-कारणम् ॥१२॥

यत्र नो वर्तते शङ्का, विषादो नैव विद्यते।
रस-रूपं महानन्द-ज्योति र्य न्नित्य-नूतनम् ॥१३॥
तद्धि ब्रह्म, तदेव त्वं, न त्वं पुत्तलिका जडा।
कथं पुनः शुचा दुःखं तवैव सम्भविष्यति ॥१४॥

शुचा—शोकः।

यस्मिँल्लब्धे द्विधा छिन्ना, विभिन्नं मोह-बन्धनम् ।
त्रुटितो हृदय-ग्रन्थिः, पूर्ण-ज्योति र्विभाति यत् ॥१५॥

तद्धि ब्रह्म, तदेव त्वं, न त्वं पुत्तलिका जडा ।
असन्तोषः कथं तस्मै त्वय्येव सम्भविष्यति ॥१६॥
त्रुटितः—छिन्नः । गलितः । स्खलितः ।

ब्रह्म त्वं ज्योतिषां ज्योतिः शुद्धं बुद्धं सुखात्मकम् ।
ब्रह्मैव त्वं परं ज्योतिः सत्यं ज्ञान मनन्तकम् ॥१७॥
ब्रह्म त्वमेव चिज्ज्योति रेकमेवाद्वितीयकम् ।
पूर्ण-ज्योतिः परं ब्रह्म त्वं तदेव त्वमेव तत् ॥१८॥

भवेरेवं भवेरेवं भवेरेवं परात्परः ।
सम्यगेव भवेरेवं नित्य-पूर्णो निरञ्जनः ॥१९॥
पूर्ण मेव भवेः पूर्णः सर्वथैव च नित्यशः ।
अशेषेण भवेः पूर्ण स्तूर्ण मेव भवेः शिवः ॥२०॥

अहं ते भवताद् ब्रह्म, ब्रह्मैवाहं भवेत् तव ।
किञ्चनापि भवे न्नैव भिन्नता ब्रह्मण स्तव ॥२१॥

हृद्-गात्रे लेपनं सूक्ष्मं ब्रह्म-वृत्ते र्न मोक्षदम् ।
शिवे सम्यग् लयं गच्छे विमोक्षायाविशेषतः ॥२२॥

परिधाय कचित् कापि ब्रह्म-प्रमोद-चेलकम् ।
नात्मानं त्रायते कोऽपि ह्येतं यः सेवते भृशम् ॥२३॥
प्रमोदः—[प्र+मुद्+घञ्] हर्षः ॥ चेलकम्—वस्त्रम् ।

न कदापि भवे र्ब्रह्मन् ! मायिक-द्वैत-पङ्क-भाक् ।
ध्याये र्नित्यं पराद्वैतम् अविच्छिन्न मनन्यधीः ॥२४॥

पङ्कभाक्—पङ्कमग्नः । Sunk in mud.

जडं नैव परं ब्रह्म, पूर्ण-चैतन्य मेव तत् ।
भवे स्त्वं चिन्मयो नित्यः सर्व-जडत्व-वर्जितः ॥२५॥

पौरुषेण प्रयत्ने न सर्वत्यागेन-कर्मणा ।
अविच्छिन्नेन योगेन विना नास्ति शुभा गतिः ॥२६॥

भोजनाच्छादने रक्तः, संसक्तो विषयेऽलसः ।
ध्यान-ज्ञान-पराचीनः सन्न्यासी शान्ति-वर्जितः ॥२७॥

रक्तः—अनुरक्तः ॥ पराचीनः—पराङ्मुखः ।

सर्वेषामेव मन्तूनां यो निष्कामः स शोभते ।
सर्वेषामेव भिक्षूणां यः कामी स कलङ्कितः ॥२८॥

तदेव दृश्यते नित्यं यदेव चञ्चलं जडम् ।
स्थिरं सर्वग-चैतन्यम् इन्द्रियाणा मगोचरम् ॥२९॥

सर्वदैव पराकुर्या दुःख-रूपं चलं जडम् ।
ज्ञानेन सर्वदा पश्येः सच्चिदानन्द मद्वयम् ॥३०॥

अभेदेन चिदानन्दं निरन्तरं विचिन्तयेः ।
ध्यायन् नित्यं चिदानन्दं द्रवीभूत-मना भवेः ॥३१॥

ध्यायन् नित्यं चिदानन्दं चित्-स्वरूपः सदा भवेः ।
ध्यायन् नित्यं चिदानन्दं ब्रह्म-रूपः सदा भवेः ॥३२॥

पौरुषेण च वैधेन तपः कुर्या अनारतम् ।
प्राणानिव पणीकृत्य गन्तुं ब्रह्माभिधं पदम् ॥३३॥

सत्यं शौचं धृति मेधा श्रद्धा वीर्यं तितिक्षणम् ।
वैराग्यञ्च विवेकश्च सदाचारः पवित्रता ॥३४॥—
सेवितव्यानि सर्वाणि सर्व-द्वैत-निवृत्तये ।
सेवितव्यानि सर्वाणि सदाऽऽश्रित्य पराश्रयम् ॥३५ ॥

विचारेण प्रयत्नेन तपो-विघ्नान् विनाशयेः ।
मनोवृत्तिं सुसंयम्य निष्प्रपञ्चः स्थिरो भवेः ॥३६ ॥

आश्रित्य परमं ब्रह्म मायां यत्नेन निर्जयेः ।
सर्वदैव निदिध्यास्य ब्रह्मणि स्थिरतां व्रजेः ॥३७॥

सदा स्वरूप-संप्राप्तो भवे स्त्वं प्ररमः शिवः ।
सर्वज्ञो निष्कलः शान्तः परिपूर्णः परात्परः ॥३८॥

---

## चतुर्थोल्लासः ।

आचार-पालनेनैव निष्कामेन स्व-कर्मणा ।
राग-द्वेषौ क्षयं यातः शुद्धि माप्नोति मानसम् ॥१॥

ज्ञान-सूर्य स्तदोदेति स्वतो वै मानसाम्बरे ।
व्यपनीय मनो-भ्रान्तिं सर्व-द्वैतान्धतामसम् ॥२॥

अन्धतामसम्—निविडान्धकारम् । महान्धकारम् ।

क्रीडन्त्येव तदा नित्यं मुदा चित्त-सरोवरे ।
'ब्रह्मैवाह मह' ब्रह्म'—तरङ्गाः सुमनोहराः ॥३॥

तदा श्रद्धावत स्तस्य च्छिन्न-संशय-चेतसः ।
विचार-युक्ति-जालञ्च निष्प्रयोजनतां व्रजेत् ॥४॥

श्रुत्वैव परमं तत्त्वं श्रीगुरो र्वदनाम्बुजात् ।
स तद् विश्वसिति प्रीत्या श्रद्धया गत-संशयः ॥५॥

स ततो विजने स्थाने गुर्वाज्ञा-परिपालकः ।
ध्यात्वा ब्रह्म गुणातीतं भवत्येव शिवः स्वयम् ॥६॥

यस्तु श्रद्धाल्पता-युक्तः संशयाविष्ट-मानसः ।
श्रुत्वैव परमं तत्त्वं न जहाति स मूढताम् ॥७॥

तत्त्वं श्रुत्वा विचारेण चिन्तनेन पुनः पुनः ।
मूढतां संशयान् सर्वान् स च्छिणोति धृतोद्यमः ॥८॥

ध्यानेन चिन्तनेनैव सुदृढाभ्यास-योगतः ।
मोक्षदं परमं-ज्ञानं तदा तेनाधिगम्यते ॥९॥

यावन्न स्थिति रद्वैते, संशया न निराकृताः ।
तावदेव परं तत्त्वम् अविच्छिन्नं विचारयेत् ॥१०॥

वेद-प्रतीप-युक्तीश्च पराकुर्या दशेषतः ।
सत्यस्य निर्णयायैव कुर्या न्नित्यं विचारणम् ॥११॥
प्रतीपम्—प्रतिकूलम् ॥ पराकुर्यात्—त्यजेत् । Reject.

विचारार्थं भवेत् बोद्धा मेधावी धारण-क्षमः ।
नीति-धर्म-सदाचार-सद्ग्रन्थाचार्य-सेवनात् ॥१२॥

ज्ञात्वा वाक्यं विचारार्हं ज्ञात्वाऽर्थं तस्य यत्नतः ।
'अर्थेऽस्मिन् भवितुं योग्यः संशयः को'—विचिन्तयेत् ॥१३॥

पूर्व-पक्षं विचिन्त्याथ खण्डयित्वोत्तरेण तम् ।
सत्यार्थ-निर्णयं कृत्वा तन्निष्ठः सर्वदा भवेत् ॥१४॥
पूर्व-पक्षः—सिद्धान्त-विरुद्ध-कोटिः । प्रकृतार्थ-विरोधि- तर्कोपन्यासः ॥ उत्तर-पक्षः—सिद्धान्तानुकूल-तर्कोपन्यासः ॥

युक्तयो बह्वः सन्ति वेदान्त-शास्त्र-सागरे ।
सर्वदाऽभिमता ग्राह्या अन्याभि र्न प्रयोजनम् ॥१५॥

श्रवणं मननं ध्यानं—त्रयमेव समाचरेत् ।
अच्छिन्न-ध्यान-सामर्थ्यं यावन्नैव प्रजायते ॥१६॥

श्रवणम्—षड्विध-लिङ्गैः अशेषवेदान्तानामद्वितीये वस्तुनि तात्पर्यावधारणम् ॥ लिङ्गानि तु—उपक्रमोपसंहाराभ्यासापूर्वता-फलार्थवादोपपत्त्याख्यानि । इति वेदान्त-सारे ॥

मननम्—श्रुतस्य अद्वितीयवस्तुनो वेदान्तार्थानुगुणयुक्तिभिः अनवरतमनुचिन्तनम् । इति वेदान्तसारे ।

[ निदिध्यासनम्—श्रवण-मनन-ज्ञानस्य एकतानता-साध्यं निरन्तर-चिन्तनम् ॥ "निरन्तरं विचारो यः श्रुतार्थस्य गुरोर्मुखात् । तन्निदिध्यासनं प्रोक्तं तच्चैकाग्र्येण लभ्यते ॥" "अनात्मन्यरुचिश्चित्ते रुचिरात्मनि चेद् भवेत् । पुण्य-पुञ्जेन शुद्धं तच्चित्तमैकाग्र्य मर्हति ॥" विजातीय-देहादि-प्रत्ययरहिताद्वितीयवस्तुनि स्वजातीय-प्रत्यय-प्रवाहः ॥ ]

अच्छिन्नम्—छेद-रहितम् । अकर्तितम् ॥

Cf. "राजपुत्रवत् तत्त्वोपदेशात् ।" "आवृत्तिरसकृदुपदेशात् ॥" "नोपदेशश्रवणेऽपि कृतकृत्यता परामर्शादृते विरोचनवत् ॥" "दृष्टस्तयो रिन्द्रस्य ॥" "न काल-नियमो वामदेववत् ॥" साः प्रः सूः ॥

अविच्छिन्नं ततो ध्यानं मोक्ष-प्रदं समाश्रयेत् ।
यावन्न प्राप्यते मुक्ति स्तावदेव तप श्चरेत् ॥१७॥

तत्त्वस्य मननाच्चैव परिवादादि-वर्जनात् ।
स्वीकाराद् योग-कार्याणां तपस्त्वीत्यभिधीयते ॥१८॥

योगी तपो-बलेनैव सर्वं भवितु मर्हति ।
भवत्येव, न सन्देहो, ज्ञान-योगात् परात्परः ॥१९॥

धैर्योद्यम-समायुक्तः प्रपञ्चाच्च पराङ्मुखः ।
आफलोदय-कर्मा सन् ज्ञान-योगं समभ्यसेत् ॥२०॥

---

## पञ्चमोल्लासः ।

योऽयमात्मा चिदानन्दः सर्व-शक्ति-समन्वितः ।
एकः पूर्णो निराकारो निष्कलश्च महा-शिवः ॥१॥
तदभिन्न-महामाया-शक्त्यावृत-स्वरूपकः ।
प्राप्त-चैतन्य-संकोचो व्यापकोऽप्यणुतां गतः ॥२॥

अज्ञानं निश्चितं हेतु रात्म-संकोचनं प्रति ।
तस्मादेव तदज्ञानं संकोच-देह उच्यते ॥३॥

संकोचनं तथा सर्व-बन्धनं प्रति कारणम् ।
तमोमयं तदज्ञानं प्रोक्तं कारण-देहकः ॥४॥

अणुत्वं प्रति हेतुत्वाद् आणवं मल मुच्यते ।
आणव मल मन्यानि मलानि प्रति कारणम् ॥५॥

मलेनानेन विभ्रान्तो ज्ञान-दौर्बल्य माश्रितः ।
आत्मन्यनात्मतां पश्येद् अनात्मन्यात्मतां तथा ॥६॥

भवेत् कालेन देशेन परिच्छिन्न स्तदैव सः ।
स्वल्पज्ञः स्वल्प-शक्तिश्च सदा रागेण रञ्जितः ॥७॥

ममाहन्त्व-समायुक्तो मत्वाऽऽत्मानं स देहिनम् ।
सूक्ष्मेण लिङ्ग-देहेन भवत्येव समावृतः ॥८॥

एत दज्ञान-कार्यञ्च भेद-ज्ञानमयं सदा ।
मोह-भ्रान्ति-समायुक्तं मायीय-मल मुच्यते ॥९॥

मायीय-मलम्—"अहं ममेदमिति भेद-प्रथात्मकं ज्ञानम् । भिन्न वेद्यप्रथा ।"

मायीयेन मलेनैव तदा स ज्ञान-दुर्बलः ।
मोहात्मकेन विभ्रान्तो भवत्येव सुचञ्चलः ॥१०॥

कर्तृ-भोक्तृत्व मारोप्य स्वस्मिन्, दृष्ट्वा शुभाशुभम् ।
प्रियाप्रियं गतः कामी प्राप्नोति स्थूल-देहकम् ॥११॥

आशा-पाश-शतै र्बद्धः, कर्म-चक्रे सुघूर्णितः ।
भवत्येव त्रि-तापेन दह्यमानो निरन्तरम् ॥१२॥

एत दज्ञान-कार्यन्तु कार्मं मलं निगद्यते ।
मल-त्रयेण सम्बद्धो भ्रमत्येव स सन्ततम् ॥१३॥

अनेनैव प्रकारेण शिवस्य जीवतां गतिः ।
अनेनैव प्रकारेण जीवस्य भ्रमणं भवे ॥१४॥

अज्ञानमेव बन्धोऽयं संसार-भ्रम-कारणम् ।
विज्ञानेन क्षयं याति भास्करेण यथा तमः ॥१५॥

कर्मैव बन्धनं नृणाम् अज्ञानोत्थं सदैव तत् ।
अज्ञान-जात-बन्धोऽयं कर्मणैव न नश्यति ॥१६॥

अतएव विशुद्धञ्च ज्ञान मेकं समाश्रयेत् ।
पूर्ण-ज्ञानानुभावेन सन्तरेद् भव-सागरम् ॥१७॥

पूर्ण-ज्ञान-महाभानौ ह्युदिते मानसाम्बरे ।
सविलास-मल-ध्वान्तं सर्वथैव पलायते ॥१८॥

तदाऽऽत्मा परमानन्दः स्वे महिम्नि विराजते ।
अद्वितीयः सदा-पूर्णो निष्कलः परमः-शिवः ॥१९॥

चैतन्य मेक एवात्मा, नात्म-भेदोऽस्ति कुत्रचित् ।
नानाऽऽत्मानो न विद्यन्ते, वर्तते केवलः शिवः ॥२०॥

महामाया-प्रभावेण भेदो दृष्ट श्चराचरे ।
सर्वे भेदा लयं यान्ति सम्प्राप्ते परमेश्वरे ॥२१॥

जीवः शिवः शिवो जीवो नास्ति भेदः कदाचन ।
सर्वमेव शिवः साक्षा न्नेह नानास्ति किञ्चन ॥२२॥

---

## षष्ठोल्लासः ।

अद्वितीयो महादेवो नित्यः पूर्णो विराजते ।
विश्वानां स्थिति-काले च प्रलये च सदा समः ॥१॥

आत्म-भाव मसन्त्यज्य स्वेच्छया स निरञ्जनः ।
गत्वेव जीवतां विश्वं जीव-भावेन पश्यति ॥२॥

स्वेच्छया—प्रयोजनेन विना ।

विश्वं मायामयं मिथ्या रज्जु-दृष्ट-भुजङ्ग-वत् ।
यदा दृष्टं तदा बन्धो, न दृष्टं चेन्न बन्धनम् ॥३॥

जगद्-भ्रान्त्यां विलीनायां दृश्य-दोषः प्रशाम्यति ।
गलितायां जगद्-भ्रान्त्यां ज्ञानेन बन्धनं कुतः ॥४॥

भ्रान्ति रेषा समुत्पन्ना मनसो नात्र संशयः ।
सर्वं रूपं मनो धत्ते, सर्वं विश्वं मनोमयम् ॥५॥

सदैव दृश्य-रूपेण मनो भाति सुचञ्चलम् ।
मनो-नेत्रेण दृश्यानां दर्शनञ्चैव बन्धनम् ॥६॥

विश्वं वैचित्र्य-सम्पन्नं बहिर्दृश्योऽस्तु वा न वा ।
मनो-मध्ये जगद्-दृश्यं बन्धनाय भवेद् ध्रुवम् ॥७॥

दृष्टि-काले सदा द्रष्टा स्व-स्वरूपं विमुञ्चति ।
तस्मात् सर्वं जगद्-दृश्यं विनाशायैव केवलम् ॥८॥

यदा मनः क्षयं याति दृश्यं नैव विभासते ।
उपाधौ विलयं प्राप्ते केवलात्माऽवशिष्यते ॥९॥
तदैव मुच्यते बन्धाद्, दुःख-त्रयं लयं गतम् ।
तदैव शाश्वतीं शान्तिं लभते परमामृतम् ॥१०॥

विश्व-नाम क्वचित् किञ्चित् कदाचिन्नैव वर्तते ।
एकमेव परं ब्रह्म विश्वरूपेण भासते ॥११॥

भ्रान्ति-काले महारज्जुः सर्प-रूपेण भासते ।
सर्प-नाम क्वचित् किञ्चिद् वस्तुतस्तु न वर्तते ॥१२॥

सर्पो नास्ति, वराटः स एक एव विराजते ।
जगन्नास्ति, परं ब्रह्म त्वेकमेव विराजते ॥१३॥
वराटः—रज्जुः ।

य एव दृश्यते सर्पो, वराटः स, न संशयः ।
यदेव दृश्यते विश्वं तद् ब्रह्मैव न संशयः ॥१४॥

असम्भूत मिदं विश्वं मृग-तृष्णाम्बु-सन्निभम् ।
भ्रान्ति-मात्र मिदं ज्ञेयं—मनो-भ्रान्तिः सुनिश्चितम् ॥१५॥

निर्विकारे महाविष्णौ नित्येऽसङ्गे निरन्तरे ।
कथं वर्तिष्यते कुत्र ब्रह्माण्डं स-चराचरम् ॥१६॥

निर्विकारे महाविष्णौ सतोऽसङ्गे निरञ्जने ।
सम्भवेच्च कथं विश्वं, कस्माद् विश्वं जनिष्यते ॥१७॥

आप्त-कामात् सदा-पूर्णा न्निर्विकारात् परादृयात् ।
कथं प्रजायते विश्वं, विश्वं सत्यं न कर्हिचित् ॥१८॥

नित्यानन्दा न्निराकारा न्निर्विकारा च्चिदात्मनः ।
कथं प्रजायते विश्वं क्लिष्ट माकारव ज्जडम् ॥१९॥

अवलम्ब्य यथा रज्जुं सर्प-रूपं विभासते ।
अवलम्ब्य तथा ब्रह्म विश्व-रूपं विभासते ॥२०॥

रज्जुः सत्यं, न सन्देहः,सर्पो मिथ्या सुनिश्चितम् ।
ब्रह्म सत्यं न सन्देहो ; जग न्मिथ्या सुनिश्चितम् ॥२१॥

विश्व-रूपेण यद् दृष्टं तदेव ब्रह्म केवलम् ।
नित्यं शान्तं निराकारं चित्-स्वभावं सदाऽमलम् ॥२२॥

जगत् सर्वं खलु ब्रह्म, ब्रह्मैव सकलं जगत् ।
ब्रह्मैवाह महं ब्रह्म स्व-प्रकाशं सनातनम् ॥२३॥

अहं ब्रह्म परं-ज्योति जाग्रदादि-विवर्जितम् ।
अहं ब्रह्म परं-ज्योति र्देहेन्द्रिय-विवर्जितम् ॥२४॥
अहं ब्रह्म परं-ज्योति र्मनो-बुद्धि-विवर्जितम् ।
अहं ब्रह्म परं-ज्योतिः शोक-मोह-विवर्जितम् ॥२५॥

अहं ब्रह्म परं-ज्योतिः क्षुत्-पिपासा-विवर्जितम् ।
अहं ब्रह्म परं-ज्योति र्जन्म-मृत्यु-विवर्जितम् ॥२६॥
अहं ब्रह्म परं-ज्योतिः पञ्च-भूत-विवर्जितम् ।
अहं ब्रह्म परं-ज्योतिः सर्वोपाधि-विवर्जितम् ॥२७॥
अहं ब्रह्म परं-ज्योतिः प्रमाणादि-विवर्जितम् ।
निष्कलं निर्गुणं शान्तं सत्य मेकं चिदम्बरम् ॥२८॥

---

## सप्तमोल्लासः ।

शिवस्य सर्व-शून्यस्य सामरस्यस्य चात्मनः ।
अद्वितीयस्य विज्ञानात् पूर्णान्मुक्ति र्न चान्यथा ॥१॥

सत्यं यदि जगत्, तस्य लयो जातु न सम्भवेत् ।
सत्यं यदि जगद्-भेदो, मोक्षो जातु न सम्भवेत् ॥२॥

मोक्षश्च वर्णितो वेदे सत्यात्मके सनातने ।
मोक्ष श्चाधिगतः सम्यग्-ज्ञानेन मुनिभिः सदा ॥३॥

अतो भ्रान्तिमयं विश्वं ज्ञान-नाश्य मशेषतः ।
अध्यस्तं परमे शम्भौ द्वैत-गन्ध-विवर्जिते ॥ ४ ॥

अध्यस्तम्—आरोपितम् [ अध्यासः—स्मृतिरूपः परत्र पूर्व-दृष्टस्यावभासः । ]

इन्द्रियेभ्यः परा बुद्धि र्युक्ति-युक्ता सुनिर्मला।
बुद्धेः परं महज् ज्ञानं पूर्णं सत्यं समाधिजम् ॥ ५ ॥

नेत्र-दृष्टमपि भ्रान्तं विश्वं यद्वद् मरीचिका।
एव मुक्तञ्च शास्त्रेषु मुनिभि स्तत्त्व-दर्शिभिः ॥ ६ ॥

बुद्ध्यतीतं परं सूक्ष्मं मनो-वाचा मगोचरम्।
प्रत्यक्षादि-प्रमाणै स्तं ज्ञास्यसि त्वं कथं शिवम् ॥ ७ ॥

स्व-प्रकाश श्चिदानन्दो यस्य चित्ते प्रकाशते।
सत्यं तत्त्वं स जानाति नान्यो जानाति कश्चन ॥ ८ ॥

शुद्धाद्वैते महाविष्णौ जगद्-भेदो न वर्तते।
इति सत्यं विजानन्ति मुनिन स्तत्त्व-दर्शिनः ॥ ९ ॥

माया-विजृम्भितं विश्वं पश्यति भ्रान्त-मानसः।
भ्रमान्ते तन्मयं याति ; जगन्मिथ्या, न संशयः ॥ १० ॥

विजृम्भितम्—विस्तारितम्। विकाशितम्। प्रस्फुटितम्। प्रकाशितम्। चेष्टितम्।

स्वानुभूत्या मुनि-श्रेष्ठैः शास्त्रार्थो ज्ञायते ध्रुवम्।
शास्त्रार्थ-निर्णये तेषां वाक्यमेव प्रमाणकम् ॥ ११ ॥

प्रकाराः बहवः सृष्टे र्वर्णिताः शास्त्र-पुस्तके।
अज्ञानानां प्रबोधाय जडानां स्थूल-दर्शिनाम् ॥ १२ ॥

सृष्टि र्यदि भवेत् सत्यं, वर्णनीयैकधैव सा ।
बह्वनान्तु प्रबोधाय प्रकाराः स-प्रयोजनाः ॥ १३ ॥

स-प्रयोजनाः—सार्थकाः । प्रयोजनीयाः ।

अतएव जगद्-दृश्यं वस्तुतस्तु न विद्यते ।
एक एव परो देवः स्वात्मन्येव विराजते ॥ १४ ॥

तस्मिन् ज्ञाते महादेवे संसारात् प्रविमुच्यते ।
नान्यः पन्था विमोक्षाय नान्यः पन्थाः सुखाय च ॥ १५ ॥

मनो-निरोधनेनैव दृश्य-दोषो न नश्यति ।
निरोधान्ते पुन र्भाति ; निरोधो न विमोक्षदः ॥१६॥

'ब्रह्मैव केवलं सत्यं, जग न्मिथ्या सुनिश्चितम् ।
ब्रह्मैवाह महं ब्रह्म'—ज्ञानञ्चेदं विमुक्तिदम् ॥ १७ ॥

ध्यानात् प्रजायते ज्ञानं वैराग्य-निर्मलात्मनः ।
तस्मा दपेक्ष्यते नित्यं शुद्धं निर्विषयं मनः ॥१८॥

निर्विषयं मनः कृत्वा ध्यायेद्देवं पराद्वयम् ।
अभेदेन महाशम्भुं परिपूर्णं निरन्तरम् ॥ १९ ॥

ऊर्ध्व-पूर्ण मधः-पूर्णं मध्य-पूर्णं सदात्मकम् ।
सुसूक्ष्मं पुरुषं ब्रह्म विष्णुं सर्वगतं विभुम् ॥ २० ॥

अजं सत्यं ध्रुवं नित्यं शाश्वतञ्च सनातनम् ।
निराकारं निराधारं निरालम्बं निराश्रयम् ॥ २१ ॥

अविभक्त मखण्डञ्च निष्कलञ्च निरंशकम् ।
एक-रूपं सदा-शान्तं निर्भेदं सुस्थिरं समम् ॥ २२ ॥
विधूमाग्नि-निभं देवं सर्व-तेजोमयं परम् ।
भा-रूपं पूर्ण-चैतन्यं स्व-प्रकाशं चिदात्मकम् ॥ २३ ॥
आनन्दं परमानन्दं पूर्णानन्दं महाशिवम् ।
भूमानन्दं सदानन्दं परानन्दं परात्परम् ॥ २४ ॥

ध्यानादेवं भवेद् दृष्टं सत्यं ब्रह्म परावरम् ।
तदैव क्षीयते कर्म क्षीयते सर्व-बन्धनम् ॥ २५ ॥

---

## अष्टमोल्लासः ।

स्वप्न-दृष्टं यथा मिथ्या, तथा भ्रान्तिमयं जगत् ।
यत् किञ्चिद् दृश्यते सर्वं ब्रह्ममयं विभावयेत् ॥ १ ॥
स्वप्नान्ते ना विजानाति स्वप्न-दृष्टं मृषामयम् ।
अज्ञानान्ते विजानाति सर्वं विश्वं मृषामयम् ॥ २ ॥

अज्ञानस्य प्रभावेण मिथ्यात्वे भाति सत्यता ।
अभ्यासेन त्वसत्येऽपि सत्य-बुद्धि र्दृढायते ॥ ३ ॥

प्रति-संस्कार-योगेन जगतः सत्यतां त्यजेत् ।
यत्र यत्र मनो याति, तत्र तत्र शिवं भजेत् ॥ ४ ॥

प्रति-संस्कारः—प्रतीपः संस्कारः । Counter *sanskaras*. यत्र यत्र···भजेत्—Cf. "यत्र यत्र मनो याति ज्ञेयं तत्रैव चिन्तयेत् । चलित्वा यास्यते कुत्र सर्वं शिवमयं यतः ॥" इति श्रीस्वच्छन्दे ॥

मेष-रूपं यदा दृष्टं, तत्र मेषं न भावयेत् ।
तत्र पश्येत् परं पूर्णं दीप्यमानं चिदर्णवम् ॥ ५ ॥
विस्मरेन्मेष-रूपञ्च मेष-नाम च विस्मरेत् ।
असत्ये नाम-रूपे द्वे सर्वदैव परित्यजेत् ॥ ६ ॥

सच्च चिच्च तथाऽऽनन्दो नाम रूपञ्च पञ्चकम् ।
सर्वदैव प्रति-द्रव्ये विभात्यव्यभिचारतः ॥ ७ ॥

सर्वत्राद्य-त्रयं तेषां समानत्वेन संस्थितम् ।
नाम रूपं प्रति-द्रव्ये भवतश्च पृथक् पृथक् ॥ ८ ॥

एवं यः प्रणिधानेन धीमान् विश्वं प्रपश्यति ।
अखण्डे सच्चिदानन्दे नाम-रूपाणि पश्यति ॥ ९ ॥

धीः—शुश्रूषा श्रवणञ्चैव ग्रहणं धारणं तथा । ऊहापोहार्थ-विज्ञानं तत्त्वज्ञानं च धीगुणाः ।

एककः सच्चिदानन्दः सामरस्येन वर्तते ।
तन्मध्ये नाम-रूपाणि भ्रमन्त्येव दिवानिशम् ॥ १० ॥

गम्भीरादति-गम्भीरे पार-हीने चिदर्णवे ।
नाम-रूप-तरङ्गाश्च नृत्यन्त्येव निरन्तरम् ॥ ११ ॥

अनन्ते चापरिच्छिन्ने ज्योतिर्मये चिदम्बरे ।
उड्डीयन्ते चतुर्दिक्षु नाम-रूप-विहङ्गमाः ॥१२॥

अचलः सच्चिदानन्दो निर्विकारः सनातनः ।
चलानि नाम-रूपाणि विकृतानि चराणि च ॥१३॥

सत्यमेवाचलो यो हि निर्विकारः सनातनः ।
मिथ्यैव चञ्चलं द्रव्यं सविकारं विनश्वरम् ॥१४॥

सत्यं हि सच्चिदानन्दो निष्कलश्च निरञ्जनः ।
मिथ्यैव नाम-रूपाणि ;—सर्वं मिथ्यामय त्यजेत् ॥१५॥

रूपा नाम्नः सदा चित्तं प्रयत्नेन समुद्धरेत् ।
रूपे नामनि संसक्तं निगृह्णीयात् सदा मनः ॥१६॥

सर्वदा चिन्तयेत् प्राज्ञ—"एकोऽहं चिन्मयात्मकः ।
नान्य त्तु वर्तते किञ्चित् कुत्रचिच्च कदाचन ॥१७॥

भवाम्यहं परं ब्रह्म नित्य-पूतं सुनिर्मलम् ।
सङ्ग-हीनं रजो-हीनं सर्व-हीनं सदा-समम् ॥१८॥
निर्लेपञ्च निराकारं जगदादि-विवर्जितम् ।
नाम-रूप-विहीनञ्च पञ्च-भूत-विवर्जितम् ॥१९॥

देहेन्द्रिय-मनो-बुद्धि-प्राणाहङ्कार-वर्जितम् ।
अव्ययञ्च चिदानन्द-सत्तामात्र मनामयम् ॥२०॥
ऊर्ध्व-शून्य मधः-शून्यं मध्य-शून्य मकल्मषम् ।
सर्व-शून्यं गुणातीतम् अच्युतं दोष-वर्जितम् ॥२१॥
प्रशान्तं निर्भयं नित्यं निष्कलङ्क मलक्षणम् ।
अप्रतर्क्य मविज्ञेयं मनो-वाचा मगोचरम् ॥२२॥
शुद्धं बुद्ध मनिर्देश्यं चिन्मातञ्च स्वयम्प्रभम् ।
तृप्ति-रूपं चिदानन्दं द्वैत-भान-विवर्जितम् ॥"२३॥

---

## नवमोल्लासः ।

कार्यं, नात्रास्ति सन्देहः, स्व-कारणा न्न भिद्यते ।
तस्मात् सर्व मिदं विश्वं निराकारं चिदात्मकम् ॥१॥

विश्वे या जडता दृष्टा नाम-रूप-क्रियात्मिका ।
अज्ञानज-विकल्पोत्था, भावनेन दृढीकृता ॥२॥

जडत्वं यद् विभात्येव, चैतन्यं तत् सुनिश्चितम् ।
जडता नास्ति कुत्रापि,—चिदेकैव विराजिता ॥३॥

'इदन्तु सुन्दरं सत्यम्'—इति वक्त्यत्र कश्चन ।
'इदं कुत्सित मत्यन्तम्'—इति वक्ति तथाऽपरः ॥४॥

इत्थं-कारं नरा नित्यं विवदन्ते परस्परम् ।
अज्ञात्वा परमं तत्त्वम् अज्ञान-मुग्ध-मानसाः ॥५॥
इत्थंकारम्—एवम्, एवंकारम् । In this manner.

परमाद्वैत-चैतन्ये विमतेः संस्थितिः कुतः ।
'इद मीट्ट गद स्तादृक्'—एवं वाचो निरर्थकाः ॥६॥
विमतिः—चित्त-भेदः । मत-भेदः । Difference of opinion. एवंवाचः—Such words.

चिद्-घने परमे तत्त्वे यदेत ज्जाड्य-दर्शनम् ।
तदेव बन्धनं नृणां मोहजं मोह-कारणम् ॥७॥

भेद-शून्ये महा-शून्ये यदेतद् भेद-दर्शनम् ।
तदेव बन्धनं नृणां संसाराङ्कुर-कारणम् ॥८॥

'केयूरं कटकं सर्वं यथा स्वर्णं स्वरूपतः ।
सर्वाणि दृश्य-जातानि परं ब्रह्म स्वरूपतः ॥९॥
तरङ्गिण्यां सदा-नृत्यं स्तरङ्गोऽपि यथा जलम् ।
ब्रह्मण्येव सदा-नृत्यद् भुवनं चिन्मयं तथा ॥' १०॥—
सत्यं, किन्तु जगद् ब्रह्म न केवलं स्वरूपतः ।
नाम-रूपेऽपि विश्वस्य भवतो ब्रह्म निश्चितम् ॥११॥
केयूरम्—अङ्गदम् ॥ कटकम्—वलयः ।

नाम-रूपाणि सर्वाणि—परं ब्रह्म सनातनम् ।
शब्दार्थयोः सदा पश्येत् सच्चिदानन्द मव्ययम् ॥१२॥

ज्ञाता ज्ञानं तथा ज्ञेयं कर्ता हेतुः क्रिया तथा ।
द्रष्टा च दर्शनं दृश्यं—सर्वमेव चिदात्मकम् ॥१३॥

ध्यायेन्नित्यं परं ब्रह्म स्व-प्रकाशं सु-भास्वरम् ।
नित्य-शुद्धं निराभासं सर्व-शून्यं निरामयम् ॥१४॥

ध्येयं त्यक्त्वा मनो यत्र चञ्चलत्वाद् गमिष्यति ।
परिपश्येत् तदा तत्र चिन्मयं परमं शिवम् ॥१५॥

एवं-कारं मनो नित्यं ब्रह्मण्येव निवेशयेत् ।
सर्वं कर्माखिलं त्यक्त्वा सर्व-चिन्तां विवर्ज्य च ॥१६॥

एव मभ्यास-योगेन नाम-रूपे प्रणश्यतः ।
एव मभ्यास-योगेन शिवे सर्वं लयं गतम् ॥१७॥

दृश्याभावे लयं याति द्रष्टृत्व ञ्चाप्यशेषतः ।
तदैव चिन्मयं नित्यं परं ब्रह्मावशिष्यते ॥१८॥

यच्चैतत् परमं ब्रह्म तद् ध्रुवं परमं पदम् ।
तद् ध्रुवं परमा मुक्ति स्तद् ध्रुवं परमा गतिः ॥१९॥

भ्रान्त-चिन्ता-प्रभावेण दुःखेऽपि ना सुखायते ।
कीटोऽपि भ्रमरं ध्यायन् भ्रमरत्वाय कल्पते ॥२०॥

सुखायते—सुख मनुभवति ।

ध्यान-प्रभावतोऽसत्यं सत्य मित्यवभासते ।
कथं पुन र्न च ध्यानात् सत्यं ब्रह्म गमिष्यति ॥२१॥

भोग-भावन-दार्ढ्याच्च बन्धोऽयं दृढतां गतः ।
ध्यान-वैराग्य-योगेन क्षयं यास्यत्यसंशयम् ॥२२॥

सदैवापलपेद् विश्वं नाम-रूप-क्रियात्मकम् ।
पश्येन्नित्यं निरालम्बं चिन्मयं व्यापकं शिवम् ॥२३॥
अपलपेत्—[अप+लप्] अपजानीत । Deny.

पश्ये न्नान्यद् वदे न्नान्यद् ध्याये न्नान्यत् कदाचन ।
ब्रह्माद्वैतं सदा पश्येत् स्व-प्रकाशं निरञ्जनम् ॥२४॥
"ज्ञान मन्नम् ।" "त्रिषु चतुर्थं तैलवत् आसेच्यम् ॥" शिः सूः ।

मायया विधृतं चित्तं यद्यप्यत्यन्त-चञ्चलम् ।
ज्ञान-वैराग्य-रश्मिभ्यां याति निश्चलतां ध्रुवम् ॥२५॥
रश्मिः—अश्व-रज्जुः । इति मेदिनी ॥ रज्जुः ॥

ज्ञान-नेत्रं समादाय यदा दृष्टं परात्परम् ।
मोहः शोकः सुखं दुःखं तदा नश्यन्ति निश्चितम् ॥२६॥
तदा समत्व मायाति द्वैत-हीनं प्रपश्यतः ।
तदा वै पावनं पुण्यं भवत्येव चराचरम् ॥२७॥—

सर्वं वृन्दावनं स्थानं, सर्वं गङ्गा-समं जलम् ।
सर्वं देवालयं रूपं सर्वं ब्रह्म सु-पावनम् ॥२८॥

---

## दशमोल्लासः ।

एकैवास्ति परा सम्विद् ध्यानस्थेव स्थिरा सदा ।
स्फुरतीव सदा तस्या जीव-रूपं सुचञ्चलम् ॥१॥

इन्द्र-जालमयं रूपं यथाऽऽकाशे च नृत्यति ।
तथा मायामयो जीव श्चिदाकाशे हि डीयते ॥२॥

इन्द्र-जालम्—माया-कार्यम् । [ (१) महाकालस्य बीजानि प्रस्थमेकं समाहरेत् । धात्री-रसेन देवेशि सप्त-वारान् विभावयेत् ॥ गुटिका कर्तव्या ; तां गुटिकां मुखे निक्षिप्य पारावतो भवति ॥ (२) अर्क-क्षीरं वट-क्षीरं क्षीरं डुम्बर-सम्भवम् । गृहीत्वा पावके लिप्ते जल-चूर्णं करोति च ॥ दुग्धं सञ्जायते तत्र महाकौतुक-कौतुकम् ॥ इत्यादीनि ॥]

डीयते—[डी—नभोगतौ]

यथा जीव स्तथा डीनं मिथ्यामयं सुनिश्चितम् ।
सदैवास्ति परं ब्रह्म सत्यमेकं विराजितम् ॥३॥

डीनम्—[ डी (गतौ, नभोगतौ) + क्त ] पक्षिगतिः । इति जटाधरः ॥

एका चिद् बहुधा भाति जीवेषु जल-चन्द्र-वत् ।
वस्तुतो विद्यते नैव बहुत्वं वा विचित्रता ॥४॥

जीवो हि चिन्मयः सत्यं सर्वदा परमार्थतः ।
देह-भावनया तस्य जीवत्वं दृढतां गतम् ॥५॥

यक्ष-कल्पनया बालो यथाऽभ्येति महाभयम् ।
देह-कल्पनया मोहात् तथैवैति भयं नरः ॥६॥

यक्षः—"आजग्मु र्यक्ष-निकराः कुवेर-वर-किङ्कराः । शैलज-प्रस्तर-करा अञ्जनाकार-मूर्तयः ॥ विकृताकार-वदनाः पिङ्गलाक्षा महोदराः । स्फटिका रक्तवेशाश्च दीर्घस्कन्धाश्च केचन ॥" ब्रः वैः ॥

अभ्येति—प्राप्नोति ॥ एति—प्राप्नोति ।

देह-भावनया जीवो दुःखायते, सुखायते ।
आत्मान मपजानीते, चाविद्या मुपतिष्ठते ॥७॥

दुःखायते—दुःख मनुभवति ॥ सुखायते—सुख मनुभवति ॥

अपजानीते—अपलपति । Denies. उपतिष्ठते—पूजयति ।

देहस्य भावनं यावत्, तावज्जीवो हि डीयते ।
देह-ज्ञानं यदा त्यक्तं स तदैव विमुच्यते ॥८॥

देह-ज्ञानाद् भवे ज्जीवो, देह-मुक्तः सदाशिवः ।
सदाशिवं विना किञ्चिद् देह-मुक्तो न पश्यति ॥९॥

मरणा न्न भवेन्मुक्तिः—पुन र्देहो भविष्यति ।
स्वरूप-ज्ञान-योगेन भवे न्मुक्तिः सनातनी ॥१०॥

देह-ज्ञानं पराकूर्याद् ममाहन्त्वं परित्यजेत् ।
'देहोऽहम्'—इति संस्कारं सर्वथैव विलीनयेत् ॥११॥

राग-द्वेषादिकान् दोषान् यत्नतः परिवर्जयेत् ।
चित्तस्य जडतां सर्वां सर्वदैव विलोपयेत् ॥१२॥

चित्तस्य जड-भागाच्च जातं भ्रान्तिमयं जगत् ।
जडत्व-वर्जनार्थाय शुद्ध-सत्त्व-मयो भवेत् ॥१३॥

जड-चैतन्य-संयुक्तं मानसं भाति सन्ततम् ।
चैतन्ये ब्रह्म-रूपत्वं जडत्वे दृश्य-रूपता ॥१४॥

दृश्य-दर्शन-काले तु दृश्यत्वं याति मानसम् ।
ब्रह्म-दर्शन-काले च ब्रह्मत्वं याति मानसम् ॥१५॥

तस्मा दतन्द्रितो नित्यं ध्यायेद् ब्रह्म निरञ्जनम् ।
दृश्यस्य दर्शनं त्यक्त्वा दृश्य-स्मृति-विवर्जितः ॥१६॥

सदा ध्यायेत्—"अहं ब्रह्म शरीरादि-विवर्जितम् ।
बुद्धि-शून्यं मनः-शून्यं प्राण-शून्यं विदेहकम्" ॥१७॥

"देहेन्द्रियाणि सर्वाणि मां न जानन्त्यनश्वरम् ।
अहन्तु तानि जानामि, मया सर्वं प्रकाशितम्" ॥१८॥

इन्द्रियाणि समस्तानि साधको मनसि न्यसेत् ।
मनो न्यसे दहङ्कारे, बुद्धौ चाहङ्कृतिं न्यसेत् ॥१९॥
प्रकृतौ च न्यसेद् बुद्धिं प्रकृतिं पुरुषे न्यसेत् ।
पुरुषं ब्रह्मणि स्थाप्य सदा ब्रह्म-मयो भवेत् ॥२०॥

स्वर्णं विना यथा नास्ति केयूर-कङ्कणादिकम् ।
ब्रह्म विना तथा नास्ति चित्यादि-भूत-पञ्चकम् ॥२१॥
परं ब्रह्म विना नास्ति जाग्रदादि दशा-त्रयम् ।
परं ब्रह्म विना नास्ति जीवानां कोष-पञ्चकम् ॥२२॥
परं ब्रह्म विना नास्ति देह-त्रयं कदाचन ।
परं ब्रह्म विना नास्ति जगत्त्रयं कदाचन ॥२३॥
परं ब्रह्म विना नास्ति क्वचित् किञ्चित् कदाचन ।
एकमेव परं ब्रह्म, तदेवाहं महच्च तत् ॥२४॥

नैवाहं चक्षुषा दृश्यो, मया चक्षुः प्रपश्यति ।
नैवाहं मनसा मन्ये, मया मनस्तु मन्यते ॥२५॥

मनसोऽहं मनो नित्यं मनसा परिवर्जितः ।
मनोधर्म-विहीनश्च विज्ञानात्मा महाशिवः ॥२६॥

जाग्रदादि-दशानाञ्च साक्षि-रूपः सनातनः ।
निर्गुणोऽहं सदा-शान्तो जाग्रदादि-विवर्जितः ॥२७॥

जगन्मान्तु न जानाति, सदा जानाम्यहं जगत् ।
मम भासा जगद् भाति, तस्याहं भासकः परः ॥२८॥

भ्रान्ति-जातं जगत् सर्वं मयि किञ्चि न्न वर्तते ।
नित्यः शुद्धो निराभासः सदैवाहं निरञ्जनः ॥२९॥

---

## एकादशोल्लासः ।

असङ्गोऽहं निराकारो निर्विकल्पो निरञ्जनः ।
न मे बन्धो न मे शोको न मे मोहः कदाचद ॥१॥

विश्वे स्थिते प्रलीने मे लाभालाभं न किञ्चन ।
देहे स्थिते प्रनष्टे मे लाभालाभं न किञ्चन ॥२॥

उड्डीयतां न वा पक्षी, गगनस्य क्षतिः कुतः ।
विद्यतां वा न वा विश्वं, शिवस्य मे क्षतिः कुतः ॥३॥
अण्यतां वा न वा देहो ब्रह्मणो मे क्षतिः कुतः ।
अहमात्मा चिदाकाशो निर्विकारः सदा-समः ॥४॥

अण्यताम्—[अण्—to breathe, to live. जीवने, प्राणने । इति कविकल्पद्रुमः ॥]

मनः कल्पयते सर्वं, तस्माद् दुःख-सुखादिकम् ।
मनः कल्पयते सर्वं, तस्माच्च भ्रमणं भवे ॥५॥

मनो मे परमं शत्रुं दमयामि सुनिश्चितम् ।
मनो जित्वा समो भूत्वा सदा रंस्येऽहमात्मनि ॥६॥

रंस्ये—Shall rejoice at.

मनसाऽहं मनः-शत्रुम् अर्दयिष्याम्यशेषतः ।
असङ्गास्त्र-बलेनैव पर-वैराग्य-वेगतः ॥७॥

अर्दयिष्यामि—[अर्द—वधे to destroy, annihilate, cause to be dissolved.]

असंकल्पन-शस्त्रेण ब्रह्म-ध्यान-बलेन च ।
मनो मीत्वा गमिष्यामि स्थितिं ब्राह्मीमनुत्तराम् ॥८॥

मीत्वा—हत्वा ॥ अनुत्तराम्—श्रेष्ठाम् ।

ब्राह्मीं स्थितिं विना कोऽपि विश्रान्तिं नाधिगच्छति ।
तस्मात् समाधि-योगेन स्वरूपस्थो भवाम्यहम् ॥९॥

स्वरूपावस्थिति मोक्ष स्तदभावो हि बन्धनम् ।
अतः सर्वं परात्यज्य स्वरूपस्थो भवाम्यहम् ॥१०॥



न

रूप-भावनया वीचि स्तोयं स्वरूप-भावनात् ।
रूप-चिन्तां परित्यज्य स्वरूपस्थो भवाम्यहम् ॥११॥
वीचिः—तरङ्गः । स्वल्प-तरङ्गः ।

मोह-भ्रान्ति-विनिर्मुक्तः शान्त-संकल्पनः समः ।
सच्चिदानन्द-संलीनः स्वरूपस्थो भवाम्यहम् ॥१२॥

न मे चित्तं न मे देहो न मे विश्वं कदाचन ।
पूर्णो निरञ्जनः शान्तः सर्वदाऽस्मि शिवे मयि ॥१३॥

---

## द्वादशोल्लासः ।

नित्येऽद्वये सदा-पूर्णे निर्मले च निरन्तरे ।
कथं शोचसि मूढ त्वं, 'हा-हतोऽस्मि' कथं कृतम् ॥१॥

दृश्ये विश्वे मृषा-भूते किं बिभेषि सुखात्मक !
कथं रोदिषि रे भ्रान्त ! नित्य-पूर्ण स्त्वमेवहि ॥२॥

पूर्णस्येच्छा कथं सृष्टे र्निरन्तरे जगत् कथम् ।
सूक्ष्मादपि महासूक्ष्मे स्थूलानां बीजता कथम् ॥३॥

ब्रह्मणः पूर्णतायाञ्च द्वितीयस्यास्तिता कथम् ।
अद्वैतत्वं विना शुद्धं ब्रह्मणो नित्यता कथम् ॥४॥

अन्धकारः कथं सूर्ये, ज्वलने हिमता कुतः ।
निराकारे कथं रूपं, नित्ये नश्वरता कुतः ॥५॥
चित्-स्वरूपे कथं भ्रान्ति रानन्दे दुःखता कुतः ।
कथ मस्थिरता स्थैर्ये, मरणं चामृते कुतः ॥६॥

ज्वलनः—अग्निः ।

जग न्नाम क्वचित् किञ्चिद् वस्तु नास्ति कदाचन ।
अतीते च जगन्नासीद् भविष्ये न भविष्यति ॥७॥

एकमेव परं ब्रह्म पराद्वैतं विराजते ।
सत्यं सत्यं पुनः सत्यं सत्यं सत्यं पुनः पुनः ॥८॥

असत्ये ते कथं लोभो, मिथ्यात्वे ममता कुतः ।
असत्ये ते कथं शोको, मिथ्यात्वे ते भयं कुतः ॥९॥
असत्ये ते कथं निष्ठा, मिथ्यात्वे चिन्तनं कथम् ।
हेयोपादेय-बुद्धिश्च मिथ्यात्वे चागता कुतः ॥१०॥

मिथ्यात्व मपजानीत पराकुर्या दशेषतः ।
सतत्र-निष्ठो भवेन्नित्यं सतत्र ब्रह्म समाश्रयेत् ॥११॥

उत्सादये दहम्भावं देहेऽसतेः समूलतः ।
संस्थापये दहम्भावं चिदानन्दे त्वरान्वितः ॥१२॥

'देहोऽहं' बन्धनं नित्यं भव-विभ्रम-कारणम् ।
'शिवोऽहं' मोक्षदं सत्यं माया-तन्त्र-विमर्दकम् ॥१३॥

विभ्रमः—भ्रमणम् ॥ तन्त्रम्—शासनम् ।

अहम्भावः चरे देहे वासनानाञ्च बीजकम् ।
'देहोऽहम्' इति सन्त्यज्य सुखी शान्तो भवेत् पुमान् ॥१४॥

चित्ताकाशे त्वहं-शब्दो यदैव प्रस्फुरिष्यति ।
'नाहं देहः, शिवोऽहं तु'—तदैवेत्थं विचिन्तयेत् ॥१५॥

न ते बन्धो न मोक्षेच्छा न ते मुक्तिः कदाचन ।
नित्य-तृप्तः सदा-पूर्णं स्त्वमेव ब्रह्म शाश्वतम् ॥१६॥

---

## त्रयोदशोल्लासः ।

उपादेयानुरागश्च हेय-विद्वेषणं तथा ।
पाप-बीजे सदैवेते संसार-भ्रम-कारणे ॥१॥

सर्वासाञ्च प्रवृत्तीनां मूलभूतौ महाबलौ ।
क्षिप्रमेव निहन्तव्यौ राग-द्वेषौ महाद्विषौ ॥२॥

राग-द्वेषौ—"सुखानुशयी रागः ।" "दुःखानुशयी द्वेषः ।"

यावदेतौ हृदाकाशे नृत्यतः स्व-गणैः सह ।
ताव नैव सुखं शान्ति स्तात्र न मोक्ष-सम्भवः ॥३॥

पौरुषेण निहत्यैतौ रक्त-बीजौ महाबलौ ।
कौशलेन तपो-योगात् कुर्य्यां चित्तं शिवालयम् ॥४॥

शिवालयम्—(क्लीं) श्मशानम् ॥ [ शिवालयः—(पुं) शिव-मन्दिरम् । शिव-स्थानम् । ]

सर्व-शून्यं महा-शून्यं शिवालयं शिवालयः ।
शिवालयं भवे च्चित्तम् एतयो र्गत-जीवयोः ॥५॥

["यत्र सर्वे लयं यान्ति दह्यन्ते तत्त्व-सञ्चयाः । तां चितिं पश्य कायस्थां कालानल-सम-त्विषम् ॥" इति वीरावली ॥ ]

रजोगुणोद्भवो राग श्छागलो लघुकामकः ।
द्वेष एव महाक्रोधो महिषो यम-वाहनः ॥६॥

लघुकामः—छागः ।

महिषो यम-वाहनः—[पापिनां सम्बन्धे यमस्य रूपं यथा । —"त्रिंशद्-योजन-दीर्घाङ्गो वापी-सदृश-लोचनः । धूम्रवर्णो महातेजाः प्रलयाम्भोधर-ध्वनिः ॥ तृणाधिराजलोमा च ज्वलदग्नि-शिखाग्रवत् । नासारन्ध्रस्फुरच्छ्वासस्वनै र्जितमहानिलः ॥ सुदीर्घदशनश्रेणिः सूर्पोपम-नखावलिः । प्रचण्डमहिषारूढः सन्दष्टदशनच्छदः ॥ दण्डहस्त श्चर्मवासा भ्रुकुटीकुटिलाननः ॥" पुण्यात्मनां सम्बन्धे तस्य रूपं यथा ।—तानागतां स्ततो दृष्ट्वा नरान् धर्म-परायणान् । भास्करिः प्रीतिमासाद्य स्वयं नारायणो भवेत् ॥ चतुर्बाहुः श्यामवर्णः प्रफुल्लकमलेक्षणः । शङ्खचक्रगदापद्मधारी

गरुड-वाहनः ॥ स्वर्ण-यज्ञोपवीति च स्मेरचारुतराननः । किरीटी कुण्डली चैव वनमाला-विभूषितः ॥" इति पाद्मे क्रियायोगसारे ।

द्वेष-रागौ सदैवैतौ महिषाजौ भयावहौ ।
छेदयेज् ज्ञानखड्गेन श्रीदुर्गा-सन्निधौ मुदा ॥७॥

श्रीदुर्गां पूजयेन्नित्यं भास्वरां जगदम्बिकाम् ।
चित्त-चत्वे विधानेन निश्चलेनान्तरात्मना ॥८॥

यदैवैतौ बलिच्छागौ पूजा-विघ्नं करिष्यतः ।
तदैवैतौ बली तस्यै भगवत्यै निवेदयेत् ॥९॥

बलिच्छागौ—[ बली = महिषः । ] महिष-छागौ ॥

बलिः—पूजोपहारः ॥ देवतोद्देशेन घातार्थोपकल्पितच्छागादिः । यथा भविष्ये—"अजानां महिषाणाञ्च मेषाणान्तु तथा वधात् । प्रीणयेद् विधिवद् दुर्गां मांस-शोणित-तर्पणैः ॥"

हन्यादेक-प्रहारेण, घातयेत्तौ त्वरान्वितः ।
बली दत्वा महाभक्त्या देव्या स्तर्पण माचरेत् ॥१०॥

पूजनं फलदं नैव बलि-दान-विवर्जितम् ।
बलिना पूजनेनैव निर्वाणं साध्यते परम् ॥११॥

पर-वैराग्य-संयुक्त-प्रत्याहारेण पूजनम् ।
कल्याणाय ह्यनन्ताय भवेत्तन्नित्य-योगिनाम् ॥१२॥

वैराग्येण विना पूजा भवत्येव निरर्थका ।
पूजां विना विरागत्वं मोक्ष-फलं ददाति नो ॥१३॥

एतावुभौ महोपायौ युगपद्धि समाश्रयेत् ।
समाश्रयेत् प्रयत्नेन, समाश्रये महोद्यमः ॥१४॥

अवयवौ विरागस्य द्वावेव मुनि-सम्मतौ ।
काम-क्षयो मनो-नाशः समूलतो विचारतः ॥१५॥

काम-क्षयं मनो-नाशं ब्रह्म-ध्यान मतन्द्रितः ।
परिनिर्वाण-सिद्ध्यर्थं युगपद्धि समाचरेत् ॥१६॥

तमो-निद्रादिका विघ्ना दहन्ते योग-वह्निना ।
अतएव तपः कुर्यात् सुसमाहित-मानसः ॥१७॥

विघ्नाः—(१) लयो विघ्नः ॥ अखण्डवस्त्वनवलम्बनेन चित्त-वृत्ते र्निद्रा । इति वेदान्तसारः ॥ [ लयो द्विविधः । चिरकाल-युक्ताष्टाङ्गसहित--निर्विकल्पकसमाध्यभ्यासपाटवेनातितप्तलोहतल-क्षिप्त-जलबिन्दुवत् तैलरहित-दीपकलिकावच्च प्रत्यगभिन्ने परमा-नन्दे चित्तवृत्तेर्लयः प्रथमः । द्वितीयस्तु मूर्छावस्थावत् आलस्येन चित्तवृत्ते र्बाह्य-शब्दादिविषय-ग्रहणानादरे सति प्रत्यगात्म-स्वरूपानवभासनात् वृत्तेः स्तब्धीभावलक्षण-निद्रा-रूपः ॥ सुबो-धिन्याख्या तट्टीका ॥ ] (२) विक्षेपो विघ्नः ॥ अद्वितीय-वस्त्वनवलम्बनेन चित्तस्य अन्यावलम्बनम् । इति वेदान्तसारः ॥

(३) कषायो विघ्नः ॥ लयविक्षेपाभावेऽपि चित्तवृत्ते रागादि-वासनया स्तब्धीभावात् अखण्डवस्त्वनवलम्बनम् । इति वेदान्तसारः ॥ (४) रसास्वादो विघ्नः ॥ अखण्डवस्त्वनवलम्बनेनापि चित्त-वृत्तेः सविकल्पानन्दास्वादनम् ॥ समाध्यारम्भसमये सविकल्पानन्दास्वादनं वा । इति वेदान्तसारः ॥ उक्त सविकल्पकसमाध्योर्मध्ये द्वितीयः शब्दाननुविद्ध स्त्रिपुटीविशिष्ट स्तस्मिन् य आनन्दो बाह्यशब्दादिविषयप्रपञ्चभारत्यागप्रयुक्तो न तु चैतन्यप्रयुक्तः । यथा निधिग्रहणाय प्रवृत्तस्य निधि-परि-पालक-भूतप्रेताद्यावृतस्य निधिप्राप्त्यभावेऽपि भूताद्यनिष्ट-निवृत्तिमात्रेण कोऽपि महानन्दो भवति तथा सविकल्पक-समाधावखण्ड वस्त्वनवलम्बनेन नित्यानन्द रसास्वादनाभावेऽपि अनिष्ट-बाह्यप्रपञ्च-निवृत्ति जन्यानन्दं सविकल्पकरूपं ब्रह्मानन्द-भ्रमेण स्वादयति तद् रसास्वादन मित्यर्थः ॥ लक्षणान्तर माह । निर्विकल्पक-समाध्यारम्भकाले ऽनुभूयमान सविकल्पकानन्द त्यागा-सहिष्णुतया पुन स्तस्यैवास्वादनं रसास्वाद इत्यर्थः । इति सुबोधन्याख्या तट्टीका ॥ "व्याधिस्त्यानसंशयप्रमादालस्या-विरति-भ्रान्ति-दर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपा-स्तेऽन्तरायाः ॥" पातः ॥

संकल्प-वर्जनाच्चैव विषये दोष-दर्शनात् ।
ब्रह्म-ध्यानादिका न्नित्यं मनो याति विशुद्धताम् ॥१८॥

विशुद्धे हृदये रम्ये नरीनर्तिष्यते शिवः ।
महायोगेश्वरः शम्भु र्योग-सिद्धि-स्वरूपकः ॥१८॥

---

## चतुर्द्दशोल्लासः ।

यन्न प्रकाशितं तस्य नास्ति सत्ता ह्यवस्तु तत् ।
यच्च प्रकाशितं तद्धि वस्तु नाम, न संशयः ॥१॥

शब्द-गन्ध-रस-स्पर्श-रूपमयं चराचरम् ।
सर्वं बोधमयं विश्वं सदा चित्तमयं ध्रुवम् ॥२॥

चित्तार्णव-तरङ्गोऽयं संसारोऽत्यन्त-भीषणः ।
मनोमयं जगत् सर्वं जगन्मयं सदा मनः ॥३॥

यथा तरङ्ग-रूपेण जल मेवावभासते ।
तथा संसार-रूपेण चित्तमेवावभासते ॥४॥

चित्ते नष्टे जगन्नष्टं, चित्ते स्थिते जगत् स्थितम् ।
चराचरं जगत् सर्वं चित्ताभिन्नं सुनिश्चितम् ॥५॥

घट श्चित्तं पट श्चित्तं चित्तं सुन्दर-कुत्सितम् ।
सर्वमेव भवे च्चित्तं चित्ताद् भिन्नं न वर्तते ॥६॥

सम्भवे न्न विना चित्तं संसारानुभवः कदा ।
तावदेव जगद् दृष्टं याव च्चित्तस्य चित्तता ॥७॥

चित्तस्य यज् जगज्-ज्ञानं तदेव बन्धनं ध्रुवम् ।
चित्ते नष्टे जगन्नष्टं, बन्धाद् विमुच्यते पुमान् ॥८॥

निःशेषेण जगद्-भावं त्यक्त्वा ब्रह्ममयं यदा ।
भवत्येव मनः पुंसां—शुद्धं नष्टं तदोच्यते ॥९॥

चिन्तामये मनो-व्योम्नि विश्वं विभासतेऽखिलम् ।
चिन्ता-शून्ये मनो-व्योम्नि नास्ति विश्वं चराचरम् ॥१०॥

निश्चिन्तत्वं परस्त्यागो, निश्चिन्तत्वं परं तपः ।
निश्चिन्तत्व-समापन्नो भवेद् ब्रह्म-मयो ध्रुवम् ॥११॥

एको देवः सदा-शान्तो निर्विकारो विराजते ।
कस्य चिन्ता कुत श्चिन्ता कथं चिन्ता भविष्यति ॥१२॥

अद्वितीय-चिदानन्द-चिन्तनेन भवेन्मनः ।
लय-विक्षेप-हीनञ्च निर्मलञ्च सुनिश्चलम् ॥१३॥
जाग्रदादि-विनिर्मुक्तं द्वैत-हीनं निरामयम् ।
पूर्ण-ब्रह्ममयं शान्तं सर्वोपाधि-विवर्जितम् ॥१४॥

———

## पञ्चदशोल्लासः ।

'जडं' 'जडं' कथं नित्यं गदे माया-विमोहितः ।
कदा कुत्र जडं दृष्टं ?—चिदेकैव विराजिता ॥१॥

गदेः—वदेः ॥

जडं नैव जगत् सर्वं, चिन्मात्रं तत् सुनिश्चितम् ।—
विश्वं ब्रह्ममयं—स्पष्टं दृश्यते युक्त-योगिना ॥२॥

चित्त मेकायनं कृत्वा यदा निर्मल-मानसः ।
कश्चि देकं पराणुञ्च नरः कश्चित् प्रपश्यति ॥३॥
पराणु र्जडतां त्यक्त्वा चिद्‌-रूपेण-विभासते ।
पराणौ दृश्यते ब्रह्म पूर्णमेकं निरंशकम् ॥४॥

एकायनम्—एकाग्रम् ।

यद्‌ यद्‌ द्रव्यं नरैः प्राज्ञै र्दृश्यते सु-समाहितैः ।
सम्यग्‌-दर्शनत स्तत् तद्‌ विभाति चिन्मयं ध्रुवम् ॥५॥

सर्वमेव खलु ब्रह्म—जडता नास्ति कुत्रचित् ।
सर्वत्रै व परं ब्रह्म पूर्ण-रूपेण राजते ॥६॥

असम्यग्‌-दर्शनेनैव जडवत् प्रतिभाति यत् ।
तदेव, नात्र सन्देहः, पूर्णं ब्रह्म चिदात्मकम् ॥७॥

अन्धस्यान्धं यथा विश्वं, तथा जग ज्जडात्मकम् ।
असम्यग्-दर्शिनां पुंसां चञ्चलानां जडात्मनाम् ॥८॥
अन्धम्—अन्धकारः ।

सत्य-दृष्ट्या भवत्येव सर्वं विश्वं शिवात्मकम् ।
अन्तर्बहिः पुरः पश्चाद् ब्रह्मैवैकं विराजितम् ॥९॥

न कुत्रापि जडं विश्वं ;—ब्रह्म सर्वत्र केवलम् ।
सम मेकरसं नित्यं स्व-प्रकाशं सदातनम् ॥१०॥

जड-रूपेण यद् भाति, भ्रान्ति स्त न्नात्र संशयः ।
भ्रान्तिरेव नृणां रोगो,—नाश्यो ज्ञान-रसायनात् ॥११॥
रसायनम्—जरा-व्याधि-नाशकौषधम् ॥

भ्रान्तौ विगलितायाञ्च जडत्वं विलयं व्रजेत् ।—
तदैव भासते ब्रह्म शुद्धाद्वैतं चिदात्मकम् ॥१२॥

---

## षोडशोल्लासः ।

भ्रान्तिः पञ्चाङ्ग-संयुक्ता मोहयत्येव मानसम् ।
मिथ्याज्ञानं भवत्येषा सर्व-भूताशय-स्थितम् ॥१॥

'जीवात्म-परमात्मानौ ध्रुवं भिन्नौ स्वरूपतः ।'—
इति प्राथमिकी भ्रान्ति र्माया-मोहित-चेतसः ॥२॥

[ द्वैत-वादी = ईश्वरातिरिक्त-जीव-वक्ता । तस्य मतं यथा । परमात्मनो जीवात्मा पृथक् । तन्मध्ये केषाञ्चिन्मते प्रकृति रतिरिक्ता, केषाञ्चिन्मते प्रकृति रदृष्टमात्रे पर्यवसिता एवं जीवश्च पृथक् । अत्र प्रमाणम् जन्म-कर्म-मरणानां प्रतिनियमादयुगपत् प्रवृत्तेश्च । पुरुष-बहुत्वं सिद्धं त्रैगुण्य-विपर्ययाच्चैव । इति सांख्यमतम् ॥ तत्रेश्वरः सर्वज्ञः परमात्मा एक एव । जीवः प्रतिशरीरं भिन्नः विभु र्नित्यश्च । इति गोतम मतम् ॥ इह ब्रह्मणो जीवेतरत्व प्रतिपादनात् तयोरद्वैतं नाभिमतम् । नेतरोऽनुपपत्ते र्भेद-व्यपदेशाच्च मुक्तोऽप्यसृप्य—व्यपदेशादाकाशोऽर्थान्तरत्वादि-व्यपदेशाद् भोग-मात्र-साम्य-लिङ्गा च्चेति सूत्रै र्मोक्षेऽपि तयो र्द्वैत-निरूपणाच्च। इति गोविन्द-भाष्य-मतम् ॥ यतो द्वैत-मते युक्तिरेव प्रमाणं युक्त्या यत् फलति तदेव सर्वाध्यात्मविद्या-प्रति-पादक-श्रुतीनां तात्पर्यम् ॥ इति रामानुज-मतञ्च ॥ ]

'आत्मैव भवति ज्ञाता, कर्ता, भोक्ता ; सुनिश्चितम् ।'—
इति द्वितीयिका भ्रान्तिः संसार-भ्रम-कारणम् ॥३॥

'त्रिपुरे निवस न्नित्य' जीवः सङ्गी, न संशयः ।'—
एवं तृतीयिका भ्रान्ति दोष-दुर्बलताऽऽलयः ॥४॥
त्रिपुरे—देह-त्रये ।

'ब्रह्माण्ड-कारणं ब्रह्म विकारेणान्वितं ध्रुवम् ।'—
एवं चतुर्थिका भ्रान्तिः पुंसां विकृत-चेतसाम् ॥५॥

'ब्रह्मणस्तु पृथक्त्वेन स्वाधीना च यथार्थता ।
जगतोऽस्ति, न सन्देहो'—भ्रान्ति र्भवति पञ्चमी ॥६॥

विचारेण च योगेन यदा चित्तं विमुञ्चति ।
सर्वां भ्रान्तिं, तदा तस्मिन् परालोकः प्रकाशते ॥७॥

दर्पणादि-सहायेन बिम्ब एव यथा नरैः ।
प्रतिबिम्ब-स्वरूपेण गृह्यते भेद-भावतः ॥८॥
उपाधि-वशत स्तद्वन् निष्कलः परमेश्वरः ।
गृह्यते जीव-रूपेण ;—तयो र्भेदो न विद्यते ॥९॥

जवा-वर्णो यथाऽध्यस्तो भवति स्फटिकाम्बरे ।
बुद्धि-धर्म स्तथाऽध्यस्तो भवत्येव चिदम्बरे ॥१०॥

घटेन विद्यमानेन, महाकाशो न लिप्यते ।
देहेन वर्तमानेन तथैवात्मा न लिप्यते ॥११॥

सर्वं विश्वं भवेद् ब्रह्म, तरङ्गश्च जलं यथा ।
ब्रह्मणो हि जलस्येव ध्रुवं नास्ति विकारिता ॥१२॥

रज्जु रेका यथा सत्यं, यथा सर्पो मृषामयः ।
ब्रह्माद्वयं तथा सत्यं, तथा विश्वं मृषामयम् ॥१३॥

विश्वास-स्थापनं द्वैते स्वात्म-कर्तृत्व-भावनम् ।
'देहोऽहं'-चिन्तनं मोहाद्, विश्वे सत्यत्व-दर्शनम् ॥१४॥
बन्धनाय भवन्त्येव संसाराय भयाय च ।
परिज्ञात-स्वरूपस्य न भयं नापि बन्धनम् ॥१५॥

दृश्यते श्रूयते किंवा स्मर्यते यद् प्रकल्प्यते ।
चिद्विवर्तो भवेत् सर्वं मिथ्यामय मशाश्वतम् ॥१६॥

किञ्चि न्नास्ति विना ब्रह्म ; त्यज्यं ग्राह्यं कथं कुतः ।
इदं मितं पर श्चायम् इति भेदो कथं कुतः ॥१७॥

त्याज्यं ग्राह्यं भवेद् यावद् मोक्ष स्तावत् कथं कुतः ।
त्याज्यं ग्राह्यं यदा न स्त स्तदा बन्धः कथं कुतः ॥१८॥

अहङ्कारे लयं प्राप्ते, चित्ते विलीनतां गते ।
उदेति मानसाकाशे सोऽहं-वृत्तिः सुलक्षणा ॥१९॥

प्रणश्यन्ति ततः कामा मुनीनां भावितात्मनाम् ।
ततो विभाति चैतन्यं सर्वोपाधि-विवर्जितम् ॥२०॥

भेद-भ्रमो लयं याति सर्वथा तदनन्तरम् ।
ब्रह्मात्मतां तदा योगी लभते ब्रह्म चिन्तयन् ॥२१॥

तदा शम्भुं समाश्रित्य योगिनोऽक्लिष्ट-कर्मणः ।
चित्तं मुञ्चत्यशेषेण सत्वरं विषयं-विषम् ॥२२॥

तदा शम्भु मभेदेन साक्षात्-करोति भाग्यवान् ।
तदा स भवति ब्रह्म योग-तत्पर-मानसः ॥२३॥

---

## सप्तदशोल्लासः ।

या तु भाति परिच्छिन्ने, सा मायेति निगद्यते ।
'विश्व-मोहतया माया'—प्रोक्त मेतत् सुवैष्णवैः ॥१॥

स्वप्नेन्द्रजालवल्लोके या करोति परादभुतम् ।
विपरीत-प्रतीतिञ्च संसाधयत्यनारतम् ॥२॥

ईश्वरस्य परा शक्ति रचिन्तित-फल-प्रदा ।
सैव माया महामोहा कार्य-कारण-रूपिणी ॥३॥

माया-शक्त्यनुभावेन तनुते परमः-शिवः ।
बन्ध-मोक्ष-मयीं लीलां विचित्रां परमाद्भुताम् ॥४॥

अनुभावः—प्रभावः । तनुते—[तन् (विस्तारे, to spread.)]

गृहीत-विश्व-रूपः स धृत-विश्व-कलेवरः ।
गृहीत-पशु-भावश्च देवित्वाऽपि न दीव्यति ॥५॥
सर्वदा सकलं कर्म कुर्वन्नपि करोति नो ।
धारयन्नपि विश्वानि निःसङ्गः स न लिप्यते ॥६॥—
एतेषु सर्वदा पश्येन्मायाशक्तिं पटीयसीम् ।
नित्यं घटयते माया वैचित्र्यं विस्मयावहम् ॥७॥

देवित्वा—क्रीडित्वा ॥ पटीयसी—अतिशय-पटुः ।

रज्जौ भुजङ्गता नास्ति, तथापि कम्पते पुमान् ।—
माया-शक्तिर्भवत्येषा महा-भ्रान्ति-करण्डिका ॥८॥

विस्मृतात्मा नरो देहम् आत्मानं मन्यते सदा ।
दुःखे सुखायते नित्यं ;—मायैवैषा महाबला ॥९॥

गर्भस्थो बालको नित्यं सुख-दुःखानि विन्दते ।
जन्मना विस्मरत्येव ;—मायैवैषा परादभुता ॥१०॥

प्रवृत्त्या चालिताः सर्वे निरिच्छन्तोऽपि चावशाः ।
महामाया-प्रभावेण संसार-स्थिति-कारिणा ॥११॥

भ्राम्यन्ति घोर-संसारे सर्वे माया-विमोहिताः ।
मायामयं जगत् सर्वं नाम-रूप-क्रियात्मकम् ॥१२॥

महामाया-प्रभावेण मानव श्चपलायते ।
महामाया-प्रभावेण सर्वदा कलहायते ॥१३॥
कलहायते—कलहं करोति ।

पुत्रायते महामाया पित्रीयते सखीयते ।
वैरायते महामाया नर्तकी विश्व-रूपिणी ॥१४॥
पुत्रायते—पुत्र इव आचरति । पित्रीयते—पितेव आचरति ।
सखीयते—सखा इव आचरति । वैरायते—वैरं करोति ।

विश्व-विलासिनी माया विश्व-कारण-रूपिणी ।
महामायाविनी माया जगन्मोहन-कारिणी ॥१५॥

'इदं नेदं महामाया' चेति नित्य न्तु मानवाः ।
विद्या-भाव-समाक्रान्ता विवदन्ते परस्परम् ॥१६॥—
एतच्चापि महामाया-कार्यं भ्रान्तिमयं ध्रुवम् ।
माया-कार्यं जगत् सर्वं मिथ्यामयं सुनिश्चितम् ॥१७॥

'अहं मुक्तः, स मोक्षार्थी, बद्ध स्त्वम्'—इति निश्चयः ।—
माया-कार्यं ध्रुवं सोऽपि ;—नैव बन्धो न मोक्षणम् ॥१८॥

'मायाऽस्ती'ति ध्रुवं माया महामोह-स्वरूपिणी ।—
माया नास्ति, जग न्नास्ति, नास्ति किञ्चिद् विना शिवम्॥१९॥

अध्यात्म-ज्ञान-सम्पन्नो ध्याय न्नात्मान मात्मनि ।
ब्रह्म-ज्ञाने समुत्पन्ने मायां संहन्ति मानवः ॥२०॥

---

## अष्टादशोल्लासः ।

आत्मत्वेनाभिमानश्च यो जीवाना मनात्मनि ।
स एव प्रोच्यते बन्धो मुनिभि स्तत्त्व-दर्शिभिः ॥१॥

अज्ञानं बन्धनं नित्यम् अहङ्कारश्च बन्धनम् ।
'देहोऽहं' बन्धनं प्रोक्तं, बन्धः पदार्थ-भावनम् ॥२॥

संकल्प-सम्भवो बन्धः, सङ्गो बन्धः सुनिश्चितम् ।
ममत्वं बन्धनं नित्यं, वासना बन्धनं दृढम् ॥३॥

'उपादेय मिदं ग्राह्यं, त्याज्यं हेय मद स्तथा' ।—
एतद्धि बन्धनं नृणां संसाराङ्कुर-कारणम् ॥४॥

ममत्व-भाजनं सर्वं धनं जनं क्रियादिकम् ।
तत् सर्वं बन्धनं प्रोक्तं संसार-क्लेश-कारणम् ॥५॥

नित्याय सर्व-बन्धस्य यच्च सम्यग्-विमोचनम् ।—
तदेव कथ्यते मुक्ति र्विद्वद्भि र्ब्रह्म-वादिभिः ॥६॥

निवृत्तिः सर्व-दुःखानाम् आत्यन्तिकी सनातनी ।—
सैवात्र कथिता मुक्ति र्बुधै र्युक्ति-विशारदैः ॥७॥

नित्यानन्दस्य या प्राप्ति रनन्ताय च शाश्वती ।—
सैवाभिधीयते मुक्ति र्मुनिभिश्च मनीषिभिः ॥८॥

आत्मनो मोचनं नित्यं देह-त्रया दशेषतः ।—
तदेव प्रोच्यते मुक्तिः परिनिर्वाण-संज्ञिता ॥९॥

आत्यन्तिको लयो विष्णौ जीवस्य मुक्ति रुच्यते ।
ब्रह्म-भावे स्थिति र्नित्या—सैव मुक्ति र्निगद्यते ॥१०॥

सर्व-बन्ध-विनिर्मुक्तं निर्वाण मपुनर्भवम् ।
कैवल्यं लभते योगी सम्यग्-ज्ञान-प्रभावतः ॥११॥

अपुनर्भवम्—Cf. "न मुक्तस्य पुनर्बन्ध-योगोऽप्यनावृत्तिश्रुतेः ॥" "अपुरुषार्थत्व मन्यथा ॥" "अविशेषापत्ति रुभयोः ॥" साः प्रः सूः ॥

ब्रह्म-प्रकृति-जीवानां यथार्थं ज्ञान मुत्तमम् ।
पूर्णं यल्लभ्यते पुंसा परमेण समाधिना ॥१२॥
तदेवाद्वैत-विज्ञानं मोक्षदं भव-नाशनम् ।
नान्यथा, नान्यथा मुक्ति र्जन्म-कोटि-शतैरपि ॥१३॥

———

## एकोनविंशोल्लासः ।

प्रोक्त मत्र समासेन कार्यं यद्वद् विचारणम् ।
विचारेण विवेकेन ब्रह्म-निष्ठो भवे दरम् ॥१॥

सर्व-सङ्ग-परित्यागी सर्व-विश्व-पराङ्मुखः ।
सर्वदा शिव-रूपेण तिष्ठे च्छान्तः समाहितः ॥२॥

अद्वैत-ब्रह्म-भावात्तु न च्यवेत कदाचन ।
जीवत्वञ्च पराकुर्यात् सर्वदा सन्नतन्द्रितः ॥३॥

च्यवेत—विच्युतं न भवेत् ।

'अहं योगी', 'स वै भोगी', 'मोक्ष-कामो भवाम्यहम्' ।
'अन्नं देहि', 'नरा यान्ति', 'तत्र तस्य निकेतनम्' ॥४॥
'इदं सुखम्', 'इदं दुःखम्', 'इदं ग्राह्य मशेषतः' ।
'अहं तत्र गमिष्यामि', 'पश्यामीदं प्रयत्नतः' ॥५॥—
इत्यादिकानि सर्वाणि स्पन्दनानि विचूर्णयेत् ।
'शिवोऽहं'-स्पन्दनं नित्यं प्रयत्नेन विवर्धयेत् ॥६॥

ब्रह्माकारा तु या वृत्तिः सैव मन्त्रो न संशयः ।
मननात् त्रायते जीवं मन्त्र एष सुपावनः ॥७॥

साधना दस्य मन्त्रस्य जपना दर्थ-चिन्तनात् ।
सुनिश्चितं भवे न्मुक्तो भवे न्मृत्युञ्जयः पुमान् ॥८॥

"जन्म मृत्यु र्जरा व्याधि र्न शिवस्य कदापि मे ।
चिदानन्दः सदैवाहं सर्व-दोष-विवर्जितः ॥९॥
व्यापकोऽहं महाज्योति रखण्डोऽहं निरञ्जनः ।"—
ध्यायेदेवं परं ब्रह्म सर्वदा शान्त-मानसः ॥१०॥

ध्याना त्क्लान्तो जपे न्मन्त्रं प्रणवाख्यं सुपावनम् ।
जपा त्क्लान्तो पुन र्ध्यायेे च्चिन्मयं परमं-शिवम् ॥११॥

भिक्षाटनादिकं कर्म नियमेन प्रसुप्तवत् ।
कुर्वन् मौनी सदा भूत्वा जप-ध्याने समाचरेत् ॥१२॥

ध्यान-योग-प्रसादेन वैराग्येण प्रयत्नतः ।
समस्तान् योग-विघ्नांश्च दूरीकुर्या दशेषतः ॥१३॥

एव मभ्यासतो योगी समाधिं यात्यनुत्तरम् ।
येन पश्यति स ब्रह्म शुद्धाद्वैतं चिदात्मकम् ॥१४॥

ततोऽप्युत्साह-सम्पन्नो ध्यान-योगं समाचरेत् ।
'ब्रह्मैवाह महं ब्रह्म' भाव मेतं सदाऽऽश्रयेत् ॥१५॥

त्यक्त-देहाभिमानः सन् सुविज्ञात-सदाशिवः ।
सोऽहमस्मीति भावे तु ततो योगी भवेत् स्थितः ॥१६॥

समाधिना ततो नित्यं परं-ब्रह्मानुपश्यतः ।
ज्ञातृ-ज्ञानादिका भेदा लयं गच्छन्त्यशेषतः ॥ १७॥

भाग्यवान् स महायोगी रुद्ध-चित्तेन्द्रिय-क्रियः ।
ब्रह्म-लीनो भवत्येव ब्रह्म-रूपो निरामयः ॥१८॥

ततोऽभ्यास-बलेनैव वशीकृताः समाधयः ।
परमां स्थिति मद्वैते लभते स मुनीश्वरः ॥१९॥

सोऽहं-वृत्ति महं-वृत्तिं ततो हित्वा योगीश्वरः ।
भवत्येव प्रसन्नात्मा नित्य-पूर्णः परेश्वरः ॥२०॥
चित्-स्वभावः स्वतन्त्रश्च द्वैताद्वैत-विवर्जितः ।
निष्कलः परमानन्दो मायातीतः परात्परः ॥२१॥

एषाऽवस्था भवत्येव स्वाभाविकी सु-योगतः ।
भवत्येव सदा-भानं प्रयत्नेन विना स्वतः ॥२२॥
भानम्—प्रतीतिः ॥

इयमेवामृत-प्राप्ति रेषा मुक्तिः सनातनी ।
यल्लाभा न्नापरो लाभो यस्या नो विनिवर्तनम् ॥२३॥

सर्वावस्थासु सर्वत्र सर्वदा युक्त-योगिनः ।
शिव-भावो ह्यविच्छिन्नः शुद्धः पर्यवतिष्ठते ॥२४॥
पर्यवतिष्ठते—Becomes immoveable.

अमृतेन सुतृप्तस्य जलेन किं प्रयोजनम् ।
ब्रह्मामृत-सुतृप्तस्य विश्वेन किं प्रयोजनम् ॥२५॥

व्यापके ब्रह्म-भावे च किं मुत्क्रान्त्या प्रयोजनम् ।
शुभे काले शुभे स्थाने मृत्युना किं प्रयोजनम् ॥२६॥
उत्क्रान्तिः—देहात् जीवादेरपसरणम् ।

स्वतन्त्रस्य च पूर्णस्य नास्ति किञ्चित् प्रयोजनम् ।
नित्य-तृप्तः स योगीन्द्रः सच्चिदानन्द-विग्रहः ॥२७॥

भवत्येव स योगीशो नराकारो हरिः स्वयम् ।
जीवन्नपि सदा-मुक्तो जीवन्मुक्तः स उच्यते ॥२८॥

सुखे दुःखे समा नित्या यस्य स्निग्धा मुख-प्रभा ।
आत्म-तृप्तं सदा-तुष्टं जीवन्मुक्तं नमाम्यहम् ॥२९॥

स्वभावेनैव यो योगी सुखं भोगं न वाञ्छति ।
यदृच्छालाभ-सन्तुष्टं जीवन्मुक्तं नमाम्यहम् ॥३०॥

नैव निन्दा-प्रशंसाभ्यां यस्य विक्रियते मनः ।
आत्म-क्रीडं महात्मानं जीवन्मुक्तं नमाम्यहम् ॥३१॥

द्वेष्यं नास्ति प्रियं नास्ति नास्ति यस्य शुभाशुभम् ।
निश्चिन्तं चिन्मयात्मानं जीवन्मुक्तं नमाम्यहम् ॥३२॥

नास्ति कार्यं मकार्यं वा यस्य किञ्चिदपि ध्रुवम् ।
पाप-पुण्य-विहीनं तं जीवन्मुक्तं नमाम्यहम् ॥३३॥

नित्यं जाग्र दवस्थायां सुप्तवद् योऽवतिष्ठते ।
सर्व-दोष-विनिर्मुक्तं जीवन्मुक्तं नमाम्यहम् ॥३४॥

नाभिनन्दति मृत्युञ्च नाभिनन्दति जीवनम् ।
हेयोपादेय-हीन न्तं जीवन्मुक्तं नमाम्यहम् ॥३५॥

'मयि सर्व महं सर्वं सर्वत्राहं सुनिश्चितम्' ।
एवं विनिर्णयो यस्य जीवन्मुक्तं नमाम्यहम् ॥३६॥

जडं पश्यति नो यस्तु जगत् पश्यति चिन्मयम् ।
ब्रह्म-भावः सदा यस्य जीवन्मुक्तं नमाम्यहम् ॥३७॥

माया नास्ति जगन्नास्ति यस्य ज्ञान-महोदधेः ।
सुप्रशान्तं महानन्दं जीवन्मुक्तं नमाम्यहम् ॥३८॥

स्वच्छन्दत्व-समापन्नं योग-सिद्धं जितामयम् ।
नित्य-युक्तं गुणातीतं जीवन्मुक्तं नमाम्यहम् ॥३९॥
स्वच्छन्दत्वम्—स्वतन्त्रत्वम् ।

अकृत्रिमो भवेद् यस्य ज्ञान-चन्द्रः सदोदितः ।
भेद-ज्ञान-विहीन न्तं जीवन्मुक्तं नमाम्यहम् ॥४०॥
अकृत्रिमः—अकरण-जातः ।

यस्य दर्शन-मात्रेण शुध्यन्त्येव मलीमसाः ।
तमेव जङ्गमं तीर्थं जीवन्मुक्तं नमाम्यहम् ॥४१॥
मलीमसाः—मलिनाः ।

विद्यमानतया यो हि पवते भुवन-त्रयम् ।
सामरस्यं सदानन्दं जीवन्मुक्तं नमाम्यहम् ॥४२॥

पवते—पुनाति ।

सर्व-पूज्यं सदा-पूर्णम् अखण्डानन्द-विग्रहम् ।
चित्-स्वभावं सदा-शान्तं जीवन्मुक्तं नमाम्यहम् ॥४३॥

न किञ्चि दप्यहं यस्य, चिन्मात्रे णावतिष्ठते ।
सर्वत्र-पूर्ण-रूपात्मा जीवन्मुक्तं नमाम्यहम् ॥४४॥

सर्वत्र जड-हीनात्मा त्यक्त-देह-स्मृतिः सदा ।
गुणागुण-विहीनात्मा य स्तमेव नमाम्यहम् ॥४५॥

अपरिच्छिन्न-रूपात्मा विश्वात्मा विश्व-हीनकः ।
तुरीयातीत-रूपात्मा य स्तमेव नमाम्यहम् ॥४६॥

चित्त-वृत्ते रतीत न्तं वृत्तिहीन मनामयम् ।
नमामि शिरसा नित्यं सर्व-वृत्तप्रवभासकम् ॥४७॥

वन्देऽहं परमाद्वैतं स्वतन्त्रं श्रीजगद्-गुरुम् ।
स्व-प्रकाशं चिदानन्दं नित्य-पूर्णं परात्परम् ॥४८॥

अखण्डैक-रसं वन्दे निर्मलं परमामृतम् ।
अनन्तं जगदाधारं वन्देऽहं परमेश्वरम् ॥४९॥

अखण्डं परमात्मानं वन्देऽहं परमं पदम् ।
वन्देऽहं परमं ब्रह्म वन्देऽहं परमं-शिवम् ॥५०॥

---

## टीका-परिशिष्टम्।

अग्निः—तेजः-पदार्थ-विशेषः। वह्निः। हव्य-वाहनः। हव्य-भुक्। हुताशनः। सर्व-देव-मुखः। जात-वेदाः॥ अग्नि श्चतुर्धा यथा। (१) भौमः (काष्ठेन्धनप्रभव-ऊर्ध्वज्वलनस्वभावः पचन-स्वेदादि-समर्थश्च), (२) दिव्यः (विद्युदादिश्च), (३) वाडवः, (४) जाठरः॥ जाठराग्निः पुन श्चतुर्धा—(१) समः, (२) [वायु-विकार-हेतुना] विषमः, (३) [पित्त-विकृति-हेतुना] तीक्ष्णः, (४) [कफ-विकृति-हेतुना] मन्दः॥ (१) गार्हपत्याग्निः, (२) आहवनीयाग्निः, (३) दक्षिणाग्निः—इति मुख्याग्नयः॥ "अग्ने र्दुर्धर्षता ज्योति स्तापः पाकः प्रकाशनम्। शौचो रागो लघु स्तैक्ष्ण्यं सततञ्चोर्ध्वभासिता॥" इति महाभारते॥ "पथ-स्त्री-वह्नि-सेवनं" योगिना वर्जनीयम्॥ "आरोग्यं भास्करादि-च्छेद्, धनमिच्छेत् हुताशनात्॥" इति मत्स्य-पुराणम्॥

अधर्मः—"हिंसा भार्या त्वधर्मस्य तस्यां जज्ञे तथाऽनृतम्। कन्या च निकृति स्ताभ्यां सुतौ द्वौ नरकं भयम्॥ माया च वेदना चैव मिथुनं द्वयमेतयोः। भयाज्जज्ञेऽथ वै माया मृत्युं भूतापहारिणम्॥ वेदना स्वसुतञ्चापि दुःखं जज्ञेऽथ रौरवात्। मृत्यो र्व्याधि र्जरा शोकतृष्णाः क्रोधश्च जज्ञिरे॥ दुःखोत्तराः स्मृता ह्येते सर्वे चाधर्म-लक्षणाः॥" इति मार्कण्डेय पुराणम्॥

अन्तरात्मा—जीवात्मा ॥ अन्तःकरणम् ।

अन्धकारः—तेजः-सामान्याभावः । ध्वान्तं, तमिस्रं, तिमिरं, तमः ॥ महान्धकारे—अन्धतामसम् । सर्वव्यापकान्धकारे—सन्तमसम् । अल्पान्धकारे—अवतमसम् ॥

अन्नम्—(१) स्विन्न-तण्डुलम् । भक्तम् । ओदनम् ॥ अस्य गुणाः—बुद्धि-शुक्र-प्रीति-पुष्टि-धात्विन्द्रियबल-कारित्वम् । गुरुत्वम् । क्षुधा-क्षयरोग-श्रम-कार्श्य-नाशित्वञ्च ॥ नवान्न-गुणाः—श्लेष्म-कारित्वम् । सुस्निग्धत्वम् । बृंहणत्वम् । गुरुत्वञ्च ॥ पुराणान्न-गुणाः—रूक्षत्वम् । पथ्यत्वम् । अग्निकारित्वञ्च ॥ उष्णान्न-गुणाः—हृद्यत्वम् । अग्निकारित्वम् । वायु-श्लेष्मनाशित्वम् । रक्त-पित्त-प्रकोप-कारित्वञ्च ॥ अनुष्णान्न-गुणः—बल-नाशित्वम् ॥ शीत-शुष्कान्नयोर्गुणः—दुर्जरत्वम् ॥ अतिक्लिन्नान्नगुणः—ग्लानि-कारित्वम् ॥ तण्डुलान्वितान्न-गुणः—दुर्जरत्वम् ॥ जलधौत-सद्योऽन्न-गुणाः—शीघ्र-पाकित्वम् । हिमत्वम् । लघुत्वञ्च ॥ रात्रि-स्थित-जलयुक्तान्न-गुणौ—त्रिदोष-कोप-कारित्वम् । रूक्षत्वञ्च ॥ भृष्ट-तण्डुलान्न-गुणौ—लघुत्वम् । अग्नि-प्रदीपनत्वञ्च ॥ इति राज-वल्लभः ॥ "सौमनस्यं बलं पुष्टि मुत्साहं वह्निमायुषः । स्वादु सञ्जनयत्यन्न मस्वादु च विपर्ययम् ॥" (२) भोज्य-द्रव्यमात्रम् ॥

अष्ट-सात्त्विक-भावाः—( १ ) स्वेदः । ( २ ) स्तम्भः । ( ३ ) रोमाञ्चः । ( ४ ) स्वर-भङ्गः । ( ५ ) वेपथुः । ( ६ ) वैवर्ण्यम् । ( ७ ) अश्रु । ( ८ ) प्रलयः ( मूर्च्छा ) ॥

आश्रमः—(१) ब्रह्मचारी, (२) गृही, (३) वानप्रस्थः, (४) भिक्षुः । इत्यमरः ॥ (१) ब्रह्मचारी—प्रथमाश्रमी । उपनयनानन्तरं नियमं कृत्वा गुरोः सन्निधौ स्थित्वा साङ्ग-वेदाध्ययनं करोति यः । "बालः कृतोपनयनो वेदाहरण-तत्परः । गुरु-गेहे वसेद् भूप ब्रह्मचारी समाहितः ॥ शौचाचारवता तत्र कार्यं शुश्रूषणं गुरोः । व्रतानि चरता ग्राह्या वेदाश्च कृत-बुद्धिना ॥ उभे सन्ध्ये रविं भूप तथैवाग्निं समाहितः । उपतिष्ठेत् तथा कुर्याद् गुरोरप्यभिवादनम् ॥ स्थिते तिष्ठेद् व्रजेद् याति नीचैरासीत चासति । शिष्यो गुरौ नृप-श्रेष्ठ प्रतिकूलं न संभजेत् ॥ तेनैवोक्तः पठेद् वेदं नान्य-चित्तः पुरः-स्थितः । अनुज्ञातश्च भिक्षान्नम् अश्नीयाद् गुरुणा ततः ॥ गृहीतग्राह्यवेदश्च ततोऽनुज्ञामवाप्य वै । गार्हस्थ्य मावसेत् प्राज्ञो निष्पन्न-गुरु-निष्कृतिः ॥" इति विष्णु-पुराणे ॥ "संनियम्येन्द्रियग्रामं तपोवृद्ध्यर्थ मात्मनः । नित्यं स्नात्वा शुचिः कुर्याद्देवर्षिपितृतर्पणम् । देवताभ्यर्चनञ्चैव समिदाधान-मेव च ॥ वर्जयेन्मधुमांसञ्च गन्धं माल्यं रसान् स्त्रियः । शुक्तानि यानि सर्वाणि प्राणिनाञ्चैव हिंसनम् ॥ अभ्यङ्गमञ्जनञ्चाक्ष्णो रुपानच्छत्रधारणम् । कामं क्रोधञ्च लोभञ्च नर्तनं गीत-वादनम् ॥ द्यूतञ्च जनवादञ्च परिवादं तथाऽनृतम् । स्त्रीणाञ्च प्रेक्षणालम्भ मुपघातं परस्य च ॥ एकः शयीत सर्वत्र न रेतः स्कन्दयेत् क्वचित् । कामाद्धि स्कन्दयन् रेतो हिनस्ति व्रत-मात्मनः ॥ स्वप्ने सिक्त्वा ब्रह्मचारी द्विजः शुक्र मकामतः । स्नात्वा-

कमर्चयित्वा त्रिः पुनर्मामित्यृचं जपेत् ॥" "हीनान्नवस्त्रवेशः स्यात् सर्वदा गुरु-सन्निधौ ।" "गुरोर्यत्र परिवादो निन्दा वापि प्रवर्तते । कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ॥" इति मानवे ॥ स तु द्विविधः । यथा । "ब्रह्मचार्युपकुर्वाणो नैष्ठिको ब्रह्म-तत्परः ॥ योऽधीत्य विधिवद् वेदान् गृहस्थाश्रममाव्रजेत् । उपकुर्वाणको ज्ञेयो, नैष्ठिको मरणान्तिकः ॥" इति कौर्मे ॥ (२) गृहस्थः—द्वितीयाश्रमी । "संस्कारैः संस्कृतः पूर्वं यथावच्चरित-व्रतः ॥ जातौ गुण-विशिष्टायां समावर्तेत वेदवित् ॥ स्वदार-निरतो नित्यं शिष्टाचारो जितेन्द्रियः । पञ्चभिश्च महायज्ञैः श्रद्धानो यजेदिह ॥ देवतातिथिशिष्टाशी निरतो वेद-कर्मसु । इज्या-प्रदानयुक्तश्च यथाशक्ति यथाविधि ॥ नित्यं यज्ञोपवीती स्यात् शुक्ल-वासाः शुचिव्रतः । नियतो दम-दानाभ्यां सदा शिष्टैश्च संविशेत् ॥ जित-शिश्नोदरो मैत्रः शिष्टाचार-समन्वितः । दान-मध्ययनं यज्ञो धर्म-युक्तानि तानि तु । तेष्वप्रमादं कुर्वीत त्रिषु कर्मसु धर्मवित् ॥ दान्तो मैत्रः क्षमायुक्तः सर्वभूत-समो मुनिः । सर्वमेतद् यथाशक्ति विप्रो निर्वर्तयन् शुचिः ॥ एवं युक्तो जयेत् स्वर्गं गृहस्थः संशित-व्रतः ॥" इति महाभारते ॥ (३) वान-प्रस्थः—तृतीयाश्रमी । "वानप्रस्थाश्रमं वक्ष्ये तत् शृण्वन्तु महर्षयः ॥ पुत्रेषु भार्यां निक्षिप्य वनं गच्छेत् सहैव वा ॥ वान-प्रस्थो ब्रह्मचारी साग्निः सोपासनः क्षमी । अफालकृष्टेनाग्नींश्च पितृदेवातिथीं स्तथा ॥ भृत्यांस्तु तर्पयेत् श्मश्रुजटालोमभृदात्मवान् ।

दान्त स्त्रिषवणस्नायी निवृत्तश्च प्रतिग्रहात्॥ स्वाध्यायवान् ध्यानशील: सर्वभूतहिते रत:॥" इति गारुडे॥ "अपत्य-सन्ततिं दृष्ट्वा प्राज्ञो देहस्य चायतिम्। वानप्रस्थाश्रमं गच्छे दात्मन: शुद्धि-कारणम्॥ तत्रारण्योपभोगैन तपोभि श्चात्म-दर्शनम्। भूमौ शय्या ब्रह्मचर्यं पितृदेवातिथिक्रिया॥ होम स्त्रिषवणस्नानं जटा-वल्कल-धारणम्। वन्य-स्नेह-निषेवित्वं वानप्रस्थविधिस्त्वयम्॥" इति वामने॥ "न नक्तं किञ्चिदश्नीयात् रात्रौ ध्यानपरो भवेत्॥ जितेन्द्रियो जितक्रोध स्तत्त्व-ज्ञान-विचिन्तक:। ब्रह्मचारी भवे न्नित्यं न पत्नीमपि संश्रयेत्॥"
(४) भिक्षु:—चतुर्थाश्रमी। य: सर्वं स्पृहादिकं त्यक्त्वा मुण्डित-मुण्डो गैरिक-कौपीनाच्छादनं दण्डं कमण्डलुञ्च विभ्रत् भिक्षा-वृत्ति र्निर्जने तीर्थे वा स्थित्वा केवलं ईश्वराराधनं करोति स:। (ईश्वराराधनं सर्वेषां वर्णानाम् आश्रमाणाञ्च साधारणो धर्म:॥)

---

इन्द्रियम्—ज्ञान-कर्म-साधनम्॥ तत्र तु ज्ञानेन्द्रियाणि पञ्च यथा। (१) कर्ण:, (२) त्वक्, (३) चक्षु:, (४) जिह्वा, (५) नासिका॥ कर्मेन्द्रियाणि पञ्च यथा। (१) वाक्, (२) पाणि:, (३) पाद:, (४) पायु:, (५) उपस्थ:॥ अन्तरिन्द्रियाणि चत्वारि यथा। (१) मन:, (२) बुद्धि:, (३) अहंकार:, (४) चित्तम्॥ "मनोबुद्धिरहंकार-श्चित्तं करण मान्तरम्। संशयो निश्चयो गर्व: स्मरणं विषया श्रमी॥" मन: समुदय-ज्ञानकर्मेन्द्रियाणां नियामकम्। चतुर्दशदेवा श्चतुर्दशेन्द्रिय-नियन्तार:॥

ऋषिः—"सप्त ब्रह्मर्षि देवर्षि महर्षि परमर्षयः। काण्ड-र्षिश्च श्रुतर्षिश्च राजर्षिश्च क्रमावराः ॥" (१) वशिष्ठाद्या ब्रह्मर्षयः [ ब्रह्म ( ब्रह्मज्ञः ) + ऋषिः ] । (२) नारदाद्या देवर्षयः [देवतुल्यो मान्याः] । (३) व्यासाद्या महर्षयः । (४) भेलाद्याः परमर्षयः । (५) जैमिन्याद्याः काण्डर्षयः [वेदकाण्ड-विशेषाध्यापक-मुनि-भेदः ] । (६) सुश्रुताद्याः श्रुतर्षयः [ ऋग्-यजुः-साम्नां संहितास्तैः कृताः ] । (७) ऋतुपर्णादयो राजर्षयः ॥ सप्तर्षयः—सप्तसंख्यकर्षयः । [ नक्षत्र-सप्तकम्—The Great Bear ] [ मन्वन्तर-भेदे सप्तर्षि-नामानि भागवतादि ग्रन्थेषु वर्णितानि । ]

कविः—[कव् ( स्तुतौ ) + इ ( कर्तरि ) ] [ ईश्वर-स्तुत्यर्थं] रसात्मक-वाक्य-रचकः ॥ पण्डितः ॥ इत्यमरः ॥

'कृष्ण'-शरीरस्य नित्यत्वम्—"श्रीसनत्कुमार उवाच । भद्रं वो मुनयः शश्वत् तपसां फलमीप्सितम् । कृष्णस्य कुशल-प्रश्नं शिव-बीजस्य निष्फलम् ॥ साम्प्रतं कुशलं वश्च दर्शनं परमात्मनः । भक्तानुरोधाद्देहस्य परस्य प्रकृतेरपि ॥ निर्गुणस्य निरीहस्य सर्व-बीजस्य चेतसः । भारावतारणायैव चाविर्भूतस्य साम्प्रतम् ॥ श्रीकृष्ण उवाच । शरीर-धारिणश्चापि कुशल-प्रश्न-मीप्सितम् । तत्कथं कुशल-प्रश्नं मयि विप्र न विद्यते ॥ सनत्कुमार उवाच । शरीरे प्राकृते नाथ सन्ततञ्च शुभाशुभम् । नित्यदेहे क्षेमबीजे शिव-प्रश्न मनर्थकम् ॥ श्रीभगवानुवाच । यो यो विग्रहधारी च स च प्राकृतिकः स्मृतः । देहो न विद्यते

विप्र तां नित्यां प्रकृतिं विना ॥ सनत्कुमार उवाच । रक्तबिन्दूद्भवा देहा स्ते च प्राकृतिकाः स्मृताः । कथं प्रकृति-नाथस्य बीजस्य प्राकृतं वपुः ॥ सर्व-बीजस्य सर्वादिर्भवांश्च भगवान् स्वयम् । सर्वेषामवताराणां प्रधानं बीजमव्ययम् ॥ कृत्वा वदन्ति वेदाश्च नित्यं नित्यं सनातनम् । ज्योतिः-स्वरूपं परमं परमात्मानमीश्वरम् ॥ मायया सगुणञ्चैव मायेशं निर्गुणं परम् । प्रवदन्ति च वेदाङ्गा स्तथा वेद-विदः प्रभो ॥ श्रीकृष्ण उवाच । साम्प्रतं वासुदेवोऽहं भक्त-वीर्याश्रितं वपुः । कथं न प्राकृते विप्र शिव-प्रश्न मभीप्सितम् ॥ सनत्कुमार उवाच । वासः सर्व-निवासश्च विश्वानि यस्य लोमसु । तस्य देवः परं ब्रह्म वासुदेव इतीरितः ॥ वासुदेवेति तन्नाम वेदेषु च चतुर्षु च । पुराणेष्वितिहासेषु यात्रादिषु च दृश्यते ॥ रक्त-वीर्याश्रितो देहः कृते वेदे निरूपितः । साक्षिणो मुनयश्चात्र धर्मः सर्वत्र एव हि ॥ साक्षिणो मम वेदाश्च रवि-चन्द्रौ च साम्प्रतम् ॥ इति ब्रह्म-वैवर्ते ॥

कोष-पञ्चकम्—कोषा इवात्माच्छादकत्वेन कोषाः । ते च पञ्चविधाः । (१) अन्न-विकारत्वात् स्थूल-शरीरम् अन्नमय-कोषः । (२) पञ्चकर्मेन्द्रिय सहित-प्राण-पञ्चकं प्राणमय-कोषः । (३) पञ्च-ज्ञानेन्द्रिय-सहितं मनः मनोमय-कोषः । (४) पञ्च-ज्ञानेन्द्रिय-सहिता बुद्धिः विज्ञानमय-कोषः । (५) अविद्यात्मका आनन्दमय-कोषः ॥

क्लेशः—स तु पञ्चविधः। (१) अविद्या। (२) अस्मिता। (३) रागः। (४) द्वेषः। (५) अभिनिवेशः॥

गुप्तम्—"आयुर्वित्तं गृहच्छिद्रं मन्त्र-मैथुन-भेषजम्। अपमानन्तपो दानं नव गोप्यानि यत्नतः॥"

गुरुः—[गॄ+कु] गिरति अज्ञानं, गृणाति (उपदिशति) धर्मं यः सः। "यस्य देवे परा भक्ति र्यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः॥" इति श्रुतिः॥

गौः—तद्दुग्ध-गुणाः—पथ्यत्वम्। अत्यन्तरुच्यत्वम्। स्निग्धत्वम्। पित्तवातामय-नाशित्वम्। कान्ति-प्रज्ञाङ्गपुष्टिवीर्यवृद्धिकारित्वञ्च॥ तद्दधिगुणाः—शीतत्वम्। स्निग्धत्वम्। दीपनत्वम्। बल-कारित्वम्। अरोचकवातामयनाशित्वम्। ग्राहित्वञ्च॥ तन्नवनीत-गुणाः—शीतत्वम्। वर्ण-बल-शुक्र-कफ-रुचि-कान्ति-पुष्टि-कारित्वम्। संग्राहकत्वम्। चक्षुर्हितत्वम्। वात-सर्वाङ्गशूल-कास-श्रम-सर्वदोष-नाशित्वञ्च॥ तद्-घृत-गुणाः—हृद्यत्वम्। धीकान्तिस्मृतिबलमेधापुष्ट्यग्निवृद्धि शुक्रवपुःस्थौल्य-कारित्वम्। वातश्लेष्मश्रमपित्तनाशित्वम्। बहुगुणत्वञ्च॥ "गवां प्रत्युषसि क्षीरं गुरु विष्टम्भि दुर्जरम्॥ तस्मादभ्युदिते सूर्ये यामं यामार्धमेव वा। समुत्तार्य पयो ग्राह्यं तत् पथ्यं दीपनं लघु॥" विवत्सानां बालवत्सानाञ्च पयो दोषलम्। "गवां सितानां (क्षीरं) वातघ्नं, कृष्णानां पित्त-नाशनम्। श्लेष्मघ्नं रक्त-वर्णानां क्षीणं हन्ति कपिलापयः॥"

चन्द्रकला:—"अमृता मानदा पूषा पुष्टि-स्तुष्टी रतिर्धृतिः। शशिनी चन्द्रिका कान्ति ज्योत्स्ना श्रीः प्रीतिरङ्गदा॥ पूर्णा पूर्णामृता कामदायिन्यः शशिनः कलाः॥" इति रुद्र-जामले॥

चिकित्सा—या क्रिया व्याधि-हरणी, सा चिकित्सा। "याभिः क्रियाभि र्जायन्ते शरीरे धातवः समाः। सा चिकित्सा विकाराणां कर्म तद् भिषजां मतम्॥" "क्वचिदर्थः क्वचिन्मैत्री क्वचिद्धर्मः क्वचिद् यशः। कर्माभ्यासः क्वचिच्चेति चिकित्सा नास्ति निष्फला॥" "रोगी दूतो भिषग् दीर्घमायु र्द्रव्यञ्च सेवकः। सदौषधं चिकित्साया मित्यङ्गानि बुधा जगुः॥"

चिन्ता—"या चिन्ता स्व-कलत्र-पुत्र-भरण-व्यापार-सम्पोषणे। या चिन्ता धन धान्य भुरि यशसां लाभे सदा जायते॥ सा चिन्ता यदि नन्द-नन्दन-पद-द्वन्द्वारविन्दे क्षणं। का चिन्ता यमराज-भीमभवनद्वार-प्रयाणे मम॥"

जरा—वयःकृत-श्लथमांसाद्यवस्थाभेदः। "चक्षुर्जलञ्च व्यायामो पादाधस्तैल-सेवनम्। कर्ण-तैलं मुर्ध्नि तैलं जरा-व्याधि-विनाशकम्॥ खात-शीतोदक-स्नायी सेवते चन्दन-द्रवम्। नोपयाति जरा तञ्च निदाघेऽनिल-सेविनम्॥ प्रावृड्डुष्णोदकस्नायी घनतोयं न सेवते। समये च समाहारी जरा तं नोपगच्छति॥ शर-रौद्रं न गृह्णाति भ्रमणं तत्र वर्जयेत्। खातस्नायी समाहारी जरा तं नोपगच्छति॥ खातस्नायी च हेमन्ते काले वह्निं निषेवते। भुङ्क्ते नवान्न मुष्णञ्च जरा तं नोपगच्छति॥ शिशिरेऽ-

शुकवह्निञ्च नवोष्णान्नञ्च सेवते। यएवोष्णोदकस्नायी जरा तं नोपगच्छति॥

जल-पानम्—"भुक्तस्यादौ जलं पीतं कार्श्यं मन्दाग्निदोषकृत्। मध्येऽग्नि-दीपनं श्रेष्ठं मन्ते स्थौल्य-कफ-प्रदम्॥" "अजीर्णे जलमौषधं जीर्णे बल-प्रदम्। आहार-काले आयुर्जनकं भुक्तान्नोपरि रात्रौ न पेयम्॥" रात्रि-शेषे जल-पान-गुणाः—कास-श्वास-अतीसार-ज्वर-कुष्ठ-मुत्राघात-उदरार्श:-शिरः-कर्णनासाचक्षुरोग-वातपित्तकफत्रयज-रोग-नाशित्वम्॥ तृषितस्तु न चाश्नीयात् क्षुधितो न पिवेज्जलम्॥ मेघशून्य-रात्रिशेषे नासिका-रन्ध्रेण जलपानगुणाः—बुद्धिकारित्वम्। चक्षुर्हितत्वम्। वली-पलित-सर्वरोग-नाशित्वम्॥

जीवः—प्राणी। क्षेत्रज्ञः। आत्मा॥ "कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः।" "सर्वज्ञेशो मायालेशसमन्वितो व्यष्टिदेहं प्रविश्य तया मोहितो जीवत्वम् अगमत्। इति श्रुतिः॥ "जीवः कर्मफलं भुङ्क्ते आत्मा निर्लिप्त एव च। आत्मनः प्रतिबिम्बश्च देही जीवः स एव च॥ प्राण-देहादि-भृद्देही स जीवः परिकीर्तितः॥" ब्रः वैः॥ वेदान्तमते घटावच्छिन्नाकाशवत् शरीरत्रितयावच्छिन्नं चैतन्यम्॥ केषाञ्चिन्मते दर्पणस्थ-मुख-प्रतिबिम्बवत् बुद्धिस्थ-चैतन्य-प्रतिबिम्बम्। पाप-पुण्य-दुःख-सुखादिभिः व्याप्तो बद्धश्च मनसा कृत्रिमैः कर्म-बन्धनैः स जीवात्मा॥ तस्य देहिनः शरीर-जीवात्मनोः संयोग-कारकेन मनसा संयोगे ये ये गुणा

उत्पद्यन्ते तानाह। यथा (१) इच्छा। (२) द्वेषः। (३) सुखम्। (४) दुःखम्। (५) विषय-ज्ञानम्। (६) प्रयत्नः। (७) मनः-संकल्पः। (८) विचारणा। (९) स्मृतिः। (१०) बुद्धिः। (११) कलाविज्ञता। (१२) प्राणवायोः ऊर्ध्व-प्रेरणम्। (१३) अपान-वायोः अधः-प्रेरणम्। (१४) नेत्रोन्मेष-निमेषौ। (१५) उत्साहः॥

तत्त्व-ज्ञानम्—तत्त्वानां ज्ञानम्॥ याथार्थ्य-ज्ञानम्॥ ब्रह्म-ज्ञानम्॥ "प्रमाण-प्रमेय-संशय-प्रयोजन-दृष्टान्त-सिद्धान्तावयव-तर्क-निर्णय-वाद-जल्प-वितण्डा-हेत्वाभास-च्छल-जाती-निग्रह-स्थानानां तत्त्व-ज्ञानान्निःश्रेयसाधिगमः॥" इति गोतम-सूत्रम्॥

तैलम्—"तिलादि-स्निग्ध-वस्तूनां स्नेह स्तैलमुदाहृतम्।" इति भावप्रकाशः। अस्य गुणाः—उष्णत्वम्। पित्तकारित्वम्। श्लेष्म-वर्धकत्वम्। सर्व-वातविकार-नाशित्वम्। मेधाग्निबल-वर्धनत्वञ्च॥" "नास्ति तैलाद् परं किञ्चिद् भेषजं मारुतापहम्।" इति राज-निर्घण्टः॥ अवगाहने युक्त तैलस्य गुणः—शरीर-बल-कारित्वम्। शिरा-मुख-रोमकूप-धमनी-नाडीद्वारा तृप्ति-कारित्वञ्च॥ नित्यं मस्तके अधिकतैलदानगुणाः—शिरःशूल-खालित्य-पालित्य-नाशित्वम्। केश-मूलस्य दृढता-कारित्वम्। केशस्य घनता-कृष्णता-दीर्घता-कारित्वम्। इन्द्रियप्रसन्नताग्निशुद्धिकारित्वञ्च॥ नित्यं कर्णे तैल-पूरणस्य गुणाः—मन्याहनुसंग्रहोच्चैः श्रुतिवाधिर्य-कर्णवातजरोगाजनकत्वम्॥ मर्दने तैलस्य गुणः—घृतादष्टगुण-गुरुत्वम्॥ "प्रातः-स्नाने व्रते श्राद्धे द्वादश्यां ग्रहणे तथा। मद्य-

लेपसमं तैलं तस्मात् तैलं विवर्जयेत् ॥" वार-विशेषे तैल-ग्रहण-फलम्—रवौ हृद्रोगः । सोमे कीर्तिलाभः । कुजे मृत्युः । बुधे पुत्राप्तिः । गुरौ अर्थ-हानिः । शुक्रे शोकः । शनौ दीर्घायुः ॥

दक्षः—पटुः । निपुणः । निरालस्यः ॥ प्रजापति-विशेषः । तस्य षोडशकन्याः—श्रद्धा, मैत्री, दया, शान्तिः, तुष्टिः, पुष्टिः, क्रिया, उन्नतिः, बुद्धिः, मेधा, मूर्तिः, तितिक्षा, ह्रीः, स्वाहा, स्वधा, सती ॥

दया—यत्नादपि परक्लेशं हर्तुं या इच्छा हृदि जायते सा दया । इति पाद्मे ॥ "आत्म-वत् सर्वभूतेषु यो हिताय शुभाय च । वर्तते सततं हृष्टः क्रिया ह्येषा दया स्मृता ॥" इति मत्स्य-पुराणम् ॥

धर्मः—तस्य भार्या दक्षस्य त्रयोदशकन्याः । "श्रद्धा लक्ष्मी र्धृति स्तुष्टिः पुष्टिर्मेधा तथा क्रिया । बुद्धि र्लज्जा वपुः शान्तिः सिद्धिः कीर्ति स्त्रयोदशी ॥ पत्न्यर्थं प्रतिजग्राह धर्मो दाक्षायणीः प्रभुः ॥ तस्य अपत्यानि यथा । ऋतं, प्रसादः, अभयं, सुखं, योगः, स्मृतिः, क्षेमं, विनयम् ॥ मतान्तरे धर्मस्य भार्या अहिंसा ॥ धर्माधार-स्थानानि यथा । "वैष्णवेषु च सर्वेषु यतिषु ब्रह्मचारिषु । पतिव्रतासु प्राज्ञेषु वानप्रस्थेषु भिक्षुषु । नृपेषु धर्म-शीलेषु सत्सु सद्वैश्यजातिषु ॥ द्विज-सेविषु शूद्रेषु सत्संसर्गस्थितेषु च । एषु त्वं सन्ततं पूर्णो धर्मराज विराजसे ॥" अपि च । "अश्वत्थ-वट-बिल्वेषु तुलसीचन्दनेषु च । देवार्हेषु च पुष्पेषु विद्यमानोऽ-

सि शाखिषु। देवालयेषु तीर्थेषु सतां शश्वद् गृहेषु च॥ वेद-वेदाङ्ग-श्रवण-जनेषु च सभासु च। श्रीकृष्णगुणनामोक्त-श्रुति-गीत स्थलेषु च।…॥" इति ब्र: वै:॥ नर-घातिनां गृहेषु, नरघातिषु, नीचेषु, खलेषु, मूर्खेषु, असत्-नरेषु, धूर्तेषु, चौरेषु, रतिभूमिषु, दुरोदर-सुरापान-कलहानां स्थानेषु, शालग्राम-साधु-तीर्थ-शास्त्र-रहितेषु स्थानेषु, गर्विषु, जीव-हिंसोपजीविषु, स्त्री-जितेषु, दीक्षा-सन्धि-विष्णुभक्ति-विहीनेषु जनेषु, अपत्य-विक्रयिषु, मित्रद्रोहि-कृतघ्नेषु विश्वास-घातिषु आश्रितघ्नेषु, शश्वन्मिथ्योक्तिशीलेषु, मिथ्यासाक्षिप्रवादिषु, पुण्यकर्मविहीनेषु, पुण्यकर्मविरोधिषु—धर्मस्य अधिकारी नास्ति॥

धातु:—कफ-वात-पित्त-नामक-शरीरधारक-वस्तुत्रय:॥ रस:, रक्तम्, मांसम्, मेद:, अस्थि, मज्जा, शुक्रम्॥ महाभूतानि॥ इन्द्रियाणि॥ अश्म-विकृति:, सा तु गैरिकमन:शिलादि॥ स्वर्णादि:॥ अष्टधातवो यथा। (१) सुवर्णम्, (२) रजतम्, (३) ताम्रम्, (४) लौहम्, (५) कांस्यम्, (६) पारदम्, (७) रङ्गम् (८) सीसकम्॥ सप्तधातवो तथा—"स्वर्णं रूप्यञ्च ताम्रञ्च रङ्गं यशदमेव च। सीसं लौहञ्च सप्तैते धातवो गिरि-सम्भवा:॥" इति भावप्रकाश:॥

नामापराध:—साधुनिन्दादिरूप-दुरदृष्टजनक-व्यापारविशेष: यथा—(१) सतां निन्दा। (२) ईश्वरे भेद-दर्शनम्। (३) गुरोरवज्ञा। (४) शास्त्र-निन्दनम्। (५) तीर्थ-चैत्यादि-निन्दनम्।

(६) अवतार-निन्दनम् । (७) शठता । (८) पर-निन्दा । (९) धर्म-त्यागः । (१०) कर्तव्ये प्रमादः । (११) अश्रद्धा । (१२) दर्पः…॥

नित्य-कलेवरः—"कृष्ण-शरीरस्य नित्यत्वम्" इति टीका-परिशिष्टं द्रष्टव्यम् ।

निद्रा—सुप्तिः ॥ यथाकालसेवितनिद्रागुणाः—धातु-साम्यत्वम् । अतन्द्रितत्वम् । पुष्टि-वर्ण-बलोत्साहाग्निदीप्ति-कारित्वञ्च ॥ रात्रौ जागरणं रूक्षम् ॥ दिवास्वप्नगुणाः—स्निग्धत्वम् । तृट्-शूल-हिक्का-जीर्णातिसारिणां हितत्वम् । नानारोग-कारित्वञ्च ॥ दिवानिद्रा कामजा कामदा च ॥ उपविश्य निद्रावशात् दोलायमानस्य गुणाः—अरूक्षत्वम् । अनभिष्यन्दित्वञ्च ॥ निद्रा-स्वात्मीकृतानां दिवा-रात्रौ च स्वपतां जाग्रतां वा दोषो न भवति । इति राज-वल्लभः ॥

पञ्चभूतानि—आकाशस्य गुणाः—(१) शब्दः, (२) श्रवणेन्द्रियम्, (३) छिद्राणि, (४) विविक्तता ॥ वायोर्गुणाः—(१) स्पर्शः, (२) त्वगिन्द्रियम्, (३) लघुता, (४) शरीर-स्पन्दनम्, (५) शारीरिक-चेष्टाः ॥ तेजोगुणाः—(१) रूपम् (लावण्यम्), (२) नेत्रेन्द्रियम्, (३) आहार्य-पाकः, (४) उष्णता, (५) आशुकारिता, (६) वर्णः (गौरादि), (७) दीप्तिः, (८) क्रोधः, (९) शौर्यम् ॥ वारि-गुणाः—(१) रसः, (२) रसनेन्द्रियम्, (३) शीतलत्वम, (४) स्निग्धत्वम्, (५) गुरुत्वम्, (६) द्रवत्वम्, (७) शुक्रम् ॥ पृथ्वी-गुणाः—(१) गन्धः, (२) घ्राणेन्द्रियम्, (३) काठिन्यम्, (४) गौरवम् ॥

पदार्थः—पदानां घट-पटादीनाम् अर्थोऽभिधेयः । "द्रव्यं गुण स्तथा कर्म सामान्यं सविशेषकम् । समवाय स्तथाऽभावाः पदार्थाः सप्त कीर्तिताः ॥" इति भाषा-परिच्छेदः ॥ एते पदार्था वैशेषिक-प्रसिद्धाः ॥ गौतमोक्त-षोडशपदार्थाः—(१) प्रमाणम्, (२) प्रमेयम्, (३) संशयः, (४) प्रयोजनम्, (५) दृष्टान्तः, (६) सिद्धान्तः, (७) अवयवः, (८) तर्कः, (९) निर्णयः, (१०) वादः, (११) जल्पः, (१२) वितण्डा, (१३) हेत्वाभासः, (१४) छलम्, (१५) जातिः, (१६) निग्रह-स्थानम् ॥

प्रतिमा—"शैली दारुमयी लौही लेप्या लेख्या च सैकता । मनोमयी मणिमयी प्रतिमाष्टविधा मता ॥

प्रपञ्चः—दृश्यत्वं, जडत्वं, परिच्छिन्नत्वं, चिद्-भिन्नत्वञ्च प्रपञ्च-सामान्य-लक्षणम् । बाह्य-प्रपञ्च आन्तर-प्रपञ्च इति प्रपञ्चद्वयम् ॥

प्रलयः—प्रलीयते क्षीयते जगदस्मिन् सः । स चतुर्धा । (१) नित्यः [सुषुप्तिः] । (२) नैमित्तिकः [ब्रह्मणः दिवावसाने जगतो विलयः] । (३) प्राकृतः [ ब्रह्मणः सार्धं सृष्टे र्नाशः ] । (४) आत्यन्तिकः [ "ज्ञानादात्यन्तिकः प्रोक्तो योगिनः परमात्मनि । प्रलयः प्रतिसर्गोऽयं कालचिन्तापरै र्द्विजैः ॥ आत्यन्तिकश्च कथितः प्रलयो लयसाधनः ॥" ]

बलम्—कर्म-सम्पादन-सामर्थ्यम् । "रसादि-शुक्र-पर्यन्त पुष्टधातुनिमित्तकम् । चेष्टासु पाटवं यत्तु बलं तदभिधीयते ॥" बल-क्षयस्य निदानं यथा । अभिघाताद् भयात् क्रोधा च्चिन्तया

च परिश्रमात्। धातूनां संचयात् शोकाद् बलं संक्षीयते नृणाम्॥ बल-क्षयस्य लक्षणं यथा। गौरवं स्तब्धता गात्रे मुख-म्लानि र्विवर्णता। तन्द्रा निद्रा वातः शोथो बल-व्यापत्तिलक्षणम्॥ बल-वृद्धि-निदानं यथा। दोष-साम्यकरं यत्तु वह्नि-साम्य-करञ्च यत्। धातुपुष्टिकरं द्रव्यं बलन्तदभिवर्धयेत्॥ बलाबल-लक्षणं यथा। कृशोऽपि बलबान् कश्चित् स्थूलोऽप्यल्प-बलो यतः। तस्माच्चेष्टा-पटुत्वेन बलवन्तं विदु-र्बुधाः॥ पारिभाषिक-बलानि यथा। विद्याभिजत-मित्राणि वृद्धि-सत्व-धनानि च। तपः-सहाय वीर्याणि दैवञ्च दशमं बलम्॥ इति महाभारते॥

बुद्धिः—"With thy study, reason calm,

Thoughtfulness and *pranayam*,

Concentration's surest balm

Train thy *buddhi*, Nectar's Son !"

*Yaga and Perfection.* 1. 319.

भक्तिः—"देवतायाञ्च मन्त्रे च तथा मन्त्रप्रदे गुरौ। भक्ति-रष्टविधा यस्य तस्य कृष्णः प्रसीदति॥" "तद्-भक्त-जन-वात्सल्यं पूजायाश्चानुमोदनम्। स्वयमभ्यर्चनं भक्त्या तदर्थे दम्भ-वर्जनम्॥ तत्कथा-श्रवणे राग स्तदर्थे चाङ्ग-विक्रिया। तदनुस्मरणं नित्यं यस्तन्नाम्नोपजीवति॥ भक्तिरष्टविधा ह्येषा यस्मिन् म्लेच्छेऽपि वर्तते। स मुनिः सत्यवादी च कीर्तिमान् स भवेन्नरः॥" "श्रवणं कीर्तनं विष्णोः स्मरणं पाद-सेवनम्। अर्चनं वन्दनं दास्यं

सख्यमात्म-निवेदनम्॥ इति पुंसार्पिता विष्णौ भक्तिश्चेन्नव-लक्षणा:॥" इति भागवते॥ ॐ सा कस्मै परम-प्रेमरूपा। ॐ अमृत-स्वरूपा च॥" नाः सूः॥ "सा परानुरक्तिरीश्वरे।" शाः सूः॥ "ॐ सा न कामायमाना, निरोध-रूपत्वात्॥" "ॐ पूजादिष्वनुराग इति पाराशर्यः॥" "ॐ कथादिष्विति गर्गः।" "ॐ नारदस्तु तदर्पिताखिलाचारता तद्-विस्मरणे परम-व्याकुलता॥" "ॐ यथा व्रज-गोपिकानाम्॥" नाः सूः॥ "निशम्य कर्माणि गुणानतुल्यान् वीर्याणि लीलातनुभिः कृतानि। यदाति-हर्षोत्पुलकाश्रुगद्गदं प्रोत्कण्ठ उद्गायति नृत्यते च॥ यदा ग्रहग्रस्त इव क्वचिद् हसत्याक्रन्दति ध्यायति वन्दते जनम्। मुहुः श्वसन् वक्ति हरे जगत्पते नारायणेत्यात्ममतिर्गतत्रपः॥ तदा पुमान् मुक्तसमस्तबन्धनस्तद्भावभावानुकृताशयाकृतिः। निर्दग्ध-बीजानुशयो महीयसा भक्ति-प्रयोगेण समेत्यधोक्षजम्॥" इति भागवते॥ "ॐ गुणमाहात्म्यासक्ति-रूपासक्ति-पूजासक्ति-स्मरणा-सक्ति-दास्यासक्ति--सख्यासक्ति-कान्तासक्ति--वात्सल्यासक्ति-आत्म-निवेदनासक्ति-तन्मयतासक्ति-परमविरहासक्ति--रूपा-एकधाप्येका-दशधा भवति॥ नाः सूः॥

भोगः—सुखम्। स्वर्गादि-भृतिः। हस्त्यश्वादि कर्मकरणाच्च भृतिः॥ भोगदेहः=स्वर्ग-नरक-भोगार्थं सूक्ष्म-शरीरम्। "कृते सपिण्डीकरणे नरः संवत्सरात् परम्। प्रेत-देहं परित्यज्य भोग-देहं प्रपद्यते॥" भोगस्य—(१) भोक्ता=जीवः। (२) भोग्यः=

विषयः । (३) साधनम् = इन्द्रियम् । (४) आयतनं = शरीरम् ॥ "कर्ता च देही भोक्ता च आत्मा भोजयिता सदा । भोगो विभव-भेदश्च निष्कृति र्मुक्तिरेव च ॥" इति ब्रः वैः ॥

मिथ्या—"अधर्म-पत्नी मिथ्या सा सर्व-धूर्तैश्च पूजिता । कपटेन समं भ्राता भ्रमत्येव गृहे गृहे ॥" ब्रः वैः ॥

यज्ञ-सूत्रम्—"यज्ञार्थं धार्यते सूत्रं यज्ञं ब्रह्मण्य मिश्यते ।" सत्ये स्वर्णमयं सूत्रं त्रेतायां राजतं तथा । द्वापरे ताम्रजं प्रोक्तं कलौ कार्पास-सम्भवम् ॥" "यज्ञ-सूत्रं परिचरेद् ब्रह्मलिङ्ग-क्रियात्मकम् ॥" 'ऊर्ध्वन्तु त्रिवृतं सूत्रं सधवा-निर्मितं शनैः । तन्तुत्रयमधोवृत्तं यज्ञसूत्रं विदुर्बुधाः ॥" त्रिगुणं तद् ग्रन्थियुक्तं वेद-प्रवर-सम्मितम् ॥" "वामस्कन्धेन विधृतं यज्ञ-सूत्रं बलप्रदम् ।" इति कल्कि-पुराणे ॥ "हृदिस्था देवताः ( इन्द्रियाधिष्ठातारः ) सर्वा, हृदि प्राणाः ( वागादयः ) प्रतिष्ठिताः । हृदि प्राणाश्च ज्योतिश्च ( स्वयंप्रकाशं परं-ब्रह्म ) त्रिवृत् सूत्रं ( त्रिवृत्—सत्त्वरजस्तमसां परस्पर-संकरेण नवगुण-मव्यक्तं त्रिवृत् सर्वकर्माङ्गं वाह्यार्थे नवतन्तुकञ्च । सूत्रम्—प्रकृति स्तन्तवश्च तद् विद् जानन्ति बहिः-सूत्र-त्यागिनः परम-हंसा ॥ ) च तद् विदुरिति ॥" हृदि चैतन्ये तिष्ठति । "यज्ञो-पवीतं परमं पवित्रं प्रजापते र्यत् सहजं पुरस्तात् । आयुष्य-मग्र्यं ( श्रेष्ठम् ) प्रतिमुञ्च ( अविद्यादित्यो विमोचं कुरु ) शुभ्रं यज्ञोपवीतं बल (बलप्रदम्) मस्तु तेजः (तेजः-प्रदम्) ॥" "सशिखं

वपनं कृत्वा बहिः-सूत्रं त्यजेद् बुधः। यदक्षरं परं ब्रह्म तत् सूत्रमिति धारयेत् ॥" "सूचनात् सूत्रमित्याहुः सूत्रं नाम परं पदम्। तत् सूत्रं विदितं येन स विप्रो वेद-पारगः ॥" "येन सर्वमिदं प्रोतं सूत्रे मणिगणा इव। तत्सूत्रं धारयेद् योगी योगवित् तत्त्वदर्शिवान्।" "बहिःसूत्रं त्यजेद् विद्वान् योगमुत्तम मास्थितः।" "ब्रह्मभाव मिदं सूत्रं धारयेद् यः स चेतनः।" सूत्रमन्तर्गतं येषां ज्ञानयज्ञोपवीतिनाम्। ते वै सूत्रविदो लोके ते च यज्ञोपवीतिनः ॥" इति श्रुतिः ॥

युगम्—"कृतं त्रेता द्वापरञ्च कलिश्चेति चतुर्युगम्।"

योग-विघ्नः—"सशब्देऽग्निजलाभ्यासे जीर्णे गोष्ठे चतुष्पथे। शुष्कपर्णचये नद्यां श्मशाने स-सरीसृपे॥ सभये कूपतीरे वा चैत्य-वल्मीकसञ्चये। देशेष्वेतेषु तत्त्वज्ञो योगाभ्यासं विवर्जयेत्॥ दोषानेताननादृत्य मूढत्वाद् यो युनक्ति वै। विघ्नाय तस्य ये दोषा जायन्ते तान् निबोध मे॥ बाधिर्यं जडता लोपः स्मृते र्मूकत्व मन्धता। ज्वरश्च जायते सद्य स्तद्वदज्ञान-योगिनः ॥"

रागाः—यैस्तु चेतांसि रञ्जयन्ते जगत्त्रितयवर्तिनाम्। ते रागा इति कथ्यन्ते मुनिभि र्भरतादिभिः॥ भरत-मते हनुमन्मते च रागः षड्विधः। यथा। (१) भैरवः, (२) कौशिकः, (३) हिन्दोलः, (४) दीपकः, (५) श्रीरागः, (६) मेघः॥ कलानाथ-सोमेश्वर-मते षड्रागा यथा। (१) श्रीरागः, (२) वसन्तः, (३) पञ्चमः, (४) रवः, (५) मेघः, (६) नट-नारायणः॥ हनुमद्-

भरतयो र्मते प्रत्येकमेषां पञ्चरागिण्यः । सोमेश्वर-कलानाथयो र्मते प्रत्येक मेतेषां षट्-रागिण्यः ॥ एतेषां प्रत्येकम् अष्टौ पुत्राः एकैकपुत्रभार्या च ॥

राशिः—राति फलं राशिः । अहोरात्रमध्ये द्वादश-राशय उदयन्ति । उदयः—पूर्वाचल-संयोगः ॥

लयः—"कूपादिके महागर्ते स्थित्वोपरि निरीक्षणात् । अविकल्पमतेः सम्यक् सद्यश्चित्तलयः स्फुटम् ॥" "निर्वृक्षगिरिभित्त्यादौ देशे दृष्टिं विनिक्षिपेत् । निलीने मानसे भावे वृत्तिक्षीणं प्रजायते ॥" "भावान्तर्मुखो भावन"—लयः ॥ "उपादानकारणे कार्यतिरोधानं"—लयः ॥ अन्यार्थः—मूर्च्छावस्थावत् आलस्येन चित्तवृत्ते र्बाह्यशब्दादिविषय-ग्रहणानादरे सति प्रत्यगात्म-स्वरूपानवभासनात् वृत्तेः स्तब्धीभावलक्षण-निद्रारूपः ।

वर्णः—[वर्ण (स्तुतौ, विस्तारे, चित्रे, विलेपने, नियोगे, वचने)+अ] (१) [स्तुति-साधन-] अकारादि-पञ्चाशद्-वर्णाः । वर्णश्च द्विविधः—(क) ध्वन्यात्मकः, (ख) अक्षरात्मकश्च । [शब्दस्य स्फुटावस्था 'वर्णः', तस्य अस्फुटावस्था 'ध्वनिः' इति च] (अक्षर-नामक-साङ्केतिक-चिह्नः = लिपिः) ॥ तत्र परा—मूलाधारे, पश्यन्ती—स्वाधिष्ठाने, मध्यमा—हृदये, वैखरी—मुखे भवति ॥ (२) ब्राह्मण-क्षत्रिय-वैश्य-शूद्र-रूपेण विस्तृता जातिः ॥ ब्राह्मण-क्षत्रिय-वैश्यानां धर्माः—अध्ययनं, यजनं, दानञ्च । ब्राह्मणस्य जीविका—अध्यापनं, याजनं, सत्-प्रतिग्रहश्च । क्षत्रियस्य

जीविका—प्रजा-रक्षणादिकम् । वैश्यस्य जीविका—कृषिः, गोरक्षा, वाणिज्यं, कुसीदञ्च । शूद्रस्य तु ब्राह्मण-क्षत्रिय-वैश्यानां शुश्रूषा—धर्मो, जीविका च ॥ ईश्वराराधना सर्वेषां वर्णानां साधारणो धर्मः ॥ (३) शुक्लादिः ॥ (४) वाक्यम् । शब्दः ॥

विद्या—ज्ञानम् । शास्त्रम् ॥ सा अष्टादशविधा । (१) शिक्षा, (२) कल्पः, (३) व्याकरणं, (४) निरुक्तं, (५) ज्योतिषं, (६) छन्दः, (७) ऋग्वेदः, (८) यजुर्वेदः, (९) सामवेदः, (१०) अथर्ववेदः, (११) मीमांसा, (१२) न्यायः (१३) धर्मशास्त्रं, (१४) पुराणम्, (१५) आयुर्वेदः, (१६) धनुर्वेदः, (१७) गान्धर्ववेदः, (१८) अर्थशास्त्रम् ॥

बिन्दुः—(विद्+उ) (१) भ्रुवो र्मध्यम् । इति मेदिनी ॥ (२) ज्ञानशीलः । इति शब्द-रत्नावली ॥ (३) अनुस्वारः । (४) ज्ञाता । इत्यमरः ॥ (५) वेदितव्यः । इति शब्द-रत्नावली ॥ (६) "अविभक्त-प्रकाशरूपः" । (७) भ्रू-मध्यादौ प्रदेशे ध्यानाभ्यास-प्रकर्षेण प्रवर्धमानोत्तरोत्तरः तेजोविशेषः ॥

वेदः—ज्ञानम् ॥ श्रुतिः ॥ आम्नायः ॥ "मौन-शरीराव-च्छेदेन भगवद्-वाक्यम् ।" इति न्यायशास्त्रम् ॥ "धर्मब्रह्म-प्रति-पादकम् अपौरुषेयवाक्यम् ।" इति वेदान्त-शास्त्रम् ॥ "ब्रह्म-मुख-निर्गत-धर्मज्ञापक-शास्त्रम् ।" इति पुराणम् ॥ वेदाश्चत्वारो यथा । (१) एकविंशति शाखात्मक-ऋक्, (२) शत-शाखात्मक-यजुः, (३) सहस्रशाखामय-साम, (४) नवशाखामयाथर्व । इति पुराणम् ॥

अत्र ज्ञातव्यम्—

"ऋच स्तपति पूर्वाह्णे
मध्याह्ने च यजूंषि वै।
सामानि चापराह्णे तु
तपन्ति मुनि-सत्तमः ॥"

आन्तिकं पूर्वाह्णे,
पौष्टिकं मध्याह्ने,
आभिचारिकं अपराह्णे
तथ्यम् ॥



| नाम | व्यास-शिष्याः वेद-वक्तारः | उपवेदः | ब्राह्मणः |
|---|---|---|---|
| (१) ऋग्वेदः | पैलः | आयुर्वेदः | ऐतरेय ब्राह्मणः |
| (२) यजुर्वेदः | वैशम्पायनः | धनुर्वेदः | शुक्लयजुर्वेदस्य शतपथ ब्राह्मणः |
| | | | कृष्णयजुर्वेदस्य तैत्तिरीय ब्राह्मणः |
| (३) सामवेदः | जैमिनिः | गन्धर्ववेदः | कौषितकी ब्राह्मणः |
| (४) अथर्ववेदः | सुमन्तुः | अर्थवेदः | गोपथ ब्राह्मणः |

"तद्-वचनाद् (= तेन ईश्वरेण प्रणयनात्) आम्नायस्य (वेदस्य) प्रामाण्यम्॥" इति कणाद-सूत्रम्॥ [वेद-विभाग-कर्ता व्यासो वेदव्यास इति कथ्यते।]

व्यसनानि—[ वि+अस्+अनट् ] व्यस्यति श्रेयोमार्गात् व्यसनं कर्तरि अनट्। भ्रंशे तु भावे। इति भरतः॥ कामज-व्यसनानि यथा। "मृगयाक्षो दिवा-स्वप्नः परीवादः स्त्रियो मदः। तौर्यत्रिकं वृथाट्या च कामजो दशको गणः॥" क्रोधज-व्यसनानि यथा। "पैशुन्यं साहसं द्रोह ईर्ष्यासूयार्थ-दूषणम्। वाग्-दण्डजञ्च पारुष्यं क्रोधजोऽपि गणोऽष्टकः॥" (अर्थ-दूषणम्= प्रतारणा॥ दण्ड-पारुष्यम्= ताडनादि॥)

व्याधिः—[व्यध् (पीडने, वधे)] रोगः ॥ "रोगस्तु दोष-वैषम्यं दोषसाम्य मरोगता ॥" "कर्मजाः कथिताः केचिद् दोषजाः सन्ति चापरे । कर्मदोषोद्भवश्चान्ये व्याधय स्त्रिविधाः स्मृताः ॥" ये व्याधयः प्राक्तन-दुष्कर्म-जनिता भोगनाश्याः प्रायश्चित्त-नाश्या वा ते एव कर्मजा व्याधयः । "यथा-शास्त्रन्तु निर्णीता यथा-व्याधि चिकित्सिताः । न शमं यान्ति ये रोगा स्ते ज्ञेयाः कर्मजा बुधैः ॥" दोषजाः—मिथ्याहारविहार-प्रकुपित-वात-पित्त-कफजाः ॥ स्वल्पदोषा गरीयांस स्ते ज्ञेयाः कर्म-दोषजाः ॥ साध्या याप्या असाध्याश्च व्याधय स्त्रिविधाः स्मृताः ॥ जनकः सर्व-रोगाणां दुर्वारो दारुणो ज्वरः । मन्दाग्नि स्तस्य जनको मन्दाग्ने र्जनका स्त्रयः ॥ पित्त-श्लेष्म-समीराश्च प्राणिनां दुःखदायकाः ॥ (१) क्षुधि आहाराभावः, कट्वम्लोष्णतीक्ष्णद्रव्यभक्षणं, तालं बिल्वफलं वा भुक्त्वा तत्क्षणमेव जलपानं, शरदि तप्तोदकपानं, भाद्रे तिक्त-सेवनं, शरत्-कालः, क्रोधः, ग्रीष्माधिक्यम्—इत्यादिना मणिपूर-चक्रे पित्तं जायते ॥ (२) भोजनानन्तरं स्नानं, तृषा विना जलपानं, तिल तैलं, स्निग्ध तैलं, पर्युषितान्नं, तक्रं, पक्व-रम्भाफलं, दधि, क्वायाम्बु, शर्करायुक्तं पानीयं, सुस्निग्ध स्थल सेवनं, नारिकेलोदकं, पर्युषितं जलं, वर्षासु खात-स्नानं,मूलकं, वसन्त-कालः,मधुर-स्निग्ध-शीतादयः—इत्यादिना ब्रह्म-रन्ध्रे श्लेष्मा जायते ॥ (३) भोजनानन्तरं सद्यो धावन-गमनादिकं, वह्नि-तापः, अति-भ्रमणम्, अति-मैथुनं, मनः-सन्तापः, अनाहारः, रूक्षता, कलहं, कटुवाक्यं, भयं, शोकः,

वर्षा, शीत-प्रकोपः—इत्यादिना आज्ञाचक्रे वायु जायते॥ (१) दधितक्र-विवर्जितं सर्वगव्यं, शर्करोदकं, पक्वं बिल्वफलम्, आर्द्रकं, मुद्ग-युषम्—इत्यादीनि पित्तक्षयकराणि॥ (२) वह्नि-स्वेदं, पक्वतैलं, भ्रमणं, शुष्कभक्षणं, शुष्क-पक्व-हरीतकी, अपक्वं रम्भाफलम्, अनाहारम्, अपानकं, सघृतं शुष्कशर्करं, मरीचं, पिप्पली, शुष्कमार्द्रकं, जीरकं, मधु—इत्यादीनि श्लेष्महराणि॥ (३) पक्व-रम्भाफलं, शर्करोदकं, नारिकेलोदकं, सुमिष्टं सद्यस्तक्रं, शीतलोदकं, तिलतैलं,शीतलोष्णोदक-स्नानं, सुस्निग्ध-चन्दन-द्रवम्, आमलकीद्रवं, सुस्निग्धव्यजनानिलः—इत्यादीनि वातप्रशमकानि॥ सर्वेषामेव रोगाणां निदानं कुपिता मलाः। तत्-प्रकोपस्य तु प्रोक्तं विविधाहित-सेवनम्॥" "सुवर्णदानं सर्वेषां रोगाणां नाश-कारणम्॥" इति मलमासतत्त्वम्॥

शिष्टाचारः—"दानं सत्यं तपोऽलोभो विद्येज्या पूजनं दमः। अष्टौ तानि चरित्राणि शिष्टाचारस्य लक्षणम्॥" इति मात्स्ये॥

शौचम्—"अभक्ष्य-परिहारस्तु संसर्गश्चाप्यनिन्दितैः। स्वधर्मे च व्यवस्थानं शौचमेतत् प्रकीर्तितम्॥" "यस्य सत्यञ्च शौचञ्च तस्य स्वर्गो न दुर्लभः।"

श्राद्धम्—तत् तु द्वादश-विधम्। यथा। नित्यं नैमित्तिकं काम्यं वृद्धिश्राद्धं सपिण्डनम्। पार्वणञ्चेति विज्ञेयं गोष्ठ्यां (गोष्ठ्यां यत् क्रियते श्राद्धं गोष्ठीश्राद्धं तदुच्यते।) शुद्ध्यर्थ मष्टमम्॥ कर्माङ्गं नवमं प्रोक्तं दैविकं दशमं स्मृतम्। यात्रार्थैकादशं

प्रोक्तं पुष्टयर्थं द्वादशं स्मृतम् ॥ एतद् भविष्यपुराणे विवृतम् ॥ तस्य पञ्चविधत्वं यथा। नित्यं नैमित्तिकं काम्यं वृद्धिश्राद्धं तथैव च। पार्वनञ्चेति मनुना श्राद्धं पञ्चविधं स्मृतम् ॥ मत्स्य पुराणे त्रैविध्यमुक्तम्। यथा। नित्यं नैमित्तिकं काम्यं त्रिविधं श्राद्ध मुच्यते ॥ आदौ आत्रेयमुनिपुत्रेण निमिना तत्पुत्रस्य श्राद्धं कृतम्।

सन्न्यासः—चतुर्थाश्रमः। कुटीचक-बहूदक-हंस-परमहंस श्चेति सन्न्यास-चतुष्टयम् ॥ विविदिषा-सन्न्यासो विद्वत्-सन्न्यास श्चेति परमहंस-सन्न्यास-द्वयम् ॥

स्त्री—"आषोडशं भवेद् बाला तरुणी त्रिंशता मता। पञ्च-पञ्चाशतं यावत् प्रौढा वृद्धा ततः परम् ॥" "रक्षेत् कन्यां पिता बाल्ये यौवने पतिरेव ताम्। वार्धके रक्षते पुत्रो ह्यनाथां ज्ञातय स्तथा ॥" "सा शुद्धा प्रातरुत्थाय नमस्कृत्य पतिं सुरम्। प्राङ्गणे मण्डलं दद्यात् गोमयेन जलेन च ॥ गृहकृत्यञ्च कृत्वा च स्नात्वागत्य गृहं सती। सुरं विप्रं पतिं नत्वा पूजयेद् गृह-देवताम् ॥ गृहकृत्यं सुनिर्वर्त्य भोजयित्वा पतिं सती। अतिथिं पूजयित्वा च स्वयं भुङ्क्ते सुखं सती ॥" "पतिसेवा व्रतं स्त्रीणां पतिसेवा परं तपः। पतिसेवा परो धर्मः पतिसेवा सुरार्चनम् ॥ सर्वदेवमयः स्वामी सर्वदेवमयः शुचिः। सर्वपुण्यस्वरूपश्च पति-रूपी जनार्दनः ॥ यया प्रियः पूजितश्च श्रीकृष्णः पूजित स्तया ॥ या सती भर्तुरुच्छिष्टं भुङ्क्ते पादोदकं सदा। तस्या दर्श

मुपस्पर्शं नित्यं वाञ्छन्ति देवताः ॥ परिहासेन कोपेन भ्रमेणा-वज्ञया सुते । कटूक्तिं स्वामिनः साक्षात् परोक्षा न करिष्यसि ॥ यस्या नास्ति प्रियप्रेम तस्या जन्म निरर्थकम् । तत् किं पुत्रे धने रूपे सम्पत्तौ यौवनेऽथवा ॥ व्रतस्नानशनं दानं सत्यं पुण्यं तपश्चिरम् । पतिभक्तिविहीनाया भस्मीभूतं निरर्थकम् ॥ कुत्सितं पतितं मूढं दरिद्रं रोगिणं जडम् । कुलजा विष्णुतुल्यञ्च कान्तं पश्यति सन्ततम् ॥ पुत्रो वापि पिता वापि बान्धवो वा सहोदरः । योषितां कुलजातानां न कश्चित् स्वामिनः समः ॥" स्त्रीभिः श्वश्रू-श्वशुरयोः पादवन्दनं यथोपयुक्तं सेवनञ्च नित्यं कार्यम्, परिजनाः सरलेन तथा प्रेमपूर्णेन चित्तेन सदा सेवितव्याश्च । चञ्चला स्त्री कुल-नाशिका भवति । "चक्षुर्देहः स्वभावश्च यस्या नित्यं सुसंवृतम् । शौचाचार-समायुक्ता सापि मृत्युं न पश्यति ॥" "भर्तृभ्रातृ-पितृज्ञातिश्वश्रूश्वशुरदेवरैः । बन्धुभिश्च स्त्रियः पूज्या भूषणाच्छादनाशनैः ॥" *** को धर्मः किं यशस्तेषां का प्रतिष्ठा च किं तपः । किं बुद्धि-विद्या-ज्ञानञ्च परस्त्रीषु च यन्मनः ॥" "त्याज्यं धर्मान्वितैर्नित्यं परदारोपसेवनम् ॥" "किं तज्जपेन तपसा मौनेन च व्रतेन च । सुरार्चनेन तीर्थेन स्त्रीभिर्यस्य मनो हृतम् ॥

स्वरः—स्वरन्ति शब्दायन्ते स्वराः । इति भरतः ॥ (१) उदात्तश्चानुदात्तश्च स्वरितश्च त्रयः स्वराः ॥" उच्चैरुच्चारणादुदात्तः, नीचैरनुदात्तः, समाहारः स्वरितः ॥ (२) तन्त्री-कण्ठोत्थित-सप्त-

ध्वनिः । [ स स्वरो यः श्रुतिस्थाने स्वनन् हृदय-रञ्जकः । ] यथा । षड्ज-ऋषभ-गान्धारा मध्यमः पञ्चम स्तथा । धैवतश्च निषादश्च स्वराः सप्त प्रकीर्तिताः ॥ मयुर-वृषभ-च्छागो-क्रौञ्च-कोकिल-वाजिनः । मातङ्गाश्च क्रमेणाहुः स्वरानेतान् सुदुर्गमान् ॥ (२) अकारादि-षोडशवर्णाः । ते च ह्रस्व-दीर्घ-प्लुता भवन्ति । यथा । "एकमात्रो भवेत् ह्रस्वो, द्विमात्रो दीर्घ उच्यते । त्रिमातस्तु प्लुतो ज्ञेयो, व्यञ्जनं चार्ध-मात्रकम् ॥" "अर्धमात्रं द्रुतं ज्ञेयं एकमात्रं लघु स्मृतम् । द्विमात्रं तु गुरु ज्ञेयं त्रिमात्रं तु प्लुतं मतम् ॥"

हंसः—पक्षि-विशेषः ॥ परमात्मा ॥ प्राणवायुः ॥ अजपा-मन्त्रः ॥ [ "हंस-हंसेति यन्मन्त्रं जीवो जपति सर्वदा । शतैः षड्भिश्च युक्तानि सहस्राण्येक विंशतिः ॥ अजपा नाम गायत्री योगिनां मोक्ष-साधनम् ॥" "विना जपेन देवेशि जपो भवति मन्त्रिणः । अजपेयं ततः प्रोक्ता भवपाश-निकृन्तनी ॥" ]

---

# शब्दाद्यनुक्रमणिका।

[ संख्या प्रथमा 'अङ्क'-सूचिका, द्वितीया उल्लास-सूचिका, तृतीया श्लोकाङ्क-सूचिका ॥ टी: प: =टीका-परिशिष्टम् ॥ ]

इति शिवम् ।

---

## श्रीमद् भगवत्पादैः प्रणीता ग्रन्थाः—

| | | | मूल्यम् |
|---|---|---|---|
| १। | वेद-वाणी ( बङ्गभाषायाम् ) | | |
| | | प्रथम प्रचार, द्वितीया आवृत्ति | १।✓० |
| २। | ” | द्वितीय प्रचार | १॥✓० |
| ३। | ” | तृतीय प्रचार | १) |
| ४। | Yoga and Perfection ( in verse | | ३) |
| ५। | पूर्ण-ज्योतिः ( सटीकम्, देवनागराक्षरे ) | | २॥० |
| ६। | पूर्ण-ज्योतिः ( बङ्गानुवादसमेतम्, बङ्गाक्षरे ) | | २) |

प्राप्तिस्थानम्—

१। डाक्तार रामानुज चक्रवर्त्ती, १४, फर्डाइस लेन, कलिकाता।

२। श्रीमतिलाल सेन, वि, ए, चक्-बाजार, बरिशाल।

३। श्रीललितमोहन बन्द्योपाध्याय, वि, एल, पटुयाखाली।

४। गुरुदास चट्टोपाध्याय एण्ड सन्स्
२०३।१ कर्णवालिस ष्ट्रीट्, कलिकाता।

५। डि, एम्, लाइब्रेरी, ६१ कर्णवालिस ष्ट्रीट् कलिकाता।

६। चक्रवर्त्ती चाटार्ज्जी एण्ड कों, १५ कलेज स्कोयार,
कलिकाता।

---

